मात्रविषयतावत्। श्रवणमात्रविषयत्वं श्रव्यत्वमित्यर्थः, तदाह भोजराजः। श्रव्यं तत्काव्यमाहुर्यन्नेक्ष्यते नाभिधीयते। श्रोत्रयोरेव सुखदं भवेत्तदपि षड्विधमिति। एतेन नाटकादौ दर्शनविषयत्वसामानाधिकरण्येन श्रवणविषयत्वान्न श्रव्यत्वप्रसक्तिः। केचित्तु श्रव्यमेवेत्येवकारेण गेयत्वादिना परकृतानां श्रव्यभेदानां निरासः कृतः तेषामस्मन्मते श्रव्यएवान्तर्भावादिति वदन्ति। इति इत्थं सा प्रसिद्धा प्राचीनैरङ्गीकृतेत्यर्थः, एषापि, अपिः पूर्व्वभेदसमुच्चये, द्वयी गतिः पन्था द्विविधोभेद इत्यर्थः ॥ ३८ ॥

अस्त्यनेकोगिरां मार्गः सूक्ष्मभेदः परस्परम्।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥ ४० ॥

इत्थं सप्रभेदं काव्यशरीरं निरूप्य अलङ्काराश्च दर्शिता इत्यनेन निरूपयितव्येषु गुणालङ्कारेषु प्रथमं तावद्गुणान् निरूपयितुं वाचां विचित्रमार्गाणामित्यनेनोद्दिष्टां रीतिमाह। अस्त्यनेक इति। मार्गः पदविन्यासप्रणाली रीतिरित्यर्थः। अनेक इति। गौडी वैदर्भी पाञ्चाली चेति त्रिविध इति वामनः। लाटीसहितास्ता इति चतुर्विध इति विश्वनाथप्रभृतयः। षड्विध इति भोजराजप्रभृतयः। यथा "वैदर्भीचाथ पाञ्चाली गौडीयावन्तिका तथा। लाटीया मागधी चेति षोढा रीतिर्निगद्यत" इति। अशीति प्रायां ग्रन्थेषु निरूपित इति शेषः। अस्ति चेत् भवतापि निरूप्यतामित्य-

त्राह। स्फुटेति। परस्परं स्फुटः प्रणिधानगम्यः अत्यन्त इत्यर्थः भेदो यस्य सः। तथाहि पाञ्चाली, वैदर्भीगौड्योरन्तरालवर्त्तिनीति तदुभयरूपैव, एवं लाटी वैदर्भीपाञ्चाल्योरिति तद्रूपैव, एवमन्या अपि बोध्याः। अतश्च किञ्चिद्भेदवतां प्रदर्शनेन ग्रन्थपल्लवनमप्रयोजनमिति तत्सर्वं ग्रन्थान्तरतोवेदितव्यमिति भावः। इत्थं पाञ्चाल्यादिष्वसम्मतिं प्रदर्श्य वैदर्भीगौड्योरेव निरूपणं प्रतिजानीते। तत्रेति। तत्र तेषु मार्गेषु मध्ये। वर्ण्येते इत्यत्र हेतुः प्रस्फुटान्तराविति, सुकुमारविकटात्मकत्वेन अत्यन्तविसदृशावित्यर्थः, ईदृशानामेव पृथङ्निरूपणमुचितमिति भावः॥ ४०॥

श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥ ४१॥
इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः।
एषां विपर्य्ययः प्रायो दृश्यते गौडवर्त्मनि॥ ४२॥

प्रतिज्ञाते वैदर्भीगौड्यौ क्रमेणाह। श्लेष इति। गुणाः शब्दार्थयोरुत्कर्षाधायकत्वाद्गुणशब्दवाच्याः श्लेषादिसमाध्यन्ता दश वैदर्भमार्गस्य वैदर्भरीतिमत्काव्यबन्धस्य प्राणाः प्राणवज्जीवकाः तान् विना तत्र निष्प्राणदेहे देहिव्यवहारस्येव वैदर्भजनानां काव्यव्यवहारस्यानङ्गीकारात्। इत्यञ्च श्लेषादिगुणवती पदरचना वैदर्भीति लक्षणमायातं भवति, अत्र च स्वल्पप्राणाक्षरवत्त्वादिसामानाधिकरण्येन गुणानां लक्षणत्वम-

बगन्तव्यं तादृशसामानाधिकरण्यस्यापि तत्रावश्यं निवेश्यत्वा-
द्यदाह रुद्रटः । "असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया" इति । नव्या-
स्त्वात्मनः शौर्यादीनामिव रसस्य धर्माणां माधुर्य्यौजःप्रसा-
दानामेव गुणत्वं न तु शब्दार्थमात्रवृत्तीनां श्लेषादीनां
दशानामित्याहुस्तत्प्राचीनसम्प्रदायविरुद्धमिति सूचयन्नाह,
स्मृता इति । प्राचीनैराम्नाता अवश्यं मन्तव्या इत्यर्थः । गौडी-
माह । एषामिति । गौडवर्त्मनि गौडरीतौ, एषां श्लेषादि-
दशगुणानां विपर्य्ययो वैपरीत्यं, स च क्वचिदत्यन्ताभावरूपः
क्वचिदंशेन सम्बन्धरूपश्च, प्राय इत्यनेन च कुत्रचिद्वैदर्भीगौड्योः
साम्यमपि वर्त्तत इति सूचितं । साम्यञ्च गुणविरुद्धासम्बन्धात्
किञ्चिद्गुणसम्बन्धाच्च, अतएवोक्तमसमस्तगुणा गौडीति । इत्थञ्च
वैदर्भीविरुद्धधर्मवती पदरचना गौडीति लक्षणमुक्तं भवति, ता-
दृशविरुद्धधर्मवत्त्वञ्च दीर्घसमासादिना बन्धवैकट्यरूपं । यदाह
पुरुषोत्तमः बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्राऽस्तोभवाक्या चेति ॥ ४१ ॥ ४२ ॥

श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् ।
शिथिलं, मालतीमाला लोलालिकलिला यथा ॥ ४३ ॥

क्रमेण श्लेषादिगुणानां स्वरूपमाह । श्लिष्टेति । अल्पः
प्राण उच्चारणप्रयत्नो येषां तादृशान्यक्षराण्युत्तराणि प्रधा-
नानि, सुबहूनीत्यर्थः, यत्र तत्, अल्पप्राणाश्च स्वरा वर्गीया-

युग्मवर्णा यरलवाश्च। अतएव शिथिलम्। अत्रापिकारोऽध्याहर्त्तव्यः। शिथिलमपि अनुद्धतमपीत्यर्थः अस्पृष्टमप्रकाशितं शैथिल्यं यस्य तत्, विन्यासविशेषेण शिथिलत्वेनाप्रतीयमानमित्यर्थः तादृशं वाक्यं श्लिष्टं श्लेषाख्यगुणवत्। इत्यश्च अल्पप्राणवर्णघटितत्वेन शिथिलस्यापि विन्यासविशेषवशेनाशिथिलत्वेन प्रतिभासनं श्लेष इति लक्षणं ज्ञातव्यम्। लक्ष्यं दर्शयति। मालतीति। लोलैरितस्ततः पतद्भिरलिभिः कलिला व्याप्ता। अत्र मकारादयोवर्णा अल्पप्राणाः, तद्घटितमपि वाक्यं सानुप्रासविन्याससहित्वा किञ्चिद्गाढमिव प्रतिभाति। अन्येतु वर्णमात्रघटितानामपि बहूनां पदानां गाढताहेतुदीर्घसमासरहितत्वेऽपि विन्यासविशेषेणैकपदवद्भासनरूपमशैथिल्यं श्लेषः तादृशश्लेषस्य गौड्यामपि सम्भवतीत्याहुः। तस्योदाहरणं यथा। "उन्मज्जज्जलकुञ्जरेन्द्रभसास्फालानुबन्धोद्धतः सर्व्वाः पर्व्वतकन्दरोदरभुवः कुर्व्वन् प्रतिध्वानिनीः। उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा प्रायः प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुद्गच्छति" इति। अत्र बन्धवैकव्याद्गौड्येव। वस्तुतस्तु अल्पप्राणाक्षरघटितस्यापि बन्धस्यान्तरान्तरा महाप्राणाक्षरविन्यासेन किञ्चिद्गाढत्वं श्लेष इति क्रमदीश्वरोक्तमादरणीयं यथा, अल्पप्राणेषु वर्णेषु विन्यासोऽप्यन्तरान्तरा। महाप्राणस्य च श्लेषोयथायं भ्रमरध्वनिरिति। अन्यथा श्लेषस्यानुप्रासादिघटितत्वे तद्घटितवक्ष्यमाण माधुर्य्याद्यभिन्नत्वापत्तिरिति ध्येयम्॥ ४१॥

अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात् ।
वैदर्भैर्मालतीदाम लङ्घितं भ्रमरैरिति ॥ ४४ ॥

उक्तलक्षणः श्लेषः क्वचिद्गौडैरप्याद्रियत इत्याह । अनुप्रासेति । अनुप्रासो वर्णावृत्तिरूपः शब्दालङ्कारविशेषः तस्य धिया ज्ञानेन, बन्धगौरवात् रचनाया गाढत्वज्ञानात् । गौडैर्गौडदेशीयकविभिः, तत् तथाविधं मालतीमाला लोलालिकलिलेत्यादि श्लेषोदाहरणम्, इष्टमिति गौडानामनुप्रासप्रियत्वादिति भावः । एवञ्च पुरुषोत्तमादिकृतगौडीलक्षणे सुमहाप्राणाक्षरेति विशेषणं प्रायिकाभिप्रायेणेति ज्ञेयम् । नन्वेवं वैदर्भीगौड्योरैक्यमापतितमित्यत्राह । वैदर्भैरिति । इतीति इत्यपीत्यर्थः अनुप्रासशून्यमपि मालतीदामेत्यादिवाक्यं विदर्भदेशीयैः श्लिष्टत्वेनेष्टमित्यर्थः, कुत्रचिदनुप्राससद्भावेऽपि सर्व्वत्र तदभावादनुप्रासविरहिण्यपि वैदर्भ्यां श्लेषाङ्गीकाराच्च वैदर्भीगौड्योः समानविषयत्वमिति भावः । अस्ति चात्रास्पृष्टशैथिल्यत्वं सहृदयानुभवसिद्धम् । अत्र मकाराणां चयाणां लकारयोस्तकारयोश्च द्वयोरावृत्तावपि व्यवहितस्थितत्वेन चमत्काराजननान्नानुप्राससम्भवः, वक्ष्यति च पूर्व्वानुभवसंस्कारबोधिनी यद्यदूरतेति । अयञ्च श्लेषः शब्दगुणः । अर्थगुणः श्लेषस्तु क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मकोऽन्यैरुक्तो ज्ञातव्यः, तत्र क्रमः क्रियासन्ततिः, कौटिल्यं विदग्धचेष्टितम्, अनुल्वणत्वमप्रसिद्धवर्णनाविरहः,

उपपत्तिरुपपादकयुक्तिविन्यासः, एषां योगः संमेलनं स एव रूपं यस्या घटनायास्तदात्मकः। यथा, "दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः। ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति"। अत्र दर्शनादयः क्रियाः, उभयसमर्थनरूपं कौटिल्यं, लोकव्यवहाररूपमनुल्वणत्वम्, एकासनसंस्थिते, पश्चादुपेत्य, नयने निमील्य, ईषद्वक्रितकन्धर इति चोपपादकानि, इत्येषामत्र योगः ॥ ४४ ॥

प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति ।
लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः ॥ ४५ ॥

प्रसादं लक्षयति। प्रसादवदिति। प्रसिद्धार्थं प्रसिद्धार्थप्रतिपादकम्, उभयार्थकशब्दस्याप्रसिद्धार्थे प्रयोगे निहतार्थत्वरूपदोषापत्त्या प्रसिद्धार्थे प्रयुक्तमित्यर्थः, तथा प्रतीतौ सुभगं सुन्दरम्, अधिकपदत्वकष्टत्वादिदोषासम्बन्धेन झटित्यर्थोपस्थापकमित्यर्थः। ईदृशं वचो वाक्यं प्रसादवत् प्रसादाख्यगुणयुक्तमित्यन्वयः, एवञ्च दोषाभावकृतमर्थस्य वैमल्यं प्रसाद इति लक्षणं, तस्य वाक्यगतत्वं परम्परयेति बोध्यम्, अस्योदाहरणं दर्शयति। इन्दोरिति। इन्दीवरद्युति श्यामलम्, लक्ष्म कलङ्कः। अत्रेन्दिन्दीवरादयः शब्दाः प्रसिद्धचन्द्राद्यर्थेषु प्रयुक्ताः श्रुतिमात्रतस्त्वार्थबोधकाः ॥ ४५ ॥

व्युत्पन्नमिति गौडीयैर्नातिरूढमपीष्यते ।
यथानत्यर्ज्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥ ४६ ॥

अथ गौड्यां विपर्ययं दर्शयति । व्युत्पन्नमिति । गौडीयैः पुनर्नातिरूढमपि अनतिप्रसिद्धमपि निहतार्थत्वादि दोषवदपीत्यर्थः व्युत्पन्नं व्युत्पत्तिमत् बन्धगौरवप्रतिभासनेन वैचित्र्यवदित्यर्थः, इत्येवं मत्वा इष्यते । अयं भावः, गौडा हि शिथिलबन्धे काव्ये निहतार्थत्वादिदोषान् मन्यन्त एव परन्तु यत्र गाढोबन्धस्तद्दुष्टमपि वैचित्र्यवदिदमित्याद्रियन्ते इति । यथेति । अनत्यर्ज्जुनमनतिधवलं किञ्चिन्नीलमित्यर्थः यदब्जन्म इन्दीवरं तस्य सदृक्षस्तुल्योऽङ्कः कलङ्कोयस्य सः, वलक्षो-धवलो गौः किरणोयस्य सः चन्द्र इत्यर्थः । अत्रार्ज्जुनशब्दः कार्त्तवीर्य्यपाण्डवविशेषयोः प्रसिद्धः, शुक्लवर्णे त्वप्रसिद्ध इति निहतार्थः, अब्जन्मशब्दश्च न केनापि प्रायेणोत्पले प्रयुक्त इत्यप्रयुक्तः, एवमुपमितिगर्भबहुव्रीहिणैव प्रादृश्यबोधसम्भवे सदृक्षशब्दस्याधिकः श्रुतिकटुश्च, एवं वलक्षशब्दोऽप्रयुक्तः श्रुतिकटुश्च, गोशब्दश्च वृषादौ प्रसिद्धः किरणे त्वप्रसिद्ध इति निहतार्थः, किञ्च अनत्यर्ज्जुनाब्जन्मेत्यत्र सन्धौ कष्टत्वं, तदेवं दोषबहुलमपि वाक्यं बन्धगाढत्वमहिम्ना गौडैः काव्यत्वेनाङ्गीक्रियत इति गौड्यां निरुक्तप्रसादाभावाद्वैदर्भीतोभेदः । वस्तुतस्तु वैदर्भीपक्षपातितया ग्रन्थकृतैवमुक्तं गौडानामपि दोषाणामनङ्गीकारादिति ध्येयम् । अयञ्च प्रसादोऽर्थवैमल्य-

रूपोऽर्थगुणः, शब्दगुणः प्रसादस्तु ओजोमिश्रितशैथिल्यात्मा। यथा। "यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा। यो यस्तत्कर्मसाची चरति मयि रणे यश्च यश्च प्रतीपः क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" इति ॥ ४६ ॥

समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः।
बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥ ४७ ॥

समतां लक्षयति। सममिति। बन्धेषु संघटनासु अविषममविभिन्नम्, उपक्रमोपसंहारयोर्बन्धगतवैषम्याभाववदित्यर्थः ईदृशं वाक्यं समं समताख्यगुणवत्। इत्यञ्च येन बन्धेनोपक्रम्यते तेनैव बन्धेन समापनं समतेति लक्षणं ज्ञातव्यम्, बन्धास्तावत् कतिविधा इत्यत्राह। ते इति। ते बन्धाः, मृदुः कोमलः, स्फुटो विकटः, मध्यमस्तदुभयात्मकः, तदात्मकाः, बन्धानां मृदुत्वादिकमपि कथमित्यत्राह। मृदुस्फुटोन्मिश्रवर्णविन्यासयोनय इति, मृदुवर्णा ह्रस्वस्वरवर्गान्त्यव्यञ्जनरूपाः, स्फुटा विकटा दीर्घस्वराष्टठडढशषहाश्च। एतच्छेषा उन्मिश्रा मध्यमाः, एतेषां विन्यासो योनिः कारणं येषां ते। अत्र वर्णशब्दः असमासमध्यमसमासदीर्घसमासानामुपलक्षकः, यदाह, "असमासा, समासेन मध्यमेन

च भूषिता। तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता” इति। एवञ्च त्रिविधवर्णसमासघटितानां बन्धानां त्रैविध्यात् तद्गता समतापि त्रिविधेति भावः। इयञ्च समता शब्दगुणः, अर्थगुणभूता तु प्रक्रान्तप्रत्ययाद्यविपर्य्यासेनार्थस्य विसम्वादिताविरहः स च प्रक्रमभङ्गाख्यदोषाभावरूपः अन्यैरुक्तो ज्ञातव्यः। यथा, उदेति सविता ताम्रस्ताम्र एवास्तमेति चेत्यादि॥ ॥ ४७ ॥

कोकिलालापवाचालो मामेति मलयानिलः ।
उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥ ४८ ॥
चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।
स्पर्द्धते रुद्धमद्धैर्य्यो वररामामुखानिलैः ॥ ४९ ॥
इत्यनालोच्य वैषम्यमर्थालङ्कारडम्बरौ ।
अपेक्षमाणा ववृधे पौरस्त्या काव्यपद्धतिः ॥ ५० ॥

इत्थं बन्धवैविध्येन त्रिविधां समतां क्रमेण सार्द्धश्लोकेन दर्शयति। कोकिलेति। एति पीडयितुमागच्छति। अत्र मृदुबन्धेनोपक्रान्तस्य सन्दर्भस्य मृदुबन्धेनैव समापनमिति मृदुबन्धगता समता। स्फुटबन्धगतां दर्शयति। उच्छलदिति। उच्छलन्तोदूरमुत्सर्पन्तः शीकरा यस्य तत्, तथा अच्छादप्यच्छमतिनिर्मलं यन्निर्झराम्भस्तस्य कणैरुक्षितः सिक्तः शीतल इत्यर्थः, अत्रापि मलयानिलोमामेतीत्यनुषङ्गः। अत्र स्फुटबन्धेनोपक्रान्तस्य तेनैव समापनमिति स्फुटबन्धगता॥ ४८॥

मध्यमबन्धगतां समतां दर्शयति। चन्दनेति। चन्दन-
प्रणयश्चन्दनवनसंसर्गस्तेन उद्धिकोगन्धोयस्य सः। [illegible]यं हि
मिश्रवर्णमध्यमसमासघटितत्वान्मध्यमोबन्धः। उपक्रमोपसंहारौ
च तेनैवेति मध्यमबन्धगतेयं समता। केचित्तु कोकिलाला-
पेत्यादिश्लोकद्वयमिदं समतायाः प्रत्युदाहरणं प्रतिश्लोकमुप-
क्रमोपसंहारयोर्विभिन्नबन्धकत्वादित्याहुस्तन्न रुचिरम्, उ-
दाहरणं दर्शयित्वैव प्रत्युदाहरणदर्शनाया औचित्यात्।
इत्थं समतात्रयं लक्षयित्वा गौड्यामेतद्विपर्य्ययं दर्शयितुं
प्रथमं वैषम्यप्रकारं दर्शयति। स्पर्द्धत इति। विरहिण उक्ति-
रियम्। अत्र मलयमारुत इति कर्तृपदमध्याहर्त्तव्यम्। रुद्धं
स्तम्भितं मम धैर्य्यं येन सः मामधीरं कुर्व्वन्नित्यर्थः, वररामाः
पद्मिनीस्त्रियः, तासां मुखानिलैः स्पर्द्धते तत्सदृशो भवति
समानसौगन्ध्यवत्त्वादिति भावः। अत्र प्रथमपादे स्फुटोब-
न्धः द्वितीयेतु मृदुरिति विभिन्नबन्धकत्वान्नास्ति समता॥
॥ ४८ ॥

निरुक्तसमतायां गौडीयामामनास्थां दर्शयति। इत्यना-
लोच्येति। इत्येवं स्पर्द्धतइत्यादिश्लोकार्द्धप्रदर्शितं वैषम्यं स-
मताविपर्य्ययजन्यदोषमनालोच्य अनङ्गीकृत्य, अर्था मृदुवि-
कटमध्यमरूपाः काव्यार्थाः, अलङ्कारा अनुप्रासोपमादयः,
तेषां डम्बरौ उत्कर्षौ, प्रतियोगिद्वित्वाद्द्विवचनम्, अपेक्षमाणा
अर्थविशेषानुरोधप्रयुक्ता गुणैरपेक्षेणाऽलङ्कारकृतवैचित्र्यानु-
रोधप्रयुक्ता चेत्यर्थः, पौरस्त्या गौडदेशीया काव्यानां पद्धति-

र्मार्गी ववृधे वृद्धिं गता, ववृते इति पाठे प्रवृत्ता। गौ-
डानामयमाशयः। अर्थानुसारिणो हि बन्धाः, अर्थाश्च मृदु-
विकटमध्यमात्मकाः, तत्र यदि प्रथमं मृदुरर्थः अवसाने च
विकटः तदा मृदुबन्धेनोपक्रान्तमपि विकटबन्धेन समापनीयं
बन्धानामर्थानुगतत्वनियमात् एवम्विधस्थले समतापरित्यागो
गुण एव। यथा सारङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्ज-
म्बुका मातङ्गा महिषा मदं व्रजत किं शून्येऽथ शूरा न के।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः सिन्धुध्वानिनि-
रुङ्कृते स्फुरति यत् तद्गर्ज्जितं गर्ज्जितमित्यादावुत्तरार्द्धे कु-
पितसिंहरूपार्थस्योद्धतत्वात् सुकुमारबन्धत्यागो गुण एव।
अत्रार्थपदञ्च वक्त्राद्युपलक्षकं तेन वक्त्राद्यौचित्यवशादपि बन्ध-
वैषम्यं युज्यते, प्रकृते च स्पर्द्धते रुद्धमद्धैर्य्यं इत्यत्र शृङ्गारि-
णोऽपि वक्तुर्धैर्य्यरोधेन वायुं प्रति कुपितत्वात् कुपितवाक्यस्य
चोद्धत्यौचित्यात् युज्यते विकटबन्धः। वररामामुखानिलै-
रित्यत्र तु कोपाभावात् शृङ्गाराङ्गस्य वररामापदवाच्य-
नायिकारूपार्थस्य मृदुत्वाच्च मृदुबन्ध इति समतात्यागोगुण
एव, अतएव पतत्प्रकर्षतादोषस्याऽपि क्वचिद्गुणत्वमुक्तं।
यथा। चञ्चद्भुजभ्रमितचण्डगदाविघातसञ्चूर्णितोरुयुगलस्य
सुयोधनस्य। स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति
कचांस्तव देवि भीम, इत्यत्र चतुर्थपादे सुकुमारार्थतया
शब्दाडम्बरत्यागो गुण एवेति। वैदर्भास्तु गुणपक्षपाति-
तया विसदृशार्थकेऽपि सन्दर्भे उपक्रान्तबन्धत्यागो दोष

एवेति मन्यन्ते इत्यनयोर्विपर्य्ययः। अलङ्कारेति। गुणसमानाधिकरणाएवालङ्कारा रसोत्कर्षका नतु तन्निरपेक्षा इति वैदर्भाणां मतं, गौडानान्तु तन्निरपेक्षा अपीति भेदः। यथा च प्रक्षते स्पर्द्धते इत्यादौ उपमानुप्रासयोः संसृष्टिः एतच्च प्रसङ्गादुक्तम्, अर्थवैपरीत्येन गौडानां बन्धवैषम्याङ्गीकारस्यैव प्रस्तुतत्वादित्यवधेयं। केचित्तु अर्थालङ्कार उपमादिः, डम्बरोविकटवर्णता तौ अपेक्षमाणा इत्यादि व्याचक्षते, तन्न सङ्गतं गौडानामनुप्रासादेः शब्दालङ्कारस्याऽपि प्रियतमत्वेनापेक्ष्यमाणत्वात् वैदर्भाणाञ्चार्थालङ्कारौदासीन्यस्यादृष्टचरत्वात्॥ ५० ॥

मधुरं रसवद्, वाचि वस्तुन्यपि रसस्थितिः।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः॥ ५१ ॥

माधुर्य्यं लक्षयति। मधुरमिति। रसवद्वाक्यं मधुरं माधुर्य्यगुणवदित्यन्वयः। नन्वेतावता रस एव माधुर्य्यगुण इत्यायातं, तच्च प्राचीनानां नवीनानाञ्च मतविरुद्धं, गुणानामलङ्कारवच्छब्दार्थनिष्ठतया रसोपकारकत्वस्य प्राचीनैः, साक्षाद्रसधर्म्मत्वस्य च नवीनैरङ्गीकृतत्वात् रसात्मकत्वस्य तु न केनाप्युक्तत्वादित्यत्राह। वाचीत्यादि। वाचि वाक्यघटकतत्तद्वर्णादौ, तथा वस्तुन्यपि वाक्यप्रतिपाद्यतत्तदर्थे च, रसाः शृङ्गारादयः रसनधर्म्मयोगित्वाद्भावतदाभासादयश्च,

तेषां स्थितिर्व्यञ्जकतया सम्बन्धः। एतदुक्तं भवति वाक्यस्य रसव्यञ्जकवर्णादिमत्त्वं तादृशार्थवत्त्वञ्च माधुर्य्याख्योगुण इति। तत्रासमासा अल्पसमासा वा मृदुवर्णाः शृङ्गारकरुणशान्तानां, विकटवर्णास्तद्धतदीर्घसमासास्च वीरबीभत्सरौद्राणां, मध्य-वर्णा मध्यसमासास्च हास्याद्भुतभयानकानां व्यञ्जकाः। अर्था-श्च तत्तद्रसीयविभावानुभावव्यभिचारिभावरूपास्तत्तद्रसव्यञ्ज-काः। अर्थानां रसव्यञ्जकत्वञ्च रत्यादिस्थायिभावव्यञ्ज-कत्वरूपं, यदुक्तं प्रकाशकृता, व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृत इति। ननु रसमेव तावन्न जानीमस्तत्कथं तद्व्यञ्जकवर्णादीनां माधुर्य्यव्यञ्जकत्वमवगन्तव्यमिति रसप्रकारं निर्वक्ति। येनेति। धीमन्तः सामाजिकाः नतु निर्बुद्धयो-हालिकादयः, येन माद्यन्ति मत्तप्राया भवन्ति स रस इत्यर्थः, एतदुक्तं भवति, धीमतां मत्तताहेतुस्तावत् काव्यार्थानुशीलनोद्भु-द्भुश्चमत्कारापरपर्य्यायोलोकोत्तराह्लादः स एव रस इत्यर्थः। वैषयिकानन्दस्तु ब्रह्मानन्दनिर्वृतानिव न तानुन्मदयति। अत-एवोक्तं। "काव्यशास्त्रविनोदेन कालोगच्छति धीमताम्। व्यसनेन तु मूर्खाणां निद्रया कलहेन च" इति। एतदेवो-पमया विशदयति, मधुनेवेति। अन्ये त्वाहुः पृथक्पदत्वं माधुर्य्यं तच्च शब्दगुणः, यथा श्वासान् मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते इत्यादि। उक्तिवैचित्र्यरूपन्तु माधुर्य्यमर्थ-गुणः, यथा, "भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति" इत्यादि॥ ५९॥

यया कयाचिच्छ्रुत्या यत्समानमनुभूयते।
तद्रूपा हि पदासत्तिः सानुप्रासा रसावहा॥ ५२॥

माधुर्य्येऽस्मिन् वैदर्भीगौडयोः प्रभेदं दर्शयितुं प्रथमं वैदर्भानुकूलतया 'वाचि रसस्थितिः' इत्यनेनोक्तं श्रुत्यनुप्रासवद्वर्णसंघस्य रसव्यञ्जकत्वमाह। ययेति। श्रूयतेऽनयेति श्रुतिरुच्चारणं, करणे क्तिः, यया कयाचित् कण्ठ्यया दन्त्यया अपरया वा श्रुत्या उच्चारणेन, यदिति क्रियाविशेषणं, समानं पूर्व्वोच्चरितव्यञ्जनसदृशं यदनुभूयते, हीति निश्चये, तद्रूपा तादृशसादृश्यानुभवविषयव्यञ्जनवती पदासत्तिः अव्यवधानेन तादृशपदानां प्रयोगः सानुप्रासा श्रुत्यनुप्रासवती, सैव रसावहा रसव्यञ्जिका। अयमर्थः, कण्ठताल्वाद्येकस्थानोच्चार्य्यत्वेन व्यञ्जनानां सादृश्यं श्रुत्यनुप्रासः, यदाह विश्वनाथः। उच्चार्य्यत्वाद्यदेकत्र स्थाने तालुरदादिके। सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यत इति। अयञ्चानुप्रासोविभिन्नवर्णविषयो वैदर्भाणामतीव श्रुतिसुखावहः। एकवर्णविषयस्तु छेकवृत्तिसंज्ञोगौडानां श्रुति[illegible]ावह इति वक्ष्यते। तद्युक्तव्यञ्जनवद्वाक्यं रसावहमिति, अस्ति चैवंविधस्थले काव्यशोभाकरोमाधुर्य्यगुणः। उक्तञ्च। "यथा ज्योत्स्ना शरच्चन्द्रं यथा लावण्यमङ्गनाम्। अनुप्रासस्तथा काव्यमलङ्कर्तुमिह क्षम" इति। शब्दालङ्कारस्यानुप्रासस्यालङ्कारनिरूपणप्रकरणे लक्षणीयत्वेऽपि मार्गविभागप्रसङ्गादत्र लक्षणं कृतं, वक्ष्यति च। "काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रिया" इति॥ ५२॥

एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः।
ततः प्रभृति धर्म्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥ ५३ ॥

उदाहरति। एष इति। लक्ष्मीं राज्यश्रियं। ब्राह्मणाः प्रिया यस्य सः। धर्म्मस्योत्सव इति दानादिना धर्म्मकृत्यं प्रवर्त्तयामासेत्यर्थः। अत्र षकाररकारयोरेकस्मिन् मूर्द्धनि, एवं जकारयकारयोस्तालौ, दकारलकारयोश्च दन्ते, उच्चार्य्यमाणत्वात् साम्यमिति श्रुत्यनुप्रासः सच धर्म्मवीरपरिपुष्टस्य राजविषयकरतिभावस्य व्यञ्जक इति माधुर्य्यसद्भावः ॥ ५३ ॥

इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः।
अनुप्रासादपि प्रायो वैदर्भैरिदमिष्यते ॥ ५४ ॥

अत्र वैदर्भीगौड्योर्विपर्य्ययं दर्शयति। इतीति। इतिपदं पद्यसमाप्तिसूचकम्। इदमनन्तरोक्तश्रुत्यनुप्रासवत् पद्यं गौडैर्नादृतं न माधुर्य्यगुणवत्त्वेनाङ्गीकृतं समानश्रुतिकवर्णानां रसोपकारकताविशेषाननुभवादिति भावः। कस्तर्हि तैस्तथात्वेनाङ्गीक्रियते इत्यत्राह। अनुप्रासस्त्विति। अनुप्रासोऽयमनन्तरवक्ष्यमाणो वर्णावृत्तिरूपः, तत्प्रियः तेषां गौडानां रसोपकारकत्वेनादरणीयः। अनुप्रासादपीति। वक्ष्यमाणवर्णावृत्तिरूपादित्यर्थः। अत्र अपेक्ष्येति पदस्यान्तर्भूतत्वेन यजगर्भत्वात् पञ्चमी। इदं निरुक्तश्रुत्यनुप्रासवत् काव्यम्। अत्र अपीति प्राय इति पदाभ्यां वैदर्भाणामपि कोमलवर्णावृत्त्यनुप्रासेऽप्यादरः सूचितः, अतएव वृत्त्यनुप्रासप्रस्तावे का-

व्यप्रकाशे, माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते। ओजःप्रकाशकैस्तैश्च परुषा, कोमला परैरिति, मधुरवर्णानुप्रासवद्बन्धस्योपनागरिकात्वमुक्तम्। उपनागरिका वैदर्भी, परुषा गौडी, कोमला पाञ्चाली, अत्र वैदर्भाणां श्रुत्यनुप्रासमात्रे गौडानाञ्च वर्णावृत्त्यनुप्रासमात्रे वैचित्र्याभ्युपगमे तेषामनुभव एव प्रयोजकः ॥ ५४ ॥

वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च।
पूर्व्वानुभवसंस्कारबोधिनी यद्यदूरता ॥ ५५ ॥

गौडानां प्रियमनुप्रासं लक्षयति। वर्णावृत्तिरिति। पादेषु च पदेषु चेति चद्वयमुभयप्राधान्यसूचकं, पादगता पदगता वेत्यर्थः। अत्र पादेषु चेति प्रथमोपादानेन बहुवचनेन च श्लोकव्यापिन्या एव वर्णावृत्तेर्वैचित्र्यजनकत्वमिति प्रथमः कल्पः सूचितः, अतएव पततप्रकर्षताया दोषत्वमिर्व्वचनं सङ्गच्छते यथा, कः कः कुत्र नघुर्घुरायितघुरीत्यादि। पदेषु चेति, एतदशक्तौ पादगतेषु केषुचित् पदेष्वपि सा निवेशनीयेति कल्पान्तरं दर्शितम्। वर्णावृत्तिरिति वर्णपदमत्र व्यञ्जनवर्णपरं, स्वरमात्रस्य सादृश्यन्तु न वैचित्र्यावहमित्युपेक्षितमभियुक्तैः। वर्णस्य वर्णयोर्वर्णानाम्वा आवृत्तिः पुनरुच्चारणमनुप्रासः पुनरुच्चारणेन सादृश्यप्रतीतिरनुप्रास इत्यर्थः सादृश्यप्रतीतेरेव वैचित्र्यजनकत्वेनालङ्कारत्वात्। उक्तञ्च प्रकाशकृता : वर्णसाम्यमनुप्रास इति। सादृश्यञ्च विभिन्नयोरेव सम्भ

वतीति उच्चारणकालभेदेन एकस्यापि वर्णस्य भेदो बोध्यः। अत्रामन्तोषे वर्णावृत्तिपदस्य वर्णस्य पुनरुच्चारणेन प्रत्यभिज्ञा-प्रत्यय इत्येवार्थो बोध्यः पुनःपुनःश्रवणसमवायजन्यायाः प्रत्यभिज्ञाया अपि वैचित्र्यजनकत्वात्। आवृत्तिश्च पूर्व्वोच्चरित-स्वरसहितस्यैवेति नियमो न वाच्यः स्वरवैषम्येऽपि वैचित्र्यस्यानुभविकत्वात्, तदाह विश्वनाथः। अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यदिति। निरुक्तं सादृश्यप्रतीतेः प्रत्यभिज्ञाया वानुप्रासत्वं स्पष्टयति। पूर्व्वेति। पूर्व्वस्य प्रथमोच्चरितवर्णस्यानुभवः श्रावणप्रत्यक्षस्तज्जनितो यः संस्कारो भावनाख्यस्तस्य बोधिनी उद्बोधिका अदूरता द्वितीयवर्णस्य सन्निकृष्टकालीनता यदि भवति तदा वर्णावृत्तिरनुप्रास इत्यर्थः। अयमर्थः, संस्कारानुद्बोधे सादृश्यप्रतीतेः प्रत्यभिज्ञाया वा असम्भवात् द्वितीयादिवर्णज्ञानमात्रस्य च वैचित्र्याजनकत्वात् वैचित्र्यस्यैवालङ्कारत्वात् द्वितीयवर्णज्ञानोद्बुद्धसंस्कारजन्या सादृश्यप्रतीतिः प्रत्यभिज्ञा वा विषयतया वर्णगता अनुप्रासव्यपदेशहेतुरिति। तादृशसंस्कारोद्बोधश्च एकद्वित्रिचिविसदृशवर्णव्यवधानेऽपि सम्भवति बहुवर्णव्यवधाने तु न सम्भवतीत्यनन्तरं प्रत्युदाहरणेन दर्शयिष्यते। अयञ्चानुप्रासश्छेकवृत्तिगतत्वेन द्विविधः। यदाह प्रकाशकारः। छेकवृत्तिगतो द्विधेति। तत्र व्यञ्जनसङ्घस्य स्वरूपतः क्रमतश्च सकृत्साम्यं छेकानुप्रासः। तथा व्यञ्जनसङ्घस्य स्वरूपत एव सकृदसकृद्वा साम्यं तस्यैव च स्वरूपतः क्रमतश्चासकृत्साम्यम्, एकस्य व्यञ्जनस्य सकृदसकृच्च साम्यं वृत्त्यनुप्रासः।

यदाह विश्वनाथः। "छेकोव्यञ्जनसङ्घस्य सकृत्साम्यमनेकधेति। अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा। एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यत" इति। शब्दार्थयोः पौनरुक्त्यरूपो लाटानुप्रासोऽप्यन्यैरुक्तो वर्णावृत्तिरूप एव। यदाह विश्वनाथः। "शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः"। लाटानुप्रास इत्युक्त इति। यथा, "स्मेरराजीवनयने नयने किं न मीलिते। पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम्" इति॥ ५५॥

चन्द्रे शरन्निशोत्तंसे कुन्दस्तवकविभ्रमे।
इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम्॥ ५६॥
चारु चान्द्रमसं भीरु बिम्बं पश्यैतदम्बरे।
मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम्॥ ५७॥

अस्योदाहरणं दर्शयति। चन्द्र इति। शरन्निशोत्तंसे शरन्निशायाः शिरोभूषणायमाने, इन्द्रनीलनिभं श्यामलं, लक्ष्म कलङ्कः। अत्र प्रथमे पादे शकाररेफयोः, द्वितीये ककारयोर्वकारयोश्च तृतीये च नकारयोर्लकारयोश्चानतिदूरावृत्तत्वेन साम्यप्रतीतिरिति वृत्त्यनुप्रासः। चतुर्थपादे तु द ध त नकाराणां दन्त्यत्वादेकस्थानीयः श्रुत्यनुप्रासः। उभयविधेनानेनापस्कृतः शब्दः स्वोपस्थाप्यं शृङ्गारोद्दीपनविभावभूतं चन्द्रमुपस्कृत्य शृङ्गारमुपस्करोतीति शब्दनिष्ठं माधुर्यम्। अत्रैव च रूपकोपमानुप्राणितया निदर्शनया पुरस्कृतस्तादृशवाच्यार्थः शृङ्गारं पुष्णातीत्यर्थनिष्ठञ्च॥ ५६॥

इत्थं स्वरवैसादृश्येनानुप्रासं दर्शयित्वा स्वरसादृश्येनाप्यातीववैचित्त्र्यं ख्यापयितुमुदाहरणान्तरं दर्शयति। चार्व्विति। मानिनीं प्रति कामिन उक्तिरियम्। बिम्बं मण्डलम्। अत्र प्रथमे पादे चाकारयोः रुकारयोश्च साम्याद्वृत्त्यनुप्रासः, द्वितीये म्बम्बयोः मक्तत्साम्याच्छेकानुप्रासः, तृतीये च मन्मथमन्मथयोरपि तथात्वाच्छेकानुप्रासः। चतुर्थे तु दकारयोस्तकारयोश्च स्वरवैसादृश्येन साम्याद्वृत्त्यनुप्रासः। अस्मिन् पद्येऽपि शब्दार्थोभयगतं माधुर्य्यमस्ति अर्थोऽपि चन्द्रबिम्बस्य विरहिनिर्द्दयहननोद्यमासम्बन्धेऽपि तत्कल्पनादतिशयोक्त्युपस्कृता विप्रलम्भं पुष्णातीति रसावहः। एवं स्वरसादृश्यवैसादृश्याभ्यामनुप्रासो भवतीत्युदाहरणद्वयेन सूचितम्॥ ५७ ॥

इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रुतिम्।
न तु रामामुखाम्भोजसदृशश्चन्द्रमा इति॥ ५८॥

अनुप्रासलक्षणकारिकायामदूरतापदस्य प्रयोजनमन्वयव्यतिरेकाभ्यां दर्शयन्नाह। इत्यनुप्रासमिति। अतिदूरमत्यधिकमन्तरं व्यवधानं यस्यास्तादृशी श्रुतिर्यत्र स तथा तद्भिन्नमित्येवं पूर्व्वश्लोकद्वयप्रदर्शितप्रकारमनुप्रासमिच्छन्ति गौडा इति शेषः। नत्विति। अत्र रामा इति माकारश्रवणस्यातिदूरे चन्द्रमा इति माकारस्य श्रुतिरिति पूर्व्ववर्णसंस्कारोद्बोधाभावात् इत्येवंविधस्थले न तु न पुनरनुप्रासमिच्छन्तीत्यन्वयः। अत्र स्वरसादृश्यघटितस्यैवानुप्रासस्याभावः नतु

स्वरवैसादृश्यघटितस्य, विभिन्नस्वरयोः पूर्व्वपादे मकारयोरुत्तरपादे दकारयोश्चानतिदूरस्थयोः सत्त्वेन वृत्त्यनुप्रासस्यानपलपनीयत्वादिति ध्येयम् ॥ ५८ ॥

स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः।
च्युतोमानोऽधिकोरागो मोहोजातोऽसवोगताः ॥ ५९ ॥

सानुप्रासा रसावहेत्युक्तं। यत्रानुप्रासः सन्तमपि रसं दोषसद्भावान्नोपकरोति न तत्र माधुर्य्यमिति दर्शयति। स्मर इति। नायकोपेक्षया गलितमानाया नायिकायाः पश्चात्तापवर्णनमिदं। खर उग्रशासनः। खलः प्रणयभङ्गात् क्रूरः। कोप ईर्ष्यामानः, मानः सखीषु मान्यता, च्युत इति तासां वचनाकरणादितिभावः, असवः प्राणा गता गतप्रायाः। अत्र पूर्व्वार्द्धे रकारयोः खकारयोः ककाराणाञ्च साम्याद्वृत्त्यनुप्रासः। उत्तरार्द्धे च तकारादीनां दन्त्यानां तथात्वाच्छ्रुत्यनुप्रासः। एवं द्विविधोऽप्यनुप्रासोदोषसमीचीनः सुपरिच्छदः कु[illegible]मिव विप्रलम्भशृङ्गारं नोपकुरुते ॥ ५९ ॥

इत्यादि बन्धपारुष्यं शैथिल्यञ्च नियच्छति।
अतोनैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ६० ॥

अत्र दोषं तावद्दर्शयति। इत्यादीति। आदिशब्दः प्रकारवचनः, इत्यादि एवंप्रकारकमनुप्रासवद्वाक्यं बन्धस्य पारुष्यं शैथिल्यञ्च नियच्छति बोधयति, तत्र पूर्व्वार्द्धे पारुष्यमुत्तरार्द्धे शैथिल्यं तस्मान्नात्र माधुर्य्यमिति भावः। तत्र पारुष्यं

श्रुतिकटुत्वं तच्च बहुविसर्गश्रुतिजनितम्। उक्तञ्च। अनुस्वार-विसर्गौ तु पारुष्याय निरन्तराविति। शैथिल्यमाहतविसर्ग-तया बन्धस्यागाढत्वम्, आहतविसर्गता च ओत्वप्राप्तविसर्गता एषाञ्चासकृतप्रयोग एव दोषः। अत इत्यादि। एवं दोष-समानाधिकरणं, दाक्षिणात्या वैदर्भाः, वस्तुतस्तु दोषाणां रसपरिपन्थितया गौडानामपि परिहरणीयत्वाद्ग्रन्थकृता वैदर्भपक्षपातितया दाक्षिणात्या इत्युक्तं, यत्र तु वक्त्राद्यौ-चित्यवशात् पारुष्यस्य रसानुकूलता, तत्र सानुप्रासे माधुर्य्य-सद्भावोऽव्याहत एव। यदाह। "वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते। रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्" इति। प्रकृते चैतत्त्रयं नास्तीति दोष एव॥ ६०॥

आवृत्तिं वर्णसङ्घातगोचरां यमकं विदुः।
तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते॥ ६१॥

ननु वर्णावृत्तेरभावत्वस्वीकारे तथाभूतं यमकमप्यत्रैव निरूपणीयं स्यादित्यत्राह। आवृत्तिमिति। वर्णसङ्घातः पू-र्व्वोच्चरितवर्णसमुदायो गोचरो विषयो यस्यास्तादृशीमावृत्तिं पुनरुच्चारणं यमकं विदुरालङ्कारिका जानन्ति। अत्र वर्णस-ङ्घातपदं स्वरव्यञ्जनसमुदायपरम्, अनुप्रासवत् स्वरवैसादृश्ये यमकत्वाभावात्। यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि सादरं वच इत्यादावेकार्थपदस्यावृत्तौ यमकत्वं नास्तीति विभिन्नार्थकेति वर्णसङ्घातविशेषणं देयं, तथात्वेच सार्थकयो-

रेव यमकत्वप्राप्तौ ससुरभिं सुरभिं सुमनोभरैरित्यादौ रभिं सुरभिंस्वित्यादौ निरर्थकयोरपि यमकत्वदर्शनादर्थसद्भाव एव विभिन्नार्थकत्वविशेषणं ज्ञेयम्, आवृत्तिश्च विभिन्नक्रमे रसः सर इत्यादौ यमकत्वाभावात् पूर्व्वक्रमवती बोध्या, सर्व्वञ्चैतत् स्पष्टीकृतं विश्वनाथेन, यथा, "सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः। क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते" इति। एवमेव यमकानुप्रासयोर्विवेको ज्ञातव्यः। तत्त्विति। तत् निरुक्तयमकवद्वाक्यन्तु नैकान्तमधुरं नातिशयेन माधुर्य्य-गुणवत् अर्थानुसन्धानव्यग्रतया रसप्रतीतेर्व्यवहितत्वेन तदुप-स्कारकत्वाभावादिति भावः, अनुप्रासस्तु अर्थानुसन्धानमन्त-रेणैव श्रुतिमात्रेण शब्दमलङ्कुर्व्वन् रसं पुष्णातीति तत्र मा-धुर्य्यसद्भावः, निरर्थकयमकेऽप्यर्थसद्भावसन्देहेनैव भवति विल-म्बोरसाभिव्यक्तेरिति नास्ति माधुर्य्यम्। ननु यमकस्य रसानुप-कारत्वे कथमलङ्कारत्वं शब्दार्थान्यतरशोभाजनकत्वा रसो-पकारकधर्म्माणामेवालङ्कारत्वादित्यत उक्तमेकान्तेत, यमक-वति माधुर्य्यं वर्त्तत एव परन्तु अनुप्रासवन्नात्यन्तमिति। पश्चादिति अलङ्कारनिरूपणप्रस्तावे इत्यर्थः, विधास्यते प्रपञ्च-यिष्यते। वर्ण्यत्यत्र एवेति पाठो न रुचिरः॥ ६१॥

कामं सर्व्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति।
तथाप्यग्राम्यतैवैनं भारं वहति भूयसा॥ ६२॥

एवं शब्दगतं माधुर्य्यं दर्शयित्वा वस्तुन्यपि रसस्थिति-

रित्यनेन सूचितमर्थगतमाधुर्य्यं दर्शयति। काममिति। सर्व्वोऽपि, अपिशब्देन यथाकथञ्चिदर्थसम्बन्धवतां पुनरुक्तवदाभासशब्दश्लेषादीनां परिग्रहः, अलङ्कार उपमाद्यर्थालङ्कारः, कामं पर्य्याप्तं यथा तथा अर्थेषु वाच्यलक्ष्यव्यङ्ग्यात्मकशब्दप्रतिपाद्यविभावादिवस्तुषु रसं निषिञ्चति निवेशयति उत्कर्षकतया स्वाश्रयार्थगतां रसव्यञ्जकतामुत्तेजयतीत्यर्थः। इत्यञ्च सालङ्कारतया रसव्यञ्जकोऽर्थो मधुर इति प्रतिपादितम्। एवं द्विविधमाधुर्य्यानुभवं प्रति दोषमात्रस्यैव प्रतिबन्धकत्वेऽपि ग्राम्यतादोषस्य विशेषेण प्रतिबन्धकत्वं दर्शयन्नाह। तथापीति, तथापि रसोत्कर्षकस्यालङ्कारस्य सद्भावेऽपि, ग्रामीणहालिकादिजनव्यवहृतः शब्दोऽर्थश्च ग्राम्यः तद्विपरीतो विदग्धजनव्यवहृतोऽग्राम्यस्तत्रैव भूयसा बाहुल्येन एनं रसनिषेकरूपं भारं वहति अग्राम्यतासमानाधिकरणा एवालङ्कारा रसं निषिञ्चन्तीत्यर्थः, एतच्च अनश्लीलतादीनामुपलक्षणं ग्राम्यतावदश्लीलत्वादीनामपि रसप्रतिबन्धकत्वात्। ग्राम्यताया रसप्रतिबन्धकत्वञ्च विदग्धवाक्येष्वेव, अधमवाक्येषु तु तस्य गुणत्वमेव, उक्तञ्च गुण इत्यनुवृत्तौ, ग्राम्यत्वमधमोक्तिष्विति भूयसेत्यनेन अस्यैव बाहुल्येनोपयोगोऽलङ्काराणान्तु यथा कथञ्चिदिति सूचितं, निरलङ्कारयोरपि विशुद्धशब्दार्थयोः स्वत एव रसव्यञ्जकतासम्भवात्॥ ६२॥

**कन्ये कामयमानं मां न त्वं कामयसे कथम्।**
**इति ग्राम्योऽयमर्थात्मा वैरस्याय प्रकल्पते॥ ६३॥**

अत्र प्रथममर्थस्याग्राम्यत्वज्ञानाय तद्गतं ग्राम्यत्वं दर्शयति। कन्ये इति। अत्र विदग्धोवक्ता, अविदग्धस्योक्तौ ग्राम्यतायाः गुणत्वेनेष्टत्वादित्युक्तं, कन्ये इति सम्बोधनं हि पुत्रीस्थानीयानामेव युज्यते नायिकानान्तु सुन्दर्य्यादिपदेन, तदत्र वैरस्योदयादर्थस्य ग्राम्यत्वं, नचात्र शब्दस्यापि तथा, विदग्धानामपि कुत्रचित् कन्यापदप्रयोगसम्भवात् यथा, "कन्येयं कलधौतकोमलरुचिः कीर्त्तिश्च नातः परा" इत्यादि। ग्रामिकजनमात्रप्रयोज्यकन्या-दिशब्दानामेव हि प्राचीनैर्ग्राम्यत्वमुक्तं। कामयमानमिति। सुरताभिलाषरूपः कामो हि गूढ एव भङ्ग्या सूच्यमानः कामिनीकुचकलशवच्चमत्कारमावहति स्वशब्देनाभिधीयमानस्तु सामाजिकानां लज्जामाविर्भावयन् रसास्वादवैमुख्यं जनयतीति ग्राम्य एव। अत्र नायिकाकामं प्रति नायककामप्रकाशस्य हेतुत्वात् सति च तादृशे हेतौ तादृशकार्य्यानुदयाद्विशेषोक्तिरलङ्कारः, तद्युक्तोऽप्यनुप्रासवदाक्योऽर्थो ग्राम्यतया निकृष्टीकृतः सन्तमपि शृङ्गारं नोपकुरुत इति माधुर्य्याभावः, एतदेव दर्शयति। इतीति। इत्येवमयं ग्राम्यो ग्राम्यताख्यदोषवान् अर्थस्यात्मा स्वरूपं वैरस्याय रसानुभवप्रतिबन्धाय प्रकल्पते भवति, तस्मान्नात्र माधुर्य्यसद्भाव इति शेषः ॥ ६३ ॥

कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्म्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ ६४ ॥

इत्थं ग्राम्यं दर्शयित्वा तद्विपरीतमग्राम्यमर्थं दर्शयति।

काममिति। अत्र वामे मनोज्ञे वक्रे वा अक्षिणी यस्या इति व्युत्पत्तिलभ्यो वामाक्षीति सम्बुद्धिपदार्थो विदग्धजनोचितः नायिकासौन्दर्य्यप्रकाशकतया चाटुकारस्याभिप्रेतसम्पादनसामर्थ्यादित्यग्राम्य एव। एवं कन्दर्पचाण्डालो मयि निर्दयस्त्वयि तु निर्मत्सर इति वाक्यार्थो त्वयि कामपराधीनोऽस्मि त्वन्तु मां नेच्छसीति पूर्व्वश्लोकोक्त एवार्थो भङ्ग्या सूचित इत्यग्राम्य एव गूढतया सूच्यमानस्य चमत्कारजनकत्वेन वक्तृवैदग्ध्यव्यञ्जकतया सहृदयहृदयहारित्वात्, तस्मादेवंविधोऽग्राम्योऽर्थोरसावहः रसव्यञ्जकतया माधुर्य्यगुणवान् ॥ ६४ ॥

शब्देऽपि ग्राम्यतास्त्येव सा सभ्येतरकीर्त्तनात्।
यथा यकारादिपदं रत्युत्सवनिरूपणे ॥ ६५ ॥

अर्थगतमाधुर्य्यस्य प्रतिबन्धकं तद्गतग्राम्यत्वं दर्शयित्वा तथाविधं शब्दगतमप्याह। शब्देऽपीति। सा शब्दगता ग्राम्यता, सभायामुच्चारणयोग्यत्वेन साधु सभ्यं तस्मादितरदसभ्यं ग्रामिकहालिकादिमात्रप्रयुज्यमानमित्यर्थः तस्य कीर्त्तनात् प्रयोगाद्भवति। यथेति। रत्युत्सवस्य निरूपणे बोधने। यकारादिपदमिति। यकार आदौ यस्य तादृशं पदं यभमैथुन इति यभधातुनिष्पन्नं पदमित्यर्थः। तादृशपदानां हि काव्ये प्रयोगः प्रयोक्तुर्ग्रामिकतयोपहसनीयत्वमुद्भावयन् श्रोतृणाञ्च लज्जामुज्जागरयन् रसास्वादमन्तरयतीति न तत्र माधुर्य्यसद्भावः। निधुवनादिपदानान्तु विदग्धैरपि प्रयुज्यमानत्वाच्च

ग्राम्यत्वम्। अतएव माघे, "अनिमिषमविरामा रागिणां सर्व्वरात्रं नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य" इत्यादौ निधुवनपदप्रयोगः ॥ ६५ ॥

पदसन्धानवृत्त्या वा वाक्यार्थत्वेन वा पुनः ।
दुष्प्रतीतिकरं ग्राम्यं यथा या भवतः प्रिया ॥ ६६ ॥
खरं प्रहृत्य विश्रान्तः पुरुषो वीर्य्यवानिति ।
एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥ ६७ ॥

अन्यैरुक्तस्याश्लीलत्वदोषस्यापि माधुर्य्यप्रतिबन्धकत्वात् स्वमते तस्यापि ग्राम्यपदेन ग्रहणमित्याह। पदसन्धानेति। पदानां सन्धानं साकाङ्क्षतया विन्यासो यत्रेति पदसन्धानं वाक्यं, पदसङ्घातेति पाठे तु उक्तोऽर्थः स्फुटएव, तद्वृत्त्या वा, तथा वाक्यार्थत्वेन वाक्यार्थगतत्वेन वा, दुर्निन्दिता व्रीडा जुगुप्साऽमङ्गलव्यञ्जिका प्रतीतिर्दुष्प्रतीतिः तत्करं, वाक्यस्य वाक्यार्थस्य वा तादृशदुष्प्रतीतिकरत्वरूपमश्लीलत्वमित्यर्थः। तदपि ग्राम्यं ग्राम्यपदोपलक्षितत्वेन माधुर्य्ये परित्याज्यमित्यर्थः। तत्र वाक्यगतं व्रीडाव्यञ्जकत्वरूपमश्लीलत्वमुदाहरति। यथेति। या भवतस्तव प्रिया प्रणयिनीति प्रकृतार्थबोधानन्तरं याभवतः, याभो मैथुनं, यभमैथुन इत्यस्य घञि रूपं, तद्विशिष्टस्य प्रिया मैथुनसाधनत्वेन प्रीणयित्रीत्यसभ्यार्थव्यञ्जनेन सामाजिकानां व्रीडोत्पादनादाक्यमिदमश्लीलमिति नात्र माधुर्य्यसम्भवः। अश्लीलत्वस्य च पदपदांशपदार्थगतत्वसम्भवेऽपि

व्यापकत्वाभावेन न तत्रात्यन्तवैरस्यमिति तदगणयित्वैव वाक्य-वाक्यार्थमात्रगताश्लीलत्वस्य ग्राम्यत्वमुक्तं ग्रन्थकृतेति ज्ञेयम्। नच यथा यकारादिपदमित्यनेन यभधातुनिष्पन्नपदप्रयोगे मुख्यग्राम्यत्वमुक्तं, याभवतः प्रियेत्यत्र च तदेव भवितुमर्हति तत्कथमश्लीलत्वरूपातिदिष्टग्राम्यत्वस्योदाहरणत्वेनेदमुपन्यस्तमिति वाच्यम् अभिधया वृत्त्या असभ्यार्थोपस्थापकशब्दस्यैव मुख्यग्राम्यत्वेन या भवत इत्यादौ तदभावात् व्यञ्जनयैवात्रासभ्यार्थद्योतनात्, समानेऽपि ग्राम्यत्वाश्लीलत्वयोरसभ्यार्थप्रकाशकत्वरूपस्वरूपे वृत्तिभेदकृतोपस्थापकत्वभेदेन भेदाङ्गीकारादित्यवधेयम्॥ ६६ ॥

वाक्यार्थगताश्लीलत्वरूपग्राम्यत्वमुदाहरति । खरमित्यादि। वीर्य्यवान् प्रशस्तबलशाली पुरुषः कश्चिद्वीरः खरमुद्भटं प्रहृत्य रिपूनाहृत्य विश्रान्तः विश्रामं लेभे इति प्राकरणिकार्थः शाब्दबोधविषयीभवन् वक्त्रादिवैलक्षण्यप्रतीतिसध्रीचीनयार्थ्या व्यञ्जनया वीर्य्यवान् शुक्रवान् पुरुषः कश्चिद्युवा खरं प्रहृत्य सुरतप्रहारं कृत्वा विश्रान्त इत्यसभ्यार्थद्योतकतया व्रीडाव्यञ्जक इत्यश्लीलः। नचात्र वाक्यगतमश्लीलत्वम् एकार्थमात्रसङ्केतितानां खरमित्यादिवाक्यघटकपदानां शाब्द्या व्यञ्जनाया अनाश्रयत्वेनासभ्यार्थोपस्थापकत्वाभावात् वाक्यार्थस्यैव च वक्त्रादिवैशिष्ट्यसचिवयार्थ्या व्यञ्जनया द्वितीयार्थोपस्थापनात् पदानां परिवृत्तिसहत्वेन च दोषस्य तद्गतत्वासम्भवात् ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां हि शब्दार्थगतत्वव्यवस्थायां

तदन्वयव्यतिरेकानुविधायित्वमेव हेतुरिति प्राचां सिद्धान्तः, यत्र हि शाब्दी व्यञ्जनयाऽसभ्यार्थबोधस्तत्रैव शब्दगतमश्लीलत्वं शाब्दी च व्यञ्जनानेकार्थशब्दनिष्ठा, यदुक्तं प्रकाशकृता । "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्" इति । नचात्र वीर्य्यपदं बलशुक्रयोर्वाचकतया नानार्थं, बलस्य शुक्रमात्रजन्यत्वेनैकत्वाङ्गीकारात् वीर्य्यपदपरिवृत्तावप्यश्लीलत्वस्यानपायेनार्थगतत्वस्यावश्याभ्युपेयत्वात् । एषां विपर्य्ययः प्रायो दृश्यते गौडवर्त्मनीत्यत्र प्रायः पदस्य प्रयोजनं दर्शयति । एवमादीति । एवमादि निरुक्तग्राम्यतादोषवत्प्रभृति, आदिना अनुचितार्थत्वविरुद्धमतिकारित्वादिदोषवतां ग्रहणम्, उभयोरपि गौडवैदर्भयोः, न शंसन्ति नाद्रियन्ते । एतेनानुप्रासकृतवैलक्षण्येऽपि ग्राम्यतापरिहारे द्वयोः समानतेति सूचितम् ॥ ६७ ॥

भगिनीभगवत्यादि सर्व्वत्रैवानुमन्यते ।
विभक्तमिति माधुर्य्यमुच्यते सुकुमारता ॥ ६८ ॥

असभ्यार्थप्रतिपादकस्यापि सर्व्वजनव्यवहृतस्यादुष्टत्वं प्रतिप्रसूते । भगिनीति । आदिना योनिलिङ्गादीनां ग्रहणम् । सर्व्वत्र व्यवहारेषु काव्येषु च, अनुमन्यते सर्व्वैरदुष्टतया स्वीक्रियते, सर्व्वजनपरिगृहीतस्य हि प्रयोगे दोषानुसन्धानायोगात् आदृजनवैमुख्यसम्भव इत्यदोषः । यदुक्तं । 'सम्वीतस्य हि लोके ऽस्मिन्न दोषान्वेषणं क्षमम् । शिवलिङ्गस्य संस्थाने कस्यासभ्यत्व-

भावनमिति । सम्बीतस्यादुष्टतयाङ्गीकृतस्य । एतदुपलक्षणं गुप्त-लक्षितयोरप्यदुष्टत्वं ज्ञेयं । यदुक्तं । ग्राम्यं घृणावदश्लीलाम-ङ्गलार्थं यदीरितम् । तत्सम्बीतेषु गुप्तेषु लक्षितेषु न दुष्य-तीति । गुप्तानि असभ्यार्थेऽप्रसिद्धानि यथा, सम्बाधपदं सङ्कटार्थे प्रसिद्धं स्त्रीचिह्नार्थे त्वप्रसिद्धमिति । लक्षितानि लक्षणयाऽसभ्यार्थबोधकानि, यथा जन्मभूमिपदं लक्षणया स्त्रीचिह्नबोधकमिति । किञ्च सुरतारम्भगोष्ठ्यां शान्तबीभ-त्सरसादौ च व्यङ्ग्ये अश्लीलत्वं न दोषः प्रत्युत गुण एव । क्रमेण यथा, "करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते । उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते" इति । अत्र करिहस्तादिशब्दा असभ्यार्थाः, इयं हि सुरतप्रसङ्गसभायां कस्यचित् कामिन उक्तिः । "उत्तानोच्छूनमण्डूकपाटि-तोदरसन्निभे । क्लेदिनि स्त्रीव्रणे सक्तिरक्रिमेः कस्य जा-यते" इति अत्र शान्तो रसः । उत्कृत्योत्कृत्य कृत्तिं प्रथ-ममथ पृथूच्छोथभूयांसि मांसान्यंसस्फिक्पृष्ठपिण्डाद्यवयव-सुलभान्युग्रपूतीनि जग्ध्वा । अन्तःपर्य्यस्तनेत्रः प्रकटितद-शनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्य-मव्यग्रमत्ति । अत्र बीभत्सो रसः । माधुर्य्यमुपसंहरति । विभक्तमितीति । विभक्तं रसघटितत्वादिविशेषेण दर्शितम्, अनुप्रासकृतवैलक्षण्यञ्च वैदर्भीगौडयोर्विभक्ततया दर्शितमिति वा । क्रमप्राप्तं सौकुमार्य्यं निरूपयति । उच्यत इति ॥ ॥ ६८ ॥

अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते ।
बन्धशैथिल्यदोषस्तु दर्शितः सर्व्वकोमले ॥ ६९ ॥

अनिष्ठुरेति । निष्ठुराणि श्रुतिकटूनि तद्विपरीतानि कोमलान्यक्षराणि तेषां प्रायोबाहुल्यं नतु सामस्त्यं यत्र तादृशं वाक्यं सुकुमारं सौकुमार्य्यगुणवत् । एतदेवोक्तं क्रमदीश्वरेण । कोमलाक्षरबाहुल्यं वदन्ति सुकुमारतामिति । प्रायपदप्रयोजनं दर्शयति । बन्धशैथिल्येति । सर्व्वकोमले सर्व्वकोमलाक्षरात्मके वाक्ये तु बन्धस्य शैथिल्यरूपोदोषोदर्शितः मयैव, मालतीमाला लोलालिकलिला यथेत्यत्र प्रकाशितः । दोषस्त्वित्यत्र दोषोहीति पाठे हिपदं प्रायपदप्रयोगं प्रत्युत्तरार्द्धवाक्यस्य हेतुत्वं बोधयति, तस्मात् कोमलाक्षराणां बहूनामन्तरान्तरा परुषाक्षरविन्यासेन मौक्तिकहारस्यान्तरान्तरा माणिक्यनिवेशनेव बन्धस्य चारुत्वं सौकुमार्य्यमित्यर्थः । नचैवं श्लेषसौकुमार्य्ययोरभेदः लक्षणस्यैक्यादिति वाच्यं श्लेषस्याऽल्पप्राणमहाप्राणाक्षरघटितत्वेन सौकुमार्य्यस्य च कोमलाकोमलवर्णघटितत्वेन द्वयोर्विभिन्नत्वात् नचाल्पप्राणत्वमेव कोमलत्वं महाप्राणत्वमेव च परुषत्वम् अल्पप्राणस्याऽपि वर्णविशेषसंयोगेन परुषत्वसम्भवात्, यथा, "चकर्त्ति विरहार्त्ता सा त्वत्कीर्त्तिश्रुतिमङ्गना" इति, अत्र ककारतकारावल्पप्राणावपि रकारसम्बन्धेन पारुष्यं भजतः, एवं महाप्राणोऽपि विन्यासविशेषेण कोमलत्वं भजति । यथा, "मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया । मधुकराङ्गनया मुहुरुन्म-

दध्वनिम्नता निम्नताचरमुज्ज्गे" इति। अत्र धकारा महाप्राणा अपि विन्यासमहिम्ना मधुरतां प्राप्नुवन्ति। इयञ्च सुकुमारता शब्दगुणः, अर्थगुणभूता तु अर्थस्यापारुष्यरूपा। पारुष्यञ्चार्थस्यामङ्गलव्यञ्जकत्वरूपाश्लीलत्वम्, अतएव नवीनाः श्रुतिकटुत्वस्याश्लीलत्वस्य च दोषत्वाभिधानेन परित्याज्यत्वात् फलबलादेव तद्विपरीतस्य सौकुमार्य्यस्य प्राप्तौ तस्य गुणत्वकीर्त्तनं प्राचामनुचितमिति वदन्ति ॥ ६९ ॥

मण्डलीकृत्य वर्हाणि कण्ठैर्मधुरगीतिभिः।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ ७० ॥

उदाहरति। मण्डलीकृत्येति। मधुरा गीतिर्गीतिसदृशकेकारवो यत्र तादृशैः कण्ठैर्गलैः, मधुरगीतिरूपैः कण्ठैः कण्ठस्वरैरिति वा, उपलक्षणे तृतीया। जीमूतमालिनि काले प्रावृषि, अन्येऽपि नर्त्तका मधुरं गायन्तो नृत्यन्तीति कलापिषु नर्त्तकव्यवहारप्रतीतेः समासोक्तिरलङ्कारः। अत्र मकारादीनां कोमलानामन्तरान्तरा टवर्गीययुक्तयुक्तान्तरूप परुषवर्णनिवेशेन बन्धोऽयं कामपि चारुतामावहति॥ ७० ॥

इत्यनूर्ज्जित एवार्थो नालङ्कारोऽपि तादृशः।
सुकुमारतयैवैतदारोहति सतां मनः ॥ ७१ ॥

ननु वर्णविशेषविन्यासात्मकस्य सौकुमार्य्यस्य न गुणत्वमुचितम्, अर्थालङ्कारकृतवैचित्र्यमन्तरेण स्वतश्चमत्कारजनकत्वाभावादिति नवीनानां मतं दूषयन्नाह। इत्यनूर्ज्जित एवार्थ

इति। इत्यस्मिन् मण्डलीकृत्येत्यादिपद्ये, अर्थः कलापिनृत्य-रूपः अनूर्ज्जित एव रससम्पर्काभावाच्चमत्काराव्यञ्जक एव, तथा अलङ्कारः समासोक्त्यनुप्राणितः स्वभावोक्तिरूपः, नापि तादृशः न चमत्कारजनकः। तथाप्येतत्पद्यं सुकुमारतयैव सौकुमार्य्यगुणसम्बन्धमात्रेणैव सतां सामाजिकानां मन अरो-हति चमत्कारमुग्धं करोति। एतच्च गुणकृतवैचित्र्यमनङ्गी-कुर्व्वतां मुखमुद्रणायोक्तं वस्तुतस्तु शब्दार्थालङ्कारकृतवैचि-त्राणां विभिन्नत्वात् सत्यप्यर्थालङ्कारयोरौर्ज्जित्ये तदनुसन्धा-नात् प्रागेव गुणकृतवैचित्रं सामाजिकानामनुभवपथमवतरति, अत एवोक्तं, "तया कवितया किम्वा तया वनितया च किम्। पदविन्याससात्रेण यया नापहृतं मनः" इति। यत्र च गुण-वैचित्रं नास्ति तत्र सदप्यर्थालङ्कारवैचित्रं न काव्यशोभां पुष्णाति। यदाह भोजराजः। "अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्ज्जितम्" इति। अपरे च। यदि भवति वचश्च्युतं गुणेभ्या वपुरिव यौवनबन्ध्यमङ्गनायाः। अपि जनदयिताान दुर्भगत्वं नियतमलङ्करणानि संश्रयन्त इति। एतदर्थमेव ग्रन्थकृता, प्राणा दशगुणाः स्मृता इत्यनेन गुणानां प्राणत्वमुक्तम्॥ ७१॥

दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते।
न्यक्षेण क्षयितः पक्षः क्षत्रियाणां क्षणादिति॥ ७२॥

सौकुमार्य्ये गौडवैदर्भयोर्विपर्य्ययं दर्शयन्नाह। दीप्तमित्य-परैरिति। दीप्तिरात्मविस्तृतिः उत्साहादिसमुद्बोधेन चित्तस्य

दीर्घप्रायत्वमित्यर्थः जनकतया तद्विशिष्टं दीप्तं वीररौद्रबीभत्सरसादिरूपमोजस्वि व्यङ्ग्यमित्यर्थः, तदत्र वर्त्तत इति कृत्वा भूम्नातिशयेन कष्टोच्चार्यमपि ओजस्विव्यङ्ग्यव्यञ्जनानुकूलतया परुषवर्णघटितत्वात् कष्टेनोच्चार्य्यमपि बध्यते विन्यस्यते इत्यन्वयः। अयमर्थः गौडाहि, यत्र, वीररसादिरूपमोजस्विव्यङ्ग्यं तत्र परुषवर्णस्तद्व्यञ्जनस्यावश्यकतया सौकुमार्य्यं नाद्रियन्ते, वैदर्भास्तु तत्रापि सौकुमार्य्यं प्रवेशयन्ति। यथा, कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः। नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां वलिमिति। अत्र रौद्रेऽपि रसे नात्यन्तमुद्धतावर्णाः। गौडानां सौकुमार्य्यवर्ज्जनमुदाहरति। न्यक्षेणेति। न्यक्षन्ति विप्रवधादिरूपनीचकर्म्म कुर्व्वन्तीति न्यक्षः कार्त्तवीर्य्यास्तान् क्षति नाशयतीति न्यक्षः परशुरामः। अन्यादेः सुदादाविति षत्वं। अत्र रौद्रो रसः, अतश्च सुकुमारबन्धत्याग उचित इति गौडा मन्यन्ते। न्यक्षेणाक्षेन धृतराष्ट्रेणेति केचित्, तन्न रुचिरं धृतराष्ट्रदुर्मन्त्रितेन क्षत्रियक्षयात् करुणरससम्भवेन तत्र गौडानामपि बन्धपारुष्यानौचित्यात्॥ ७२॥

अर्थव्यक्तिरनेयत्वमर्थस्य, हरिणोद्धृता।
भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति॥ ७३॥

अर्थव्यक्तिं निरूपयति। अर्थव्यक्तिरिति। अर्थस्यानेयत्वमकल्पनीयत्वम् उपात्तशब्दादेवोपस्थितिरित्यर्थः, यावन्तो-

ऽर्था अन्वयोपयोगितया अपेक्ष्यन्ते तद्बोधकतया तावतां पदानामुपादानमिति निर्गलितोऽर्थः। अतएव क्रमदीश्वरः, यावद्वाच्याभिधानं यत्तदर्थव्यक्तिलक्षणमिति। इयञ्चार्थव्यक्तिः शब्दगुणः, अर्थगुणभूता तु वस्तुस्वभावस्फुटीकरणरूपा, अतएव तस्याः स्वभावोक्त्यलङ्कारेण परिग्रह इति नव्याः, यदाहुः, अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनरिति। पदानां झटित्यर्थोपस्थापकत्वं शब्दगतार्थव्यक्तिरित्यन्ये, यदाहुः, अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणमिति। उदाहरति। हरिणेत्यादि। हरिणा वराहरूपिणा, अत्राप्रसिद्धस्योद्धिनोद्धरणस्य वर्णने कश्चिद्धेतुरवश्यमपेक्ष्यते स च हेतुभूतोऽर्थः खुरेत्याद्युपात्तशब्देनैव प्रत्याय्यते न तु कथञ्चित् कल्प्यत इत्यर्थस्य पदेनैव व्यञ्जनादर्थव्यक्तिः। यत्र प्रसिद्धिरस्ति तत्र हेतुर्नापेक्ष्यते, यथा, "सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति" इति, अत्र सन्ध्यायां चक्रवाकमिथुनविघटनस्य प्रसिद्ध्या न हेत्वाकाङ्क्षा, अतएव न तत्र निर्हेतुताया दोषत्वं, यथ ०, निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छतीति। भोजराजेनापि, अध्याहारादिगम्यार्थं नेयार्थं प्रागुदाहृतम्। स गम्यते प्रसिद्धिश्चेन्न तद्दोषतयेष्यत इति॥ ७३॥

मही महावराहेण लोहितादुद्धृतोदधेः।
इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः॥ ७४॥

अनेयत्वमर्थव्यक्तिरित्युक्तं नेयत्वन्तु कीदृगिति दर्शनार्थं प्रत्युदाहरति। महीति। इयति एतावन्मात्रे खुरक्षुण्णनागा-

मृगित्वांशं परित्यज्य लोहितादिति विशेषणमात्रे इत्यर्थः, निर्दिष्टे उक्ते सति उरगाद्व्जोनेयत्वमध्याहारादिना कल्पनीयत्वम् । उदधिगतलौहित्यस्यौपाधिकत्वादुपाधिपदप्रयोगमन्तरेण तस्यामङ्गतत्वप्रतीतेरवश्यमेव कथञ्चिदुपाधिरध्याहरणीय इति नास्त्यत्रार्थव्यक्तिः । यत्र त्वन्वयबोधात् प्राग्बाधादिज्ञानेन लक्षणयार्थान्तरोपस्थितिस्तत्राप्यर्थव्यक्तिः सम्भवत्येव, शक्त्येव लक्षणयाप्युपस्थाप्यार्थस्यान्वयबोधविषयतायामवैलक्षण्यात् । अन्वयबोधानन्तरमनुपपत्त्युदयेन कल्पनीयार्थस्यैव नेयत्वात् । परन्तु यत्र रूढिप्रयोजनाभावेऽपि लक्षणाभ्युपगमः प्रयोक्तुरसामर्थ्यं द्योतयति तत्रार्थस्य नेयत्वमिति नार्थव्यक्तिः, अतएव तथाविधलाक्षणिकपदस्य नेयार्थत्वाख्यदोषदुष्टत्वमभियुक्तैरुक्तं, तथाच नेयार्थत्वव्याकारे प्रकाशकारः । निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् । क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तित इति यन्निषिद्धं लाक्षणिकमिति ॥
॥ ७४ ॥

नेदृशं बहु मन्यन्ते मार्गयोरुभयोरपि ।
न हि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी ॥ ७५ ॥

अर्थव्यक्तौ पूर्व्वोक्तप्रायःपदप्रतिपाद्यं गौडवैदर्भयोः साम्यं दर्शयति । नेदृशमिति । ईदृशं नेयार्थकवाक्यम्, उभयोरपि मार्गयोर्गौडवैदर्भयोः । न बहु मन्यन्ते इति अत्र हेतुमाह नहीति । शब्दन्यायः शब्दजन्यान्वयबोधे नियमः वृत्त्युपस्था-

स्याप्यानामेवार्थानामन्वयबोध इत्येवंरूपः तं विलङ्घ्यत्यतिक्रामतीति तादृशी, अध्याहाराद्युपस्थितार्थविषयेत्यर्थः, प्रतीतिरन्वयबोधः, न हि सुभगा समीचीना, अर्थापत्त्याद्युपस्थापितार्थप्रतीतेस्तु न शाब्दबोधत्वं तदुत्तरमेव तस्याः सद्भावात् एवं तात्पर्य्यपर्य्यालोचनयार्थान्तरप्रतीतिरपि शाब्दबोधोत्तरकालीनैव, यत्र तु द्वारं द्वारमित्यादौ त्वरादिना पिधेहीत्यादिसाकाङ्क्षपदान्तरानुपादानेन शाब्दबोधासम्भवात्तदर्थं श्रुतार्थापत्त्या तादृशपदाध्याहारः तत्राध्याहृतपदेऽपि शक्तिग्रहाभ्युपगमेन तदर्थस्य वृत्त्युपस्थाप्यत्वान्न तन्नियमातिक्रमः । एतच्च विशिष्टशक्तिवादमभिप्रेत्योक्तम्, उपाधिशक्तिवादिभिस्तु आक्षेपगम्याया अपि व्यक्तेः शाब्दबोधाभ्युपगमान्निरुक्तनियमो नाङ्गीक्रियते इति विभावनीयम्॥ ७५ ॥

उत्कर्षवान् गुणः कश्चिद्यस्मिन्नुक्ते प्रतीयते ।
तदुदाराह्वयं, तेन सनाथा काव्यपद्धतिः ॥ ७६ ॥

उदारत्वं निरूपयति । उत्कर्षवानिति । यस्मिन् वाक्ये उक्ते सति उत्कर्षवान् वर्णनीयस्योत्कर्षजनकः कश्चिद्विलक्षणो गुणस्त्यागशौर्य्यादिरूपो धर्मः प्रतीयते व्यञ्जनया बोध्यते तद्वाक्यमुदाराह्वयम् उदारत्वगुणवत्त्वेन कथितमित्यन्वयः, इत्यञ्च वाक्यानां वर्णनीयस्योत्कर्षजनकगुणव्यञ्जकत्वमुदारत्वमिति लक्षणम्, उत्कर्षवानित्यनेन च अपकर्षजनकधर्मव्यञ्जकत्वस्य न निरुक्तगुणत्वं, यथा, हे हेलाजितबोधिसत्त्व वचसां किं

विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः। तृष्यत्पान्यजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः। अत्र तोयधेरपकर्षजनकोऽपेयपानीयत्वरूपधर्म्मो व्यङ्ग्य इति नौदार्य्यसद्भावः। वस्तुतस्तु, उत्कर्षवान् भङ्ग्या प्रतिपाद्यत्वेन चमत्कारजनकः गुणः उत्कर्षकोऽपकर्षको वा वर्णनीयधर्म्म इत्येवार्थः, एवञ्च अपकर्षजनकोऽपि धर्म्मो यत्र व्यज्यमानश्चमत्कारं जनयति तदपि वाक्यमुदारमिति तेन हे हेलाजितेत्यादावौदार्य्यमस्त्येव, अतएव क्रमदीश्वरेण, तदुदारं, गुणः कोऽपि यस्मिन्नुक्ते प्रतीयते, इति लक्षणं कृत्वा, यथा तावच्छरीरं मे यावत्त्वं पिहितानने त्युदाहरता वर्णनीयस्यापकर्षजनकव्यङ्ग्यव्यञ्जकत्वेऽप्युदारत्वमङ्गीकृतं। तादृशव्यञ्जकता च वाक्यस्य वाच्यार्थद्वारा तेनार्थगतमिदं, शब्दगतन्तु विकटत्वलक्षणं, विकटत्वञ्च पदानां नृत्यत्प्रायत्वं, यथा, स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां झणिति रणितमासीत्तत्र कलञ्चेति। तेनेति। तेनोदारत्वेन काव्यपद्धतिर्गौडवैदर्भरूपा काव्यरीतिः। एतेनोदारत्वे गौडवैदर्भयोः साम्यं दर्शितं। सनाथा साश्रया सोत्कर्षेत्यर्थः॥ ७६॥

अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत्।
तदवस्था पुनर्देव नान्यस्य मुखमीक्षते॥ ७७॥
इति त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते।
अनेनैव पथान्यत्र समानन्यायमूह्यताम्॥ ७८॥

उदारत्वमुदाहरति । अर्थिनामिति । कृपणा दीना, पुन-स्तदवस्था दीना सती, नान्यस्य मुखमैक्षत इति एकेनैव कृतार्थानामपरोपसर्पणासम्भवादिति भावः । अत्र वर्णनीयस्य राज्ञः प्रभूतदानरूपधर्मः प्रतिग्रहीतॄणां दाचकान्तरोपसर्पणाभावरूपभङ्ग्या व्यज्यमानः कमपि चमत्कारविशेषं जनयति ॥ ७७ ॥

इदमेव दर्शयति । इतीति । इत्यस्मिन् वाक्ये त्यागस्य भङ्ग्या व्यज्यमानस्य वर्णनीयराजदानस्य उत्कर्षश्चमत्कारविशेषजनकत्वं साधु शोभनं लक्ष्यते सामाजिकैर्ज्ञायते । सान्वित्यत्र खल्विति क्वचित् पाठः । खलु यतो लक्ष्यते, अत इदमौदार्य्यगुणवदित्यर्थः । अनेनैवेति । अनेनैव पथा एतत्पद्यप्रदर्शितया रीत्या समानः सदृशोऽन्यायो व्यवस्थितिर्यस्य तादृशमुदारत्वमन्यत्र पद्यान्तरेऽपि ऊह्यतां स्वयं विभाव्यताम् ॥ ७८ ॥

श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।
यथा, लीलाम्बुज, क्रीडासरो, हेमाङ्गदादयः ॥ ७९ ॥

अत्र मतान्तरं दर्शयति । श्लाघ्यैरिति । श्लाघ्यैर्विशेष्यार्थोत्कर्षकत्वेनाभिप्रेतार्थबोधकत्वात् सहृदयप्रशंसनीयैः, विशेषणैरिति बहुवचनादेकद्विविशेषणयोगे न चमत्कारातिशय इति सूचितम् । युक्तमिति वाक्यमित्यर्थः । उदारमुदारत्वगुणवत् । कैश्चिदित्यनेन साभिप्रायविशेषणवत्त्वस्यापुष्टार्थत्वदोषाभावरूपत्वादन्यैः परिकरालङ्कारत्वेनाभ्युपगमाच्च न गुणत्वमुचितमित्यस्मिन् कल्पे स्वास्वरसः सूचितः । उदा-

हरति। लीलाम्बुजेत्यादि। लीलाम्बुजमित्युक्ते अम्बुजस्य लीलेतिविशेषणाल्लीलोपयोगित्वेन वर्णाकारसौरभ्याद्यतिशयः प्रतीयते, एवं क्रीडासर इत्यत्र सरसः क्रीडोपयोगितया कमलकुमुदजलचरविहङ्गशोभितस्वच्छस्वादुजलत्वादिकं, हेमाङ्गदमित्यत्र च हेममयत्वेनाङ्गदस्य सुदृश्यत्वबहुमूल्यत्वादिकं। केचित्तु अग्राम्यत्वमर्थगुणमुदारत्वमाहुस्तन्न सम्यक्, अग्राम्यताया माधुर्य्यरूपत्वेन माधुर्य्यौदार्य्ययोरभिन्नतापत्तेः, यदाह क्रमदीश्वरः, सानुप्रासत्वमग्राम्यभावश्च मधुरोगुण इति, माधुर्य्यप्रस्तावे ग्रन्थकृदपि, तथाप्यग्राम्यतैवैनं भारं वहति भूयसेति॥ ७८॥

ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्।
पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम्॥ ८०॥

ओजोलक्षयति। ओज इति। समासः पदानामेकीभावः तस्य भूयस्त्वं दीर्घत्वं बहुभिः पदैः समास इत्यर्थः, तदोजः, एतत् समासभूयस्त्वरूपमोजः, गद्यस्य गद्यप्रबन्धविशेषस्य उत्कलिकाप्रायात्मकस्येत्यर्थः, चूर्णकादौ दीर्घसमासत्वाभावात्। जीवितं जीवितवत् सारभूतम्। इदञ्च मार्गद्वये समानं। विपर्य्ययमाह। पद्येऽपीति। अदाक्षिणात्यानां गौडानाम्। अपिना गद्यसमुच्चयः। इदं समासभूयस्त्वरूपमोजः। एकमद्वितीयं परायणमवलम्बनं, गौडानां बन्धगाढताप्रियत्वेन तन्मूलतयानुप्रासवद्दीर्घसमासस्याप्यत्यन्तमपेक्षणीयत्वात्। इदञ्चौजः शब्द-

गुणः समासभूयस्त्वरूपतया शब्दमात्रगतत्वात् । अन्ये तु, ओजः प्रौढिः सा च पञ्चविधा यथा, "पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा । प्रौढिर्व्यासमासौ च साभिप्रायत्वमस्य च" इति । तत्र पदार्थे वाक्यरचनं, यथा, चन्द्र इत्येकस्मिन् पदार्थे वक्तव्ये अत्रेर्नयनसमुत्थं ज्योतिरिति वाक्यरचनं । वाक्यार्थे पदाभिधा यथा, निदाघशीतलहिमकालोष्णशरीरा सुकुमारी वरयोषिदिति वाक्यार्थे वक्तव्ये वरवर्णिनीति पदाभिधानम् । एवमेकस्य वाक्यार्थस्य किञ्चिद्विशेषाभिधित्सया बहुवाक्यैरभिधानं व्यासः, बहुवाक्यप्रतिपाद्यस्यैकवाक्येन प्रतिपादनं समासः, एतच्चतुर्विधप्रौढिरूपमोजः शब्दगुणः साभिप्रायरूपन्त्वर्थगुण इत्याहुः ॥ ८० ॥

तद्गुरूणां लघूनाञ्च बाहुल्याल्पत्वमिश्रणैः ।
उच्चावचप्रकारं तद् दृश्यमाख्यायिकादिषु ॥ ८१ ॥

तदिति । तत्समासभूयस्त्वमुच्चावचप्रकारं नानाविधं, कथमित्याह । गुरूणामित्यादि । कचित् समासाङ्गपदघटकानां गुरुवर्णानां बाहुल्येन लघुवर्णानामल्पत्वेन, कचिद् गुरूणामल्पत्वेन लघूनाञ्च बाहुल्येन, कचिच्च द्विविधानां तेषां मिश्रणेन साम्येन च । तच्च आख्यायिकादिषु प्राचां रचितेषु गद्यप्रबन्धविशेषेषु । आदिना चम्पूकथादादीनां ग्रहणं, दृश्यं स्वयमनुभवनीयम्, एतच्च वैदर्भमतानुसारेणोक्तं गौडानां पद्यमयेष्वपि तत्सद्भावाभिमतत्वात्, यथा सूर्य्यशतकादौ

पद्यमयेऽपि दीर्घसमासाः । आख्यायिकेत्युपादानात् कथायां रौद्रादिरसेऽपि न दीर्घसमासोविधेय इत्यवधेयम् । प्रकारमित्यत्र प्रकारेणेति दृश्यमित्यत्र च दृष्टमिति क्वचित् पाठः । अन्यत्र च द्वितीयतदित्यत्र सदिति पाठः ॥ ८१ ॥

अस्तमस्तकपर्य्यस्तसमस्तार्कांशुसंस्तरा ।
पीनस्तनस्थिताताम्रकम्रवस्त्रेव वारुणी ॥ ८२ ॥

गौडानामभिमतं पद्यगतसमासभूयस्त्वमुदाहरति अस्तेति । अस्तोऽस्ताचलस्तस्य मस्तकं शृङ्गं तत्र पर्य्यस्ताः परितः पतिताः समस्ताः सायं तन्मात्रवृत्तित्वात् सकला येऽर्कांशवः सायंकालीनत्वादारक्ताः सूर्य्यकिरणास्तैः संस्तर आवरणं यस्यास्तादृशी वारुणी पश्चिमदिक् पीनस्तने स्थितमाताम्रं कम्रं शोभनं वस्त्रं यस्यास्तादृशी काचिन्नायिकेवेत्यन्वयः ॥ ८२ ॥

इति पद्येऽपि पौरस्त्या बध्नन्त्योजस्विनीर्गिरः ।
अन्ये त्वनाकुलं हृद्यमिच्छन्त्योजो गिरां यथा ॥ ८३ ॥
पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका ।
कस्य कामातुरं चेतो वारुणी न करिष्यति ॥ ८४ ॥

इतीति । पौरस्त्या गौडाः, ओजस्विनीः समासभूयस्त्वरूपौजोगुणवतीः । अपराभिमतमोजो लक्षयति । अन्ये त्विति । गिरां वाक्यानामनाकुलमनाकुलत्वम्, उद्भटसमासादिना ओद्धबुद्धेराकुलीभावात् तद्रहितत्वमित्यर्थः, तथा हृद्यं हृद्यत्वं

पारुष्यशैथिल्याभावेन सहृदयहृदयहारित्वमित्यर्थः एवंरूपमोज इच्छन्ति । अयमर्थः दीर्घसमासः स्वल्पसमासः समासाभावोवास्तु यस्मिन् श्रुते श्रोतॄणां बुद्धेरनाकुलत्वं श्रुतिसुखञ्च भवति तत्त्वमोज इति । एतदुदाहरति । पयेति । पयोधरो-मेघ एव पयोधरः स्तनः, श्लिष्टरूपकम्, तस्य तटस्य प्रान्तस्योत्सङ्गे लग्नं सन्ध्यातप एवांशुकमारक्तवसनं यस्यास्तादृशी । कामातुरमिति आरक्तवसनाच्छन्नस्तनतटनायिकासाम्येनोद्दीपकत्वादिति भावः । अत्र पूर्व्वार्द्धवाक्यं दीर्घसमासवदपि अस्तमस्तकेत्यादिश्लोकवाक्यवन्न श्रोतॄणां बुद्धिमाकुलयति प्रत्युत लालित्येन श्रवणसुखमादधाति, उत्तरार्द्धवाक्ये तु कामातुरमित्यल्पसमासः अन्यत्र समासाभावश्च, तथापि तत् किञ्चिद्गाढतया लालित्येन च प्रतीयमानं श्रोतॄनानन्दयति ॥ ८३ ॥ ८४ ॥

कान्तं सर्व्वजगत्कान्तं लौकिकार्थानतिक्रमात् ।
तच्च वार्त्ताभिधानेषु वर्णनास्वपि दृश्यते ॥ ८५ ॥

कान्तिं लक्षयति । कान्तमिति । लौकिकार्थस्य लोकप्रसिद्धवस्तुनोऽनतिक्रमादपरित्यागात् लोकप्रसिद्धवस्तुवर्णनादित्यर्थः सर्व्वजगतां देवादिमनुष्यान्तानां कान्तं कमनीयं बाधाद्यनुदयकृतार्थबोधसौकर्य्येण चमत्कारजनकतया स्पृहणीयमित्यर्थः, ईदृशं वाक्यं कान्तं कान्तिगुणवदित्यन्वयः, एवञ्च लोकसिद्धवस्तुवर्णनं कान्तिरिति लक्षणम् । सर्व्वजगत्का-

त्वमिति तु प्रशंसनं। यदाह क्रमदीश्वरः। वर्णनात्युक्तिशुद्ध्या या सा कान्तिरभिधीयत इति। इयञ्च कान्तिरर्थगुणः अर्थानुसन्धानप्रागनुपलम्भात्। औज्ज्वल्यरूपा तु शब्दगुणः औज्ज्वल्यञ्च शालिकादिपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वम्। अन्ये तु दीप्तरसत्वरूपमर्थगतं कान्तिगुणमाहुः। कान्तेर्विषयं दर्शयति। तच्चेति। तत्कान्तिमद्वाक्यं। वार्त्ताभिधानेषु अनामयप्रियालापप्रस्तावेषु। अनामयप्रियालापोवर्त्तिवार्त्ता च कथ्यत इत्युक्तेः। प्रियालापे हि लोकप्रसिद्धवस्त्वभिधानमेवोचितम्, अन्ये तु वार्त्ताभिधानेषु इतिहासवर्णनेषु, इतिहासानां यथावद्वर्णनस्यौचित्यात् अयथावर्णने असत्यताप्रतिभासेन विनेयानां प्रवृत्त्यसम्भवात् प्रबन्धस्य रामादिवत् प्रवर्त्तितव्यं न रावणादित्युपदेशपर्य्यवसायित्वानुपपत्तेरित्याहुः। वर्णनास्विति। वर्णनासु वस्तुस्वरूपनिरूपणेषु, तत्रापि यथावद्वर्णनस्यौचित्यात्, एताभ्यामन्यत्र तु न नियमः, अतएव व्यञ्जकार्थस्य स्वतःसम्भवित्वेन प्रौढोक्तिसिद्धत्वेन च नवानां काव्यभेदकरणं सङ्गच्छते। यदुक्तं प्रकाशकृता, अर्थशक्त्युद्भवोऽप्यर्थोव्यञ्जकः सम्भवी स्वतः। प्रौढोक्तिमात्रात् सिद्धो वा कवेस्तेनोम्भितस्य वा इति॥ ८५॥

गृहाणि नाम तान्येव तपोराशिर्भवादृशः।
सम्भावयति यान्येव पावनैः पादपांशुभिः॥ ८६॥

तत्र वार्त्ताभिधाने कान्तिमुदाहरति। गृहाणीति।

नामेति सम्भावनायाम् । तान्येव गृहाणि प्रशस्तगृहाणि, गृहपदमत्र प्रशस्तगृहे लाक्षणिकं प्राशस्त्यातिशयश्च व्यङ्ग्यः अतएवेदमर्थान्तरसंक्रमितवाच्यं नाम लक्षणामूलध्वनिकाव्यं शक्यतावच्छेदकलक्ष्यतावच्छेदकयोः सामान्यविशेषभावात् । तपोराशिस्तपोबहुलः । सम्भावयति गौरवं प्रापयति, अत्र प्रौढोक्तिमन्तरेणापि सत्पुरुषचरणसम्पर्केण स्थानस्य प्रशस्तताऽरूपोवर्णनीयार्थो लोकप्रसिद्ध एव, इयञ्च प्रियालापरूपा वार्त्ता ॥ ॥ ८६ ॥

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्य्याप्तस्तव बाहुलतान्तरे ॥ ८७ ॥

वर्णनायामुदाहरति । अनयोरिति । जृम्भमाणयोर्वृद्धिं गच्छतोः, बाहुलतान्तरे वक्षसि, अवकाशः स्थानं न पर्य्याप्तो न प्रभूतः अतिपीनोत्तुङ्गौ स्तनौ क्षुद्रायतने वक्षसि सम्बाधावेव वर्त्तेते इत्यर्थः । अत्र स्तनवर्णनायां स्तनयोः पीनोत्तुङ्गयोर्वक्षसि सम्बाधावस्थितिर्लोकप्रसिद्धैव वर्णिता ॥ ८७ ॥

इति सम्भाव्यमेवैतद्विशेषाख्यानसंस्कृतम् ।
कान्तं भवति सर्व्वस्य लोकयात्रानुवर्त्तिनः ॥ ८८ ॥

श्लोकद्वये कान्तिं सङ्गमयति । इतीति । इति वार्त्तावर्णनाविषयकश्लोकद्वयप्रतिपाद्यं सम्भाव्यमेव लोकप्रसिद्धतया सम्भावनीयमेव न त्वत्युक्त्या असम्भवदपि कल्पनीयम् । एतच्च विशेष आख्यायतेऽनेनेति विशेषाख्यानमुत्कर्षबोधकविशेषणं तेन

संस्कृतमलङ्कृतं यत् लोकयात्रानुवर्त्तिनो लोकव्यवहारमनुरुन्धानस्य लोकव्यवहारजनितसंस्कारसम्पन्नस्येत्यर्थः। सर्व्वस्य जनस्य कान्तं कमनीयं भवति, तस्मादेतदर्थप्रतिपादकवाक्यं कान्तिगुणवदित्यर्थः। विशेषाख्यानसंस्कृतमित्यनेनैतदुक्तं, लोकप्रसिद्धवस्तुवर्णनमात्रेणैव न कान्तेः सम्भवः अन्यथा, गौरपत्यं बलीवर्द्दो घासमत्ति मुखेन स, इत्यादेरपि लोकसम्भाव्यबलीवर्द्दकर्तृकघासभक्षणरूपवस्तुवर्णनया कान्तिमत्त्वेन काव्यत्वापत्तेः, किन्तु उत्कर्षबोधकविशेषणविन्यासेन वैचित्र्यजनकतया, वैचित्र्यस्यैव गुणालङ्काररूपत्वात्, प्रकृते च गृहाणि नाम तान्येवेत्यादिपद्यद्वये तत्तद्विशेषणकृतवैचित्र्यं स्फुटमेवेति विभावनीयम्॥ ८८॥

लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः।
योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः॥ ८९॥

गौडमार्गे निरुक्तकान्तेर्विपर्य्ययं दर्शयति। लोकातीत इवेति। इवाप्यर्थे। योऽर्थोऽत्यन्तं लोकातीतोऽपि लोकप्रसिद्धिमतिक्रान्तोऽपि अध्यारोप्य उपचर्य्य विवक्षितः, तेनार्थेन विदग्धा विदग्धं मन्यमाना गौडा इत्यर्थः, सोल्लुण्ठनोक्तिरियं। विगतं दग्धं दाहोऽसम्भव्यर्थानुभवकृतमनःक्लेशो येषां ते इति वा। अत्यतिशयेन तुष्यन्ति, इतरे जना वैदर्भाः पुनर्न तुष्यन्ति। अध्यारोप्येति। नच योग्यतायाः शाब्दबोधे हेतुत्वादारोपितार्थस्यायोग्यत्वेनान्वयबोधोऽपि कथमिति वाच्यं

रूपकाद्यलङ्कारस्यालङ्कारिकैः सर्व्वैरेवाभ्युपेयत्वेन शाब्दमते-राद्यार्थत्वस्यावश्यवक्तव्यत्वेन योग्यतायास्तत्प्रयोजकत्वानङ्गीकारात्, अतएवोक्तम्, अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हीति॥ ८८॥

देवधिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम्।
युष्मत्पादरजःपातधौतनिःशेषकिल्बिषम्॥ ९०॥

वार्त्ताभिधाने कान्तेर्विपर्य्ययं दर्शयति। देवधिष्ण्यमिति। धिष्ण्यं स्थानं। किल्बिषममङ्गलम्। अत्र महापुरुषचरणरजः-सम्पर्केण गृहस्य प्रशस्ततैव लोकप्रसिद्धा, देवानामसाम्येनाराध्यता तु प्रौढोक्त्याध्यारोपिता॥ ९०॥

अल्पं निर्म्मितमाकाशमनालोच्यैव वेधसा।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम्॥ ९१॥

वर्णनायां विपर्य्ययं दर्शयति। अल्पमिति। भवत्याः स्तन-जृम्भणं स्तनयोरुपचितिरेवंविधं वक्रवकाशव्यापि भावि भवि-ष्यति इदमनालोच्यैव वेधसा आकाशमल्पं निर्म्मितमित्यन्वयः। अत्र विधातुरनालोचनपूर्व्वकाल्पाकाशनिर्म्माणवर्णनेन स्तनयोः पीनोत्तुङ्गत्वप्रतिपादनं चाटुकारस्यात्युक्तिविजृम्भितं, तथाहि अतिमहतोऽप्याकाशस्याल्पत्वं, सर्व्वज्ञस्यापि विधातुरनालो-चनपूर्व्विका सृष्टिः, विल्वकोलतुल्ययोरपि स्तनयोर्मेरुमन्दर-हिमालयादिभिर्गिरिवरैरप्यपूर्य्यमाणेऽतिमहत्याकाशे समस्मा-

धावन्तीतिरित्येतत् सर्व्वं लोकप्रसिद्धिमतिक्रान्तमपि वर्ण्यमानं प्रयोक्तृरूपहसनीयतामाविर्भावयतीति न कान्तता वाक्यस्य ॥ ॥ ९१ ॥

इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम्।
प्रस्थानं प्राक् प्रणीतन्तु सारमन्यस्य वर्त्मनः ॥ ९२ ॥

उपसंहरति इदमिति। इदमेवंविधं काव्यवाक्यमत्युक्तिरित्युक्तमत्युक्तिरिति नाम्ना आलङ्कारिकैः कथितम्। यथाह भोजराजः, "लौकिकार्थमतिक्रम्य प्रस्थानं यत्र वर्ण्यते। तदत्युक्तिरिति प्रोक्तं गौडानां मनसो मुदे" इति॥ इदमित्यत्र इयमिति क्वचित् पाठः। गौडोपलालितं गौडैश्चमत्कारजनकतया व्यवहृतम्। अत्र वैदर्भाणामनादर इत्याह। प्रस्थानमिति। प्राक्प्रणीतं प्रस्थानन्तु लोकसम्भाव्यवस्तुवर्णनरूपमन्यस्य वर्त्मनो वैदर्भमार्गस्य सारमुपादेयं, तदयं कान्तौ गौडवैदर्भयोर्विपर्य्ययः ॥ ९२ ॥

अन्यधर्म्मस्ततोऽन्यत्र लोकसीमानुरोधिना।
सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥ ९३ ॥
कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च।
इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥ ९४ ॥

समाधिं लक्षयति। अन्यधर्म्म इति। अन्यस्याप्रस्तुतस्य कस्यचिद्धर्म्मो गुणक्रियारूपः, ततस्तस्माद्धर्म्मिणोऽन्यत्र कस्मिंश्चित् प्रस्तुते लोकसीमानुरोधिना लोकमर्य्यादामनुरुन्धानेन

वक्ता यत्र वाक्यार्थं सम्यगाधीयते गौणशब्दप्रयोगेण साध्यव-सानगौण्या लक्षणया उपचर्य्यते स वाक्यार्थः समाधिः समाध्या-ख्यगुणवान् स्मृतः, यत्रेत्यत्र यत्त्विति पाठे क्रियाविशेषणं, यत् समाधीयते स समाधिः सम्यगाधानरूपः समाध्याख्यो गुण इत्यर्थः। उपचारस्त्वत्राहार्य्याभेदप्रतीतिरूपः स च लक्षणा-याः प्रयोजनभूतः लक्षणाजन्यसादृश्यप्रतीतेरनन्तरमेव तन्मूल-व्यञ्जनया तस्य प्रतीतिसम्भवात्। उक्तञ्च प्रकाशकृता गौण-लक्षणप्रस्तावे, भेदेऽपि ताद्रूप्यप्रतीतिः सर्व्वथैवाभेदावगमश्च प्रयोजनमिति। लक्षणा चात्र साध्यवसानरूपा सा च विषयस्या-नुपादान एव सम्भवति तेन च विषयोपादाने सारोपगौण्यां न समाधेः सम्भवः। इत्यञ्च प्रस्तुतस्य धर्म्मं निगीर्य्य तत्र सदृ-शतया अप्रस्तुतधर्म्मस्य तादात्म्याध्यवसानं समाधिरिति लक्ष-णम्। धर्म्मेत्यनेन धर्म्मिणोऽध्यवसाने नायं गुण इति सूचितं। यथा, लतामूले लीनो हरिणपरिहीनो हिमकरः स्फुरन्ता-राकारा गलति जलधारा कुवलयात्। धुनीते बन्धूकं तिल-कुसुमजन्मापि पवनो बहिर्द्वारे पूर्णं परिणमति कस्यापि कृ-तिनः, इत्यादौ मुखादौ धर्म्मिणि धर्म्मिणश्चन्द्रादेरध्यवसानम्, अत्रातिशयोक्तिरलङ्कारः। लोकसीमानुरोधिनेत्यनेन स्वेच्छ-या विसदृशधर्म्माध्यासेन लोकविरोधे न समाधिसम्भवः। यथा बृंहन्ति मशका यत्र तत्र निद्रा सुदुर्लभेति, अत्र बृंहितं करि-गर्ज्जितमित्यभिधानात् करिधर्म्मस्य बृंहणस्य मशककर्तृतेऽध्यव-सानं लोकविरुद्धम्। उदाहरति यथेति, अत्राप्रस्तुतस्य चक्षुषो

धर्म्मौ निमीलनोन्मेषौ प्रस्तुतयोः कुमुदकमलयोर्दलसङ्कोच-विकाशरूपधर्म्मतादात्म्येनाध्यवसितौ, इदञ्चाध्यवसानं न लोक-विरुद्धं विषयविषयिणोरनयोः सादृश्यातिशयवत्त्वेनाभिन्न-प्रायत्वात्, तथात्वेन चानयोरेकशब्दप्रयोगप्रतिपाद्यत्वं, यथा चक्षुर्निमीलति कुमुदं निमीलति चक्षुरुन्मिषति कमलमुन्मि-षतीति, इदमेव दर्शयति। इतीति। नेत्रक्रियाध्यासात् नेत्रस्य क्रियाभ्यां निमीलनोन्मेषाभ्यां सह तादात्म्यारोपात् कुमुद-कमलधर्म्माभ्यां दलसङ्कोचविकाशाभ्यां तद्वाचिनो श्रुतिर्लब्धा नेत्रक्रियावाचकः शब्दः स्वप्रतिपादकतया प्राप्तः, पदार्थाना-मेकत्वेनैकशब्दप्रतिपाद्यत्वौचित्यात् यथा घटो घट इति विभि-न्नत्वे तु विभिन्नशब्दप्रतिपाद्यत्वं यथा घटः पट इति। अयञ्च समाधिरर्थगुणः अर्थे अर्थान्तरारोपस्वरूपत्वात्। केचित्तु, अयोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपमर्थगुणं समाधि-माहुः, तत्रायोनिरर्थः कविसम्प्रदायपरिशीलितपद्धति-मन्तरेण स्वबुद्धिविभवमात्रप्रादुर्भावित उपमानोपमेयभावा-दिरूपः। यथा, सद्योमुण्डितमत्तहूनचिबुकप्रस्पर्द्धिनारङ्गक-मिति। अत्र नारङ्गकस्य हूनचिबुकेन सहोपमानोपमेयभावो न केनापि प्राक्तनकविना प्रदर्शितः केवलमेतत्कविनैव स्वबुद्ध्या प्रादुर्भावितः। अन्यच्छायायोन्यर्थस्तु प्राक्तनकविपर-म्पराव्यवहृतः किञ्चिद्भङ्ग्यन्तरेण वर्णितः। यथा, 'निज-नयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि। नीलोत्पले-ऽपि विमृशति करमर्पयितुं कुसुमलावी' इति। अत्र नयन-

नीलोत्पलयोः सादृश्यं कविसम्प्रदायप्रसिद्धं विच्छित्तिविशेषेणात्र निबद्धम्। शब्दगुणभूतः समाधिस्तु आरोहावरोहक्रमरूपोऽन्यैरुक्तो ज्ञातव्यः। तत्र आरोहोऽनुप्रासादिना उत्कर्षः अवरोहस्तदभावादपकर्षः तयोः क्रमो वैरस्यानावहो विन्यासः। यथा, चञ्चद्भुजभ्रमितचण्डगदाभिघातेत्यादि। अत्र पादत्रये बन्धस्य गाढता चतुर्थपादे त्वपकर्षः सोऽपि तीव्रप्रयत्नोच्चार्यतया गाढायमानो वैरस्यं न जनयति ॥ ९३ ॥ ९४ ॥

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ ९५ ॥

समाधेर्गौणलक्षणामूलकत्वं प्रकटयति। निष्ठ्यूतोद्गीर्णेत्यादि। निष्ठ्यूतोद्गीर्णवान्तादिपदं गौणवृत्तिव्यपाश्रयं गौणलक्षणामूलकं गौणलक्षणया स्वमुख्यार्थसदृशेऽर्थे प्रयुक्तं सदित्यर्थः। अतिसुन्दरं सहृदयहृदयहरत्वेन समाधिगुणवत्। अत्रार्थगुणस्यास्य शब्दगतत्वं परम्परयेति बोध्यम्। अन्यत्रेति। गौणवृत्तिव्यपाश्रयत्वाभावेन मुख्यार्थ एव प्रयोगे इत्यर्थः, ग्राम्यकक्षां विगाहते ग्राम्यत्वरूपदोषदुष्टतां प्राप्नोति। मुख्यवृत्त्या प्रयुक्तं निष्ठ्यूतादिपदं न परं गुणवत् प्रत्युत दोषवदपि गौणवृत्त्या तु गुणवदेवेति लक्षणाफलभूततादात्म्यारोप एवात्र हेतुरिति विभावनीयम्। अत्र गौणवृत्तिपदं सम्भावनाया उपलक्षकं तेनोत्प्रेक्षायां मुख्ययापि वृत्त्याश्लीलपदप्रयोगे गुण एव एतच्चाग्रिमश्लोके दर्शयिष्यामः ॥ ९५ ॥

पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ ८६ ॥

एतदेव दर्शयन्नुदाहरति । पद्मानीति । सायन्तनसमीर-मङ्गस्खलत्परागपद्मवर्णनमिदम् । अर्कांशुनिष्ठ्यूताः सूर्य्यकिरणैर्निक्षिप्ताः पावकविप्रुषो वह्निकणान् । उद्गीर्णारुणरेणुभिरिति पावकबिन्दुवमनोत्प्रेक्षायां हेतुः। अत्र देहान्तःकफादि-निक्षेपशक्तयोः निष्ठिवोद्गधात्वोर्निक्षेपमात्रार्थे लक्षणा सामान्य-शब्दस्य विशेषार्थपरत्ववद्विशेषार्थकस्यापि सामान्यपरत्वे तद-भ्युपगमस्यौचित्यात्, सा च शक्यार्थलक्ष्यार्थयोः सादृश्याद्गौणी सादृश्यञ्च कफनिक्षेपो विप्रुड्निक्षेप इवेति विशिष्टनिक्षेपयो-स्तयोर्विभिन्नत्वात् । वमन्तीवेत्यत्र तु न लक्षणा आहार्य्यवत् सम्भावनायामपि बाधोदयस्याकिञ्चित्करत्वेनान्वयबोधाप्रति-बन्धात्, लक्षणाफलीभूततादृरूप्यप्रतीतेरिव सम्भावनाया अपि चमत्कारजनकत्वेन गुणत्वं युज्यते, तस्मात् पूर्व्वत्र गौणवृत्ति-पदस्य सम्भावनोपलक्षकत्वं सुष्ठूक्तम्, एवम्, आस्वाद्य निरवशेषं विरहिवधूनां मृदूनि मांसानि। करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनि, इत्यत्र सापह्नवोत्प्रेक्षायां निष्ठीवतीत्यत्र न लक्षणा ॥ ८६ ॥

इति हृद्यमहृद्यन्तु निष्ठीवति वधूरिति ।
युगपन्नैकधर्म्माणामध्यासश्च स्मृतो यथा ॥ ८७ ॥

इतीति । इति पूर्व्वश्लोकगतं गौणवृत्तिव्यपाश्रयं निष्ठ्यूता-

तदेतत्काव्यसर्व्वस्वं समाधिर्नाम योगुणः ।
कविसार्थः समग्रोऽपि तमेनमनुगच्छति ॥ १०० ॥

समाधिमुपसंहरति । तदेतदिति । तत्तस्मात् पूर्व्वप्रदर्शितनयेन काव्यस्य चारुत्वातिशयजनकत्वादित्यर्थः । समाधिर्नाम योगुणः, एतत् काव्यस्य सर्व्वस्वं काव्येऽवश्यमपेक्षणीयमित्यन्वयः । समग्रोऽपि गौडो वैदर्भोऽपरोवापि, तमेनमनुगच्छति काव्ये तन्निवेशाय यतते। एनमित्यत्र एकमिति क्वचित्पाठः, मुख्यमित्यर्थः, प्रशंसनायैतत् सर्व्वेषामेव प्राणत्वेनोक्तत्वात् । इति दशगुणा निरूपिताः, एषु च केचिद्दोषाभावरूपाः केचिच्चालङ्काररूपा अपि प्राचां मतमनुरुन्धानेन ग्रन्थकृता गुणत्वेनोक्ताः, नव्यास्तु मतेऽस्मिन्ननादरवन्तोमाधुर्य्यौजःप्रसादाख्यं रसगतं गुणत्रयमेवेच्छन्ति यथा प्रकाशकारः। माधुर्य्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दशेति॥ १०० ॥

इतिमार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् ।
तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकवि स्थिताः ॥ १०१ ॥

तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरावित्यनेन प्रतिज्ञातं गौडवैदर्भयोर्विभिन्नतया निरूपणमुपसंहरति। इतीति। इति पूर्व्वोक्तप्रकारेण तयोर्गौडवैदर्भयोः, स्वरूपनिरूपणात्, इति वैदर्भमार्गस्य प्राणादशगुणाः स्मृताः, एषां विपर्य्ययः प्रायोदृश्यते गौडवर्त्मनीत्यनेन गुणसद्भावाभावकृतस्वरूपप्रतिपादनादित्यर्थः। भिन्नमत्यन्तविसदृशं। नन्वन्येऽपि लाट-

पाञ्चालादिका मार्गभेदाः सन्ति तेऽपि निरूप्येरन्नित्याश-ङ्क्याह तद्भेदा इति । गौडवैदर्भीभ्यां भिन्नास्तस्य काव्यमा-र्गस्य भेदा लाटपाञ्चालादयः प्रतिकवि स्थिताः तत्तद्देशजात-कविभिरादृताः । न शक्यन्त इति, भेदाः सत्यं सन्त्येव परन्तु अनेकत्वेन वक्तुमशक्यत्वान्न निरूपिता इत्यर्थः । तद्भेदा गौड-वैदर्भ्योरवान्तरभेदा इति वा ॥ १०१ ॥

इक्षुक्षीरगुडादीनां माधुर्य्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥ १०२ ॥

पूर्व्वोक्तमेव दृष्टान्तेन द्रढयति । इक्ष्विति । आदिना मधुरमात्राणां ग्रहणं । अन्तरं भेदः । महदिति स्फुटं प्रतीय-मानत्वादनपलपनीयमित्यर्थः । तदन्तरम् । आख्यातुं तत्तन्मा-मात्रेण निर्देष्टुं । सरस्वत्याऽपि का कथान्येषां वागधिष्ठात्र्या देव्यापि, न शक्यत इति असङ्ख्यत्वादिति भावः । मधुरवस्तूनां माधुर्य्यभेदवत् काव्यमार्गाणां भेदोऽनिर्व्वचनीयस्तस्माद्भेदद्वय-मेव स्फुटभेदं प्रदर्शितमिति भावः ॥ १०२ ॥

नैसर्गिकी च प्रतिभा श्रुतञ्च बहु निर्म्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥ १०३ ॥

एवमस्य शरीरमुक्त्वा कारणमाह । नैसर्गिकीति । नैस-र्गिकी स्वाभाविकी प्राक्तनजन्मसिद्धेत्यर्थः प्रतिभा शक्तिः सं-स्कारविशेष इत्यर्थः । तथा बहु अनेकं छन्दोव्याकरणकोष-

कलाचतुर्वर्गगजतुरगखड्गादिलक्षणात्मकमित्यर्थः, निर्म्मलं सदुपदेशेन निःसन्देहतयाधिगत्य सम्यक् परिशीलितमित्यर्थः, श्रुतं शास्त्रञ्च बहुनिर्म्मलशास्त्रानुशीलनजनिता व्युत्पत्तिरित्यर्थः, एतदुपलक्षणं लोकदर्शनजनितापि व्युत्पत्तिः काव्यकारणं, तथा अमन्दोऽनल्पः अभियोगोऽभ्यासश्च काव्यशोपदेशेन पौनःपुन्येन प्रवृत्तिरित्यर्थः, एतत्त्रितयं समुदितं नतु व्यस्तम्, अस्या निरुक्तशरीरायाः काव्यस्य सम्पदः समृद्धेः कारणं काव्यसमृद्धिकृतिशप्त्योर्हेतुः करणवज्ज्ञानस्याप्येतत्त्रितयजन्यत्वात्। कथञ्चिच्चिरपरिचिन्तनया अप्रतिभादिमतामेकद्विकाव्यकरणेऽतिप्रसङ्गवारणाय सम्पद इत्युक्तम्। अत्र कारणता व्यासक्ता नतु प्रत्येकपर्य्याप्ता अव्युत्पन्नानामयतमानानाञ्च बालादीनां केवलप्रतिभया काव्यानुदयदर्शनात् तेषामेव च कालान्तरेण व्युत्पत्त्यभ्यासवतां काव्यदर्शनात्, तथा व्युत्पन्नानां यतमानानाञ्च केषाञ्चित् प्रतिभाभावेन तददर्शनात् तथा यतमानानां तेषां दर्शनादयतमानानाञ्चादर्शनादित्यन्वयव्यतिरेकाभ्या[illegible] निश्चयः। इदमेवोक्तं प्रकाशकृता, शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्। काव्यज्ञशिक्षयाभ्यास इति [illegible]तुस्तदुद्भवे इति। व्याख्यातञ्च तेनैव, इति त्रयः "समुदिता न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्म्माणे समुल्लासे च हेतुर्नतु हेतव" इति। अन्ये तु प्रतिभैव काव्यस्य कारणं, व्युत्पत्तिस्तस्य चारुत्वहेतुः अभ्यासस्तु वृद्धिहेतुः। प्रतिभा च क्वचित्स्वतः प्रसरति क्वचिच्च देवताद्यनुग्रहात्, भाविकवित्वानां बालानां सत्यामपि प्रति-

भार्यां काव्यानुदयात् कालस्य तत्सहकारित्वमङ्गीकार्यमित्याहुः, यथा, "कवित्वं जायते शक्तेर्वर्द्धतेऽभ्यासयोगतः। तस्य चारुत्वनिष्पत्तौ व्युत्पत्तिस्तु गरीयसी" इत्यादि। मते चास्मिन् कार्य्यभेदान्न प्रतिभादित्रितयगता कारणता व्यासक्ता। वयन्तु, प्रतिभापरपर्य्याया शक्तिरेव काव्यक्षतिप्रसिद्धिहेतुः शक्तिश्च संस्कारविशेषरूपा, अतिरिक्ता वा मण्यादेर्दाहिकादिवत्, सा च प्राक्तनी चेदानीन्तनी च, तत्र प्राक्तनी सिद्धैवास्ति इदानीन्तनी तु शास्त्रकाव्यलोकदर्शनादिजनितविलक्षणव्युत्पत्त्या नियताभ्यासेन च पुरुषे जायते कारणत्वञ्चानयोर्दण्डचक्रादिवन्मिलितयोरेव, अव्युत्पन्नानां बालादीनामैहिकशक्त्यभावेन व्युत्पन्नानां यतमानानामपि केषाञ्चित् प्राक्तनशक्त्यभावेन काव्यानुदयदर्शनादिति ब्रूमः॥ १०३॥

न विद्यते यद्यपि पूर्व्ववासना<br>
गुणानुबन्धि प्रतिभानमद्भुतम्।<br>
श्रुतेन यत्नेन च वागुपासिता<br>
ध्रुवं करोत्येव कमप्यनुग्रहम्॥ १०४॥

प्रतिभादित्रितयं काव्यसम्पदः कारणमित्युक्तं तत्र यदि व्युत्पत्त्यभ्यासवन्तस्तत्सम्पादनप्रवृत्ता अपि कृतार्था न भवन्ति तर्हि किं ते प्रतिभाया अभावनिश्चयेन तस्मादिरमेयुर्नहि नहीत्याह। न विद्यत इति। अद्भुतमनर्गलकाव्यसम्पत्सम्पादकत्वादाश्चर्य्यं, पूर्व्ववासना जन्मान्तरीणसंस्काररूपं

तथा गुणानुबन्धि काव्यसम्पत्सम्पादनेनोत्कर्षातिशयजनकं प्रतिभानं प्रतिभा यद्यपि न विद्यते । यद्वा वासना वाञ्छा, वासनाविषयोगुणो वासनागुणः सर्व्वप्रार्थनीयकवित्वकीर्त्त्यादिरूपगुण इत्यर्थः, शाकपार्थिवादित्वान्मध्यपदलोपिकर्म्मधारयः । पूर्व्वेषां प्राक्तनकवीनां वासनागुणसम्यानुबन्धि जनकं प्रतिभानमित्यन्वयः । अनन्तरं तथापि न विरस्यतामित्यध्याहार्य्यं । नन्वसत्यां प्रतिभायां कोगुणस्तत्प्रयासेनेत्याशङ्कायामाह । श्रुतेनेति । श्रूयत इति श्रुतं श्रवणं प्राक्तनकाव्यप्रबन्धानुशीलनमित्यर्थः तथा यत्नेन तत्करणप्रयासेन च, उपासिता निरन्तरमाराधिता सती, कमप्यनुग्रहं ध्रुवं करोत्येव अवश्यं किञ्चित् काव्यसम्पादनसामर्थ्यं जनयत्येव, अत्र ध्रुवैवेतिशब्दद्वयेन व्यभिचाराशङ्का निरस्ता । इत्यञ्च प्रतिभादिसमुदायः काव्यसम्हृद्धिं प्रत्येव हेतुः किञ्चित्तु व्युत्पत्त्यभ्यासाभ्यामपि भवतीति न पूर्व्वापरविरोधः ॥ १०४ ॥

तदस्ततन्द्रैरनिशं सरस्वती
श्रमादुपास्या खलु कीर्त्तिमीप्सुभिः ।
कृशे कवित्वेऽपि जनाः कृतश्रमा
विदग्धगोष्ठीषु विहर्त्तुमीशते ॥ १०५ ॥

इत्याचार्य्यदण्डिनः कृतौ काव्यादर्शे मार्गविभागो नाम प्रथमः परिच्छेदः ॥ १ ॥

पूर्व्वोक्तमुपसंहरति । तदिति । तत्तस्मात् । अस्ततन्द्रैरन-

सर्वैः। श्रमात् श्रममङ्गीकृत्य। उपास्या अनुशीलनीया। कीर्त्तिः कृतिश्लाघ्यन्यतरजन्यं यशः। फलान्तरमाह। कृशे इत्यादि। कृशे अल्पे कवित्वेऽपि काव्यस्य करणे ज्ञाने च, विदग्धगोष्ठीषु कविसामाजिकसभासु। विहर्त्तुमीशते समादरं लब्धुमर्हन्ति, एतेन कीर्त्तिसमादरौ कवित्वसामाजिकत्वयोः फलत्वेन प्रतिपादितौ तल्लिप्सुभिरवश्यमेवात्र सततं यतनीयमिति सूचितम्। स्वल्पयोरप्यनयोः स्वर्गादिसाधनत्वं श्रुतिरप्याह यथा। एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग्भवतीति। एक इत्यत्रापिकारोबोध्यः, एकोऽपीत्यर्थः। सम्यग्ज्ञात इत्यत्र च वाकारः, सम्यग्ज्ञातोवेत्यर्थः ॥ १०५ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्य्यविरचितायां मालिन्यप्रोञ्छनीसमाख्यायां काव्यादर्शटीकायां प्रथमः परिच्छेदः ॥ ॥ १ ॥

काव्यादर्शः ।



## द्वितीयः परिच्छेदः ।

काव्यशोभाकरान् धर्म्मानलङ्कारान् प्रचक्षते ।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ १ ॥

अथ धर्म्मिणि निरूपिते धर्म्माणां हेयोपादेयता ज्ञायत इति प्रथमपरिच्छेदे शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलीत्यनेन धर्म्मिभूतं काव्यशरीरं निरूप्य, काव्यं कल्पान्तरस्थायि जायेत सदलङ्कृतीत्यनेन प्रशंसनादुपादेयधर्म्मानलङ्कारान्निरूपयितुं द्वितीयपरिच्छेदमारभमाणस्तत्र लक्षयितव्यानां तत्तद्विशेषालङ्काराणां निरूपणं सामान्यलक्षणनिरूपणानन्तरमेव सुप्रतिपादमिति प्रथममलङ्काराणां सामान्यलक्षणं निरूपयति। काव्यशोभाकरानिति। काव्यस्य इष्टार्थव्यवच्छिन्ना पदावलीत्युक्तलक्षणस्य काव्यशरीरस्य शोभा श्लेषादिगुणकृतवैचित्रं तच्च चमत्कारविशेषजनकज्ञानगोचरत्वं तत्करान् तदतिशयहेतून धर्म्मान् शब्दार्थगतान् वर्णावृत्त्यादिसादृश्यादीन् अलङ्कारान् प्रचक्षते अलङ्कारेतिनाम्ना प्राञ्चो-व्यवहरन्ति यथा हारादयः शरीरस्य रूपयौवनादिकृत-शोभां पुष्णन्तोऽलङ्कारपदवाच्यास्तथा शब्दार्थरूपस्य काव्यशरीरस्य श्लेषादिगुणकृतवैचित्रं पुष्णन्तोऽनुप्रासोपमादय इति

मते चास्मिन् गुणानामलङ्काराणाञ्च शब्दार्थगतत्वम्, इत्यञ्च काव्यशोभायाः कर्त्तारो गुणास्तदतिशयहेतवस्त्वलङ्कारा इति गुणालङ्कारयोर्विवेक इति वामनाद्युक्तमादरणीयं। नव्यास्तु रसस्यैव धर्म्मा माधुर्य्यौजःप्रसादास्त्रय एव गुणाः, हारादिवद्वाच्यवाचकलक्षणाङ्गगताः स्वाश्रयशोभाजननद्वाराङ्गिनो रसस्य शोभाजनका अलङ्काराः गुणालङ्काराणां विभिन्नाश्रयत्वादेव च भेद इत्याहुः, नैतत् समीचीनं मधुरो रस इत्याद्यनुभवसिद्धानां रसस्वरूपविशेषकाणां माधुर्य्यादीनां गुणत्वाङ्गीकारे ग्रन्थकर्तॄणां काव्ये तादृशगुणनिवेशाभ्यनुज्ञानवैफल्यात् सरसत्वप्रतिपादनाभ्यनुज्ञानेनैव तदभ्यनुज्ञानसिद्धेः तादृशगुणानां रसाव्यभिचारित्वात्, गुणाभिव्यञ्जकशब्दार्थप्रयोगाय तदिति चेत् तर्हि तादृशव्यञ्जकताया एव गुणत्वं वक्तुमुचितं सौन्दर्य्यादेरात्मोत्कर्षकत्ववत् तस्या एव रसोत्कर्षकत्वात् उत्कर्षकस्यैव च गुणत्वात्, तादृशव्यञ्जकता च श्लेषादिधर्म्मवत्त्वरूपैव ततश्च सिद्धं श्लेषादीनामेव गुणत्वं शब्दार्थगतत्वञ्चेति। एवं स्वाश्रयशोभाजननद्वारा रसशोभाजनकत्वमलङ्कारत्वमित्यप्यविचारविजृम्भितं नव्यानां, नीरसेऽपि सकलालङ्कारिकैः काव्यतया स्वीकृते मध्यमकाव्यप्रभेदे चित्रे चोपमादीनामनलङ्कारतापत्तेः न चेष्टापत्तिः, नव्यैरपि तत्र तेषामलङ्कारत्वेनेष्टत्वात्। यथा काव्यप्रकाशे। वस्तु वालङ्कृतिर्व्वापि षड्विधोऽसौ व्यनक्ति यत्। वस्त्वलङ्कारमथवा तेनासौ द्वादशात्मक इति। शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतं। चित्रमिति गुणालङ्कारयुक्तमिति। यत्र तु नास्ति रसस्योक्ति-

वैचित्र्यमात्रपर्य्यवसायिन इत्यादिसन्दर्भश्च। न च तत्रापि कथञ्चित् परम्परया रसस्पर्शोऽस्तीति वाच्यं तर्हि सर्व्वत्रैवे-दृशरससद्भावेनासंलक्ष्यत्वापत्त्या तेषां निरुक्तभेदकरणानौ-चित्यात्। न च नीरसस्थले रसोपकारयोग्यत्वमेवालङ्कारत्व-मस्त्विति वाच्यं योग्यताया निर्व्वक्तुमशक्यत्वात् कारणतावच्छे-दकधर्म्मवत्त्वस्य तथात्वे च तादृशधर्म्माणामननुगमात्, तस्मात् देहस्य रूपयौवनादय इव शब्दार्थयोः श्लेषादय एव गुणाः सौन्दर्य्योपस्कृतस्यात्युत्कर्षजनकाहारादय इव श्लेषाद्युपस्कृत-योस्तयोः शोभातिशयजनका अनुप्रासोपमादयोऽलङ्कारा इति प्राचां मतमेव साधीयः समुन्नसतीति सुधीभिर्व्विवेचनीयम्। उक्तञ्च, यदि भवति वचश्च्युतं गुणेभ्योवपुरिव यौवनवन्ध्यमङ्गना-याः। अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्र-यन्ते इति। इत्थं सामान्यलक्षणमभिधाय वक्तव्येषु विशेषलक्ष-णेषु स्वस्यासामर्थ्यं प्रकाशयन्नौद्धत्यं परिहरति। ते चेति। कः पण्डितम्मन्यः, तानलङ्कारविशेषान्, कार्त्स्न्येन सम्पूर्णतया सप्रभे-दानित्यर्थः, वक्ष्यति वक्तुं शक्ष्यति, भाविप्रयोगेन पूर्व्वं न को-ऽप्यवोचत् परञ्च न कोऽपि वक्तुं शक्नुतीति सर्व्वथा ते कार्त्स्न्येन दुर्व्वचा इति सूचितम्। यतस्ते चालङ्कारविशेषा अद्यापि विक-ल्प्यन्ते विविधेन भणितिभङ्गीप्रकारेण कल्प्यन्ते नवीनैरुद्भा-व्यन्ते प्राचीनोक्तलक्षणा एव ते किञ्चिद्वैचित्र्यमुद्भाव्य बहूलीक्रि-यन्त इत्यर्थः। अतः कल्पनाया अविरामात् इयत्तया निरूपणं सुदूरपराहतमिति भावः॥ १॥

किन्तु वीजं विकल्पानां पूर्व्वाचार्य्यैः प्रदर्शितम।
तदेव परिसंस्कर्त्तुमयमस्मत्परिश्रमः॥ २॥

तर्हि किमलङ्कारविशेषा भक्ता न निरूपणीया इत्याशङ्क्याह। किन्त्विति। किन्तु विकल्पानां नवीनैर्विकल्पनीयानामलङ्कारभेदानां वीजं सामान्यलक्षणरूपं मूलं पूर्व्वाचार्य्यैः प्रदर्शितं, यथा नवीनैरुद्भावितानामुपमाभेदानां वीजभूतं पूर्व्वाचार्य्यैः प्रदर्शितं सादृश्यमुपमेत्युपमासामान्यलक्षणं तदुपजीव्यैव भेदानां प्रवर्त्तितत्वात् एवं रूपकादिभेदानां रूपकादिसामान्यलक्षणमिति। प्रदर्शितमित्यत्र च प्रायेणेति बोध्यं नवीनैरुद्भावितानां केषाञ्चिदलङ्कारविशेषाणां सामान्यलक्षणस्य पूर्व्वाचार्य्यैरनुक्तत्वात्, यथा निश्चयोल्लेखादयो नवीनालङ्काराः प्राचीनैरनुक्तलक्षणाः। तदेवेति। विकल्पमूलभूतं पूर्व्वाचार्य्योक्तं सामान्यलक्षणमेव परिसंस्कर्त्तुं स्फुटशब्दाभिधानादिना विशदयितुम्। अयमस्मत्परिश्रम इति। सामान्यलक्षणान्येव मया विशदीक्रियन्ते। कश्चिद्वैचित्र्येण भेदाः सम्भवन्ति चेत् स्वयमूहनीया इति भावः। एतच्चौद्धत्यपरिहारार्थमेवोक्तं स्वयमेवोपमादिभेदानां निरूपयिष्यमाणत्वादिति ध्येयम्॥ २॥

काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः।
साधारणमलङ्कारजातमन्यत् प्रदर्श्यते॥ ३॥

अलङ्कारनिरूपणप्रतिज्ञया पूर्व्वनिरूपितानां श्रुत्यनुप्रा-

सादीनामपि पुनर्निरूपणप्रसक्त्या निरूपितानां निरूपणं पिष्टपेषणवद्विफलमिति मन्यमानस्तद्भिन्नानां निरूपणं प्रतिजानीते। काश्चिदिति। मार्गविभागार्थं गौडवैदर्भमार्गयोः प्रस्फुटान्तरत्वप्रतिपादनार्थं। काश्चिदलङ्क्रियाः श्रुत्यनुप्रासच्छेकवृत्त्यनुप्रासयमकरूपालङ्काराः। उक्ता इति। यया कयाचिच्छ्रुत्या यत् समानमनुभूयत इत्यादिना श्रुत्यनुप्रास उक्तः, तथा वर्णावृत्तिरनुप्रास इत्यादिना छेकवृत्त्यनुप्रासावुक्तौ। आवृत्तिं वर्णसङ्घातगोचरां यमकं विदुरित्यनेन यमकञ्च। अतो वैफल्यान्नैते पुनर्निरूपयिष्यन्ते इति भावः। अन्यदेतेभ्योभिन्नं। साधारणं गौडवैदर्भयोः समानं, स्वभावाख्यानादीनां द्वयोरपि मार्गयोर्निवेशनीयत्वात्। श्रुत्यनुप्रासादयस्त्वसाधारणा एव गुणनिरूपणप्रकरणे ज्ञातव्याः। तृतीयपरिच्छेदे यमकस्य पुनर्निरूपणन्तु प्रभेदप्रदर्शनार्थमेवेति बोध्यम्॥ ३॥

स्वभावाख्यानमुपमा रूपकं दीपकावृती।
अक्षेपोऽर्थान्तरन्यासो व्यतिरेकोविभावना॥ ४॥
समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मोलवः क्रमः।
प्रेयोरसवदूर्ज्जस्विपर्य्यायोक्तं समाहितम्॥ ५॥
उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता।
विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने॥ ६॥
सहोक्तिः परिवृत्त्याशीःसङ्कीर्णमथ भाविकम्।
इति वाचामलङ्कारा दर्शिताः पूर्व्वसूरिभिः॥ ७॥

प्रतिज्ञातमलङ्कारजातमुद्दिशति। स्वभावाख्यानमित्यादि। स्वभावाख्यानं स्वभावोक्तिः। दीपकावृत्ती इति, आवृत्तिरावृत्तिः। आङ्पूर्व्वात् वृतुवर्त्तने इत्यस्माद् भूत्रादित्वादिप्रत्ययः। समासः समासोक्तिः, अतिशयोऽतिशयोक्तिः। समाहितं समाधिः। अप्रस्तुतस्तोत्रमप्रस्तुतप्रशंसा। इति पञ्चत्रिंशदलङ्कृताः। वाच्यं काव्यवाक्यानां, स्वभावाख्यानादीनामेषां प्रायेणार्थनिष्ठत्वेऽपि वाक्यालङ्कारत्वं शब्दतदर्थयोस्तादात्म्याङ्गीकारात्, यदाह पातञ्जलसूत्रभाष्ये भगवान् व्यासः, स्थितोऽस्य वाचकस्य वाच्येन सहाभेदः सम्बन्ध इति। पूर्व्वसूरिभिर्दर्शिता इत्यनेन एतानेव परिसंस्करोमि नत्वन्यान् नवीनैरुद्भावितान् निश्चयोल्लेखादीन्, तादृशयत्किञ्चिद्वैचित्र्यावलम्बनेनालङ्कारान्तरकल्पने सहस्रशस्तद्भेदसम्भवादिति सूचितम्॥ ४॥ ५॥ ६॥ ७॥

नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा॥८॥

तत्र प्रथमं सकलशास्त्रकाव्येष्वीप्सितत्वेनाभ्यर्हितत्वात् स्वभावाख्यानमुद्दिष्टं, तदेव लक्षयति। नानावस्थमिति। सा अलङ्कारेषु प्रसिद्धा आद्या प्रथममुद्दिष्टा अलङ्कृतिः स्वभावोक्तिश्च जातिश्चेति नामद्वयवतीत्यन्वयः। स्वरूपमाह कीदृशी नानेत्यादि। पदार्थानां जातिक्रियागुणद्रव्याणां नाना अनेका अवस्था विशेषा यस्य तत्, रूपं वर्णसंस्थानाद्यात्मकमसाधारणं धर्म्ममित्यर्थः साक्षाद्विवृण्वती सूक्ष्मत्वाद्दुर्लक्षमपि प्रत्यक्षमिव दर्श-

यन्तौ। इत्यञ्च वर्णनाविशेषेण वस्तुनः सूक्ष्मस्वरूपस्फुटीकरणं स्वभावोक्तिरिति लक्षणम्। नानावस्थमित्यनेन एकावस्थवस्तुरूपवर्णने न वैचित्र्यातिशय इति नालङ्कारता, यथा, "अम्भोदमुदितं दृष्ट्वा मुदा नृत्यन्ति बर्हिणः" इति अत्र नर्त्तनमात्रं वर्णितम्। रूपमिति क्रियोपलक्षणं। यदुक्तं प्रकाशकृता। स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनमिति। इदञ्च रूपं सहजमागन्तुकञ्च। यदुक्तं। स्वभाव एव भावानां स्वरूपमभिधीयते। निजमागन्तुकञ्चेति द्विविधं तदुदाहृतमिति। ये तु वस्तुस्वभावस्फुटीकरणरूपामर्थव्यक्तिमर्थगुणमाहुस्तेषां मते स्वभावोक्तेर्गुणत्वमेव नालङ्कारत्वमिति बोध्यं। भोजराजस्तु सार्व्वकालिकस्य वस्तुरूपस्य गुणत्वमागन्तुकस्यालङ्कारत्वमाह। यथेति उदाहरणदर्शनसङ्गतिः॥ ८॥

तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः।
त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः॥ ९॥

श्लोकचतुष्टयेन क्रमेण जात्यादिचतुष्टयरूपस्फुटीकरणमुदाहरति। तुण्डैरिति। तुण्डैर्मुखैः आताम्राणि कुटिलानि वक्राणि चेति तैः, विशेषणयोः कर्म्मधारयः। एवमन्यत्र। हरिताः पालाशवर्णाः कोमलाश्च तैः। त्रिवर्णा हरितरक्तधूमरवर्णवती राजी रेखा यत्र तैः। सर्व्वत्र उपलक्षणे तृतीया। अत्राताम्रकुटिलतुण्डत्वादिकं शुकजातीनामसाधारणं रूपं संस्थानञ्च श्रोतृभिः कथञ्चिदनवधानात् पूर्व्वमलक्षितमपि कविवर्णनया

साक्षादिवानुभूयते। शुकानामनेकत्वाच्छुकशब्दो जातिवाचकः॥ ९॥

कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः।
पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम्॥ १०॥

क्रियागतस्वभावाख्यानमुदाहरति। कलेति। कण्ठेनेति उपलक्षणे तृतीया, तेन चुम्बनात् प्रागेव कण्ठस्य कलक्वणितगर्भत्वं चुम्बनकाले तदभावात्। चुम्बतीति पारावता हि एवंविधा भूत्वा चुम्बन्तीति पारावतचुम्बनक्रियास्वभावोऽयम्॥ ॥ १० ॥

बध्नन्नङ्गेषु रोमाञ्चं कुर्व्वन् मनसि निर्वृतिम्।
नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्त्तते॥ ११॥

गुणगतमुदाहरति। बध्नन्निति। बध्नन् जनयन्। निर्वृतिमानन्दातिशयम्। आमीलयन् मुद्रयन्। प्रियास्पर्श इति स्पर्शस्य गुणत्वाद्गुणगतोऽयम्॥ ११॥

कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः।
जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः॥ १२॥

द्रव्यगतमुदाहरति। कण्ठेकाल इति। कण्ठेकालपदमलुक्समासनिष्पन्नं। कपालेनेति जटाभिरिति च विशेषणे

तृतीया । अत्र वृषध्वजशब्दो यादृच्छिकः संज्ञायां सङ्केतितः संज्ञैव द्रव्यं संज्ञासंज्ञिनोरभेदाच्च संज्ञी शिवोऽपि द्रव्यं तस्य च कण्ठेकालत्वादिकमसाधारणं रूपं प्रकटीकृतमितिद्रव्य-गतोऽयम् ॥ १२ ॥

जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम् ।
शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम् ॥ १३ ॥

स्वभावोक्तिमुपसंहरति । जातीति । अत्र द्रव्यपदं वैयाकरणपरिभाषितैकव्यक्तिवाचकशब्दप्रतिपाद्यरूपद्रव्यपरं नतु वैशेषिकोक्तक्षित्यादिद्रव्यपरं तेषां जातिपदेन ग्रहणात् । जातिक्रियागुणद्रव्याणां स्वभावाख्यानमसाधारणरूपस्फुटीकरणमीदृशमेवंविधं पूर्व्वश्लोकचतुष्टयप्रदर्शितया दिशान्यत्रापि ज्ञातव्यमित्यर्थः । जातिक्रियागुणद्रव्यैरिति तृतीयान्तपाठे पूर्व्वश्लोकचतुष्टये क्रमेण सविशेषणतयोपन्यस्तैर्जातिक्रियागुणद्रव्यैः कृत स्वभावाख्यानमीदृशं बोद्धव्यमित्यन्वयः । शास्त्रेष्विति शास्त्रेषु पदार्थस्वरूपनिरूपणप्रधानेषु वैशेषिकदर्शनादिषु पुराणेतिहासादिषु च साम्राज्यं बाहुल्यम् । अस्यैवेति एवकारेण अलङ्कारान्तराणां शास्त्रेषु नात्यन्तोपयोग इति सूचितम् । निजोपयोगं दर्शयति काव्येष्वपीति, एतत् स्वभावाख्यानम्, ईप्सितमिति अलङ्कारान्तरापेक्षया एतद्वैचित्र्यं हि विलक्षणमेवेति सहृदयैरादृतमित्यर्थः ॥ १३ ॥

**यथा कथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते।**
**उपमा नाम सा, तस्याः प्रपञ्चोऽयं निदर्श्यते ॥ १४ ॥**

उपमां लक्षयति। यथेति। यत्र वैचित्र्ये यथा कथञ्चिदुद्भूतं सादृश्यं प्रतीयते, सा वैचित्र्यरूपा उपमा नामेत्यन्वयः। यत्रेति विषये सप्तमी विषयश्च प्रतिपाद्यरूपः। इत्यञ्च वैचित्र्यजनकं सादृश्यमुपमेति लक्षणं, वैचित्र्यं प्रस्तुतोत्कर्षजन्यचमत्कारस्तेन चमत्कारस्याजनकं सादृश्यं नोपमालङ्कारः यथा गौरिव गवय इत्यादौ, अतएव रसगङ्गाधरे, सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालङ्कृतिरित्युपमालक्षणे सुन्दरमिति सादृश्यविशेषणमुपन्यस्तं, सौन्दर्य्यं चमत्कृत्याधायकत्वं चमत्कृतिरानन्दविशेष इति व्याख्यातञ्च। यथा कथञ्चिदिति, येन केनापि धर्म्मेण गुणेन क्रिययान्येन वेत्यर्थः। यथा हंसीव धवला कीर्त्तिरित्यादौ धावल्यरूपगुणेन, सलीलमियमायाति वधूर्गजवधूरिवेत्यादावागमनक्रियया, आकाशः काशतेऽत्यर्थं शिववद्विधुभूषण इत्यादौ च विधुरूपद्रव्येण सादृश्यम्, एवमन्यत्रापि बोध्यम्। एते च गुणाद्योधर्म्माः क्वचिदुपात्ताः, क्वचिदनुपात्ता अपि सामर्थ्यावसेयाः, तत्रोपादाने पूर्व्वोदाहरणानि। अनुपादाने यथा, "मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये। वाचः सुधा इवौष्ठस्ते विम्बतुल्योमनोऽश्मवत्" इत्यादि, अत्र मुखेन्दुप्रभृतीनां स्फुटसादृश्यानां मनोज्ञत्वाद्योधर्म्मा अनुपात्ता

अपि सामर्थ्यादवसीयन्ते। उद्भूतमिति प्रस्फुटमित्यर्थः, प्रस्फुटत्वञ्च वैचित्र्यान्तरानिगीर्णवैचित्र्यजनकत्वं, ततश्च रूपकादौ सादृश्यप्रतीतिजन्यवैचित्र्यमस्त्येव परन्तु तत् तादृप्यादिप्रतीतिजन्यवैचित्र्यस्य कुक्षिनिलीनमिति न तत्रोपमात्वप्रसक्तिः, अतएव रूपकदीपकादावुपमाया गुणीभूतत्वमुक्तं विश्वनाथेन. ध्वनिकारेणापि, अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते। तत्परत्वं न काव्यस्य, नासौ मार्गोध्वनेर्मत, इत्यनेनाप्रधानालङ्कारस्य ध्वनित्वं प्रतिषिद्धं। एवञ्च व्यतिरेके इवादिशब्दप्रयोगेन सादृश्यस्य स्फुटं प्रतीयमानत्वेऽपि नोपमाव्यतिरेकयोः साङ्कर्य्यम्, भेदप्रतीतिजन्यवैचित्र्येण सादृश्यप्रतीतिजन्यवैचित्र्यस्य तिरोहितत्वात्, अङ्गाङ्गिभावसाङ्कर्य्यस्थले तु सादृश्यजन्यवैचित्र्यं न तिरोधीयते, परन्तु पर्य्यालोचनया प्रधाननिर्व्वाहकत्वप्रतीत्या पश्चादङ्गत्वेन प्रतीयते इति विवेचनीयम्। सादृश्यमिति। सादृश्यमतिरिक्तः पदार्थ इति केचित् साधर्म्यमित्यन्ये, साधर्म्यञ्च उपमानोपमेययोरेकधर्म्मवत्त्वम्, एकत्वञ्च धर्म्माणां क्वचिद्वस्तुतोऽभिन्नत्वं क्वचिदेकजातीयत्वं क्वचिदेकशब्दप्रतिपाद्यत्वं क्वचिदेकधर्म्मवत्त्वञ्च, तत्र गुणक्रियायदृच्छानां साधर्म्यत्वे प्रथमं, तेषामभिन्नत्वस्य वैयाकरणैरङ्गीकृतत्वात्, तदुक्तं प्रकाशकृता, गुणक्रियायदृच्छानां वस्तुत एकरूपाणामाश्रयभेदाद्भेद इव लक्ष्यते यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदादिति, द्रव्यसामान्यादीनां तथात्वे द्वितीयम्, एकजातीयत्वञ्च एकजातिमत्त्वं जातिपदञ्चोपाध्युपल-

चकं। श्लिष्टपदोपस्थाप्यत्वे हतीयं, तत्र शब्दश्लेषे, सकलकलम्पु-रमेतज्जातं सम्प्रति सुधांशुविम्बमिवेत्यादि अत्र सकलकलप-दस्य कलकलसहितं, कलासमुदाययुक्तञ्चेत्यर्थः, एवमर्थश्लेषे-ऽपि। विम्बानुविम्बतायां चतुर्थं। यथा भल्लापवर्ज्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्। "तस्तार सरघाव्याप्तैः स चौद्र-पटलैरिव" इत्यादि, अत्र श्मश्रुलसरघाव्याप्तत्वयोर्धर्म्मयोरे-ककृष्णत्वादिगुणयोगादेकत्वम्। इत्थं सर्वं सङ्गमं। साधर्म्यप-दस्य सदृशधर्म्मवत्त्वार्थकत्वे तु आत्माश्रयापत्तिर्दुर्व्वारेति सुधी-भिर्विभावनीयम्। इदञ्च सादृश्यं दयोरेवेति न नियमः एक-स्यैवोपमानोपमेयत्वरूपस्यानन्वयस्योपमात्वेन ग्रन्थकृताङ्गीकरि-ष्यमाणत्वात् एकस्य तथात्वञ्च तत्रैव समर्थयिष्यामः। एवं वाक्यद्वयगता उपमेयोपमा च स्वमते उपमैवेति तदर्थं सादृश्यस्य वाक्यैकगतत्वविशेषणं न देयम्। प्रतीयते इति अभिधयै-वेति न नियमः, लक्षणया व्यञ्जनया वा प्रतीयमानस्य सा-दृश्यस्योपमात्वाभ्युपगमात् रूपकादावतिव्याप्तिस्तु पूर्व्वोक्तयुक्त्या परिहरणीया, तत्र इवादिप्रयोगे वाच्यं तदप्रयोगे क्वचि-ल्लक्ष्यं क्वचिद्व्यङ्ग्यमिति सर्व्वमेतद्वक्ष्यमाणोदाहरणेषु स्फुटीभवि-ष्यति। तस्या इति, अयं वक्ष्यमाणप्रकारः प्रपञ्चो विस्तारः नानाविधत्वमित्यर्थः, निदर्श्यते उदाह्रियते ॥ १४ ॥

**अम्भोरुहमिवाताम्रं मुग्धे करतलं तव।**
**इति धर्म्मोपमा साक्षात्तुल्यधर्म्मप्रदर्शनात् ॥ १५ ॥**

अथ प्रतिज्ञातमुपमाप्रपञ्चं क्रमेण सोदाहरणं निरूपयन् प्रथमं साधारणधर्म्मस्योपादानानुपादानप्रयुक्तं धर्म्मवस्तूपमा-नामकं भेदद्वयं श्लोकद्वयेन दर्शयति। अम्भोरुहमिवेति। अम्भोरुहं कोकनदं तस्यैवाताम्रत्वसम्भवात्। अम्भोरुहमिवेति पदं समस्तम्, इवेन नित्यसमासो विभक्त्यलोपः पूर्व्वपदप्र-कृतिस्वरत्वञ्चेत्यनुशासनात्। अम्भोरुहपदञ्च अम्भोरुहसदृशे लाक्षणिकम् इवशब्दः सादृश्यद्योतक इति केचित् एतन्मते सादृश्यं लक्षणागम्यम्। अन्ये तु इवशब्द एव षष्ठीवदुपमानोप-मेययोः सादृश्यलक्षणं सम्बन्धमभिधया बोधयति सादृश्ये चोपमानोपमेययोरम्भोरुहकरतलयोः प्रतियोगित्वानुयोगित्वा-भ्यामन्वयः, ततश्च अम्भोरुहप्रतियोगिकसादृश्यानुयोगि करत-लमित्यन्वयबोधः इवस्य षष्ठीस्थानीयतया च तदर्थे सा-दृश्ये उपमानोपमेययोरन्वये, नामार्थयोर्भेदसम्बन्धेनान्वयोऽ-व्युत्पन्न इति नियमेन प्रतिबध्नाति सादृश्यस्य विभक्तिस्था-नीयत्वात् द्वारीभूतेन तेन चोपमानस्योपमेयेन सहान्वयो निर्बाध एव, निपातातिरिक्तत्वेन वा निरुक्तनियमवाक्य-घटकनामपदं विशेषणीयमित्याद्याहुः। अत्र प्रतियोगित्वा-नुयोगित्वयोर्भानं संसर्गमर्य्यादया, न चोपमानोत्तरविभक्ति-रेव प्रतियोगित्वं बोधयत्विति वाच्यं तादृशविभक्तेस्तदर्थे वि-धानस्यानुशासनाभावात् नन्विवपदस्य सादृश्यवाचकत्वाभ्युपगमे तदर्थे सादृश्ये उपमानस्य भेदेनान्वये चन्द्र इव मुखं भाति चन्द्रमिव मुखं पश्यामि चन्द्रेणेव मुखेन शोभसे इत्यादौ

उपमानोपमेयपदयोः कथं समानविभक्तिकत्वम्, अभेदान्वयस्थल एव विशेषणविशेष्ययोः समानविभक्तिकत्वनियमात्, लक्षणावादे तु तयोरभेदेनान्वयात् सम्भवत्येव तदिति चेन्न अभेदान्वयस्थलवदुपमानोपमेयभावस्थलेऽपि समानविभक्तिकत्वस्य तन्त्रत्वात्, यदुक्तं, विभक्तिः पुनरेका स्यादुपमानोपमेययोरिति। अत्र साधारणधर्म्मस्यातास्रत्वस्य प्रथममुपमेयभूतकरतलेनैवान्वयः न तूपमानभूतेनाम्भोरुहेण, तस्य समस्तैकदेशपदबोध्यत्वात्, तद्गतत्वेन प्रतीतिस्तु पर्य्यालोचनयान्वयबोधोत्तरमेव, अतएव धर्म्मस्य साधारणत्वप्रतीतिस्तयैव च वैचित्र्यमिति प्रसङ्गादुक्तम्। इतीति। इत्येवं साधारणधर्म्मप्रयोगस्थले। धर्म्मोपमेति धर्म्मोपादानेनेयमुपमा अतो धर्म्मोपमेत्यर्थः। अत्र हेतुमाह साक्षादित्यादि। साक्षात् शब्देन प्रतिपादितस्य तुल्यस्य साधारणस्य धर्म्मस्यातास्रत्वस्य प्रदर्शनात् ज्ञानात्। अत्रेवशब्दप्रयोगश्रवणमात्रेणोपमानोपमेयगतसादृश्यलक्षणसम्बन्धप्रतीतेः श्रौती, उपमानोपमेयसाधारणधर्म्मसादृश्यवाचकानां चतुर्णां प्रयोगात् पूर्णा चेयमुपमा, उत्तरश्लोके धर्म्मानुपादानाच्च लुप्तेति नव्यानां भेदकरणं, तत्प्राचीनैरनङ्गीकृतमित्यनादृत्य ग्रन्थकृता प्राचीनमतानुसारेणैव भेदाः प्रदर्शिताः। तथाचाग्नेये, यत्र साधारणो धर्म्मः कथ्यते गम्यतेऽथवा। ते धर्म्मवस्तुप्राधान्याद्धर्म्मवस्तूपमे उभे इति। एवमन्येषामपि दर्शयिष्यमाणभेदानां मूलमनुसर्त्तव्यम्॥ १५॥

राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
इयं प्रतीयमानैकधर्म्मा वस्तूपमैव सा ॥ १६ ॥

राजीवमिति । प्रतीयमानो गम्यमानः वाचकशब्देनाप्रतिपाद्यमान इत्यर्थः एकः साधारणो धर्म्मो मनोज्ञत्वादिको यत्र सा, अतो वस्तूपमैव वस्तुनोरुपमानोपमेययोरेवोपादानेनेयमुपमा वस्तूपमा । स्फुटसादृश्यानां साधारणधर्म्मप्रयोगमन्तरेणाप्यौपम्यप्रतीतिसम्भवादिति भावः । धर्म्मस्य प्रतीयमानत्वञ्च शाब्दबोधानन्तरं सादृश्यनिर्वाहकतयापेक्षणीयत्वात् नहि धर्म्मं विना साधर्म्म्यं सम्भवति । यत्र सादृश्यमस्फुटं तत्र धर्म्मोपादानमन्तरेण नोपमानिर्व्वाहः यथा सकलकलं पुरमित्यादि प्रागुक्तश्लोके सकलकलमित्यंशानुक्तौ, नहि सुधांशुविम्बपुरयोर्लोकप्रसिद्धं सादृश्यं किमप्यस्ति अतएवैवंविधस्थले उपमाया अनुचितार्थत्वदोषकवलितत्वं सूरिभिरभिहितं यथा यश्नामि काव्यशशिनमित्यादि । सकलकलेत्युपादानेनैव तु तत्प्रतीतेः, तस्मादेवंविधस्थले न वस्तूपमायाः सम्भव इति विवेचनीयम् ॥ १६ ॥

तवाननमिवोन्निद्रमरविन्दमभूदिति ।
सा प्रसिद्धिविपर्य्यासाद्विपर्य्यासोपमेष्यते ॥ १७ ॥

विपर्य्यासोपमामाह । तवेति । प्रसिद्धिविपर्य्यासादिति प्रस्तुतत्वेन वर्णनीयानां मुखादीनामुपमेयत्वं तदुत्कर्षकतयोपन्य

स्तानां चन्द्रारविन्दादीनामुपमानत्वमिति प्रसिद्धिः तस्याविपर्य्यासो वैपरीत्यम्, अत्युत्कर्षप्रतिपादनार्थं मुखादीनामुपमानत्वं चन्द्रादीनामुपमेयत्वमित्यर्थः तस्माद्विपर्य्यासोपमाख्येयमुपमेत्यर्थः। तथाहि आननमिवेत्यत्र इवान्तस्योपमानत्वनियमादाननस्य तथात्वेनोपमानत्वप्रतीत्या प्रसिद्धेर्विपर्य्यासः। नव्यास्तु यत्र प्रसिद्धोपमानमपि प्रस्तुतत्वात् प्रसिद्धोपमेयेनोपमीयते तत्र नोपमा किन्तु प्रतीपाख्योऽलङ्कार इत्याहुः, यथाह विश्वनाथः। प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानम्वा प्रतीपमिति कथ्यत इति। यथा यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी। येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसागतास्त्वत्सादृश्यविनोदमात्रमपि नो दैवेन न क्षम्यते इति॥ १७॥

तवाननमिवाम्भोजमम्भोजमिव ते मुखम्।
इत्यन्योऽन्योपमा सेयमन्योऽन्योत्कर्षशंसिनी॥ १८॥

अन्योऽन्योपमामाह। तवेति। अन्योऽन्योत्कर्षशालिनीति अम्भोजस्योपमानतया मुखस्योत्कर्षः मुखस्य चोपमानतयाम्भोजस्योत्कर्षस्तच्छालिनी तद्बोधिका, अत्र द्वयोरेव मुखाम्भोजयोः प्रस्तुतत्वं बोध्यम् अम्भोजस्याप्रस्तुतत्वे तदुत्कर्षप्रतिपादनप्रयासवैफल्यात् प्रस्तुतोत्कर्षप्रतिपादनार्थमेव ग्रन्थकृतां गुणालङ्कारनिवेशनाभ्यनुज्ञानात्। ननु न्यूनगुणेनोपमेयेनोपमीयमानस्यापि

गुणाधिकस्योपमानस्योत्कर्षः कथमिति चेन्न अन्योऽन्यस्योपमानोपमेयत्वेनानन्यसदृशत्वप्रतिपत्त्या तन्नाभात्। इतीति। इति इत्थं पूर्व्वार्द्धप्रदर्शितप्रकारेणेत्यर्थः, तेन पर्य्यायेणोपमानोपमेयत्वलाभः तस्यैव वैचित्र्यातिशयजनकत्वात् अतएव मुखमम्भोजञ्च तुल्यमित्यादौ परस्परस्योपमानोमेयत्वप्रतीतावपि वैचित्र्याभावान्नास्याः सम्भवः, पर्य्यायोपम्यञ्चैकवाक्ये न सम्भवतीति वाक्यद्वयगतत्वमस्या बोध्यं। नव्यास्तु पर्य्यायोपम्ये उपमेयोपमेति नामकमलङ्कारान्तरमिच्छन्ति यथाह विश्वनाथः, "पर्य्यायेण द्वयोरेतदुपमेयोपमा मता" इति। अत्राननं मुखमिति प्रक्रमभङ्गः प्राचां निरङ्कुशत्वात् सोढव्यः ॥ १८ ॥

त्वन्मुखं कमलेनैव तुल्यं नान्येन केनचित्।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥ १९ ॥

नियमोपमामाह। त्वन्मुखमिति। कमलेनेनेत्येवकारव्यवच्छेद्यं नान्येन केनचिदिति। अन्यसाम्यव्यावृत्तेरन्यसाम्यव्यावृत्तिजनितवैचित्र्यात्, बहूपमानसद्भावो हि प्रस्तुतस्य निकर्षं ख्यापयति तद्व्यावृत्त्या प्रकृष्टतमेनैकेन साम्यप्रतिपादनन्तु प्रकर्षातिशयमिति वैचित्र्यातिशयः ॥ १९ ॥

पद्मं तावत्तवान्वेति मुखमन्यच्च तादृशम्।
अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा ॥ २० ॥

नियमोपमानन्तरमनियमोपमां दर्शयति। पद्ममिति। पद्मं तावत्तव मुखमन्वेति सदृशीकरोति अन्यच्च तादृशं पद्म-

यदतिसुन्दरं वस्तु चन्द्रादिकं तत्कारि त्वन्मुखानुकारि अस्ति चेदस्त्वित्यन्वयः । इत्यस्मात् अनुकारकर्तृनियमाभावादित्यर्थः । अत्र पद्ममिति कर्तृपदं मुखमिति कर्म्मपदं तेन च मुखस्योपमानत्वं तत एव वैचित्रातिशयः वैपरीत्ये तु न तथेति प्रसिद्धोपमेयस्योपमानत्व एवेयमुपमेति बोध्यम् ॥ २० ॥

समुच्चयोपमाप्यस्ति न कान्त्यैव मुखं तव ।
ह्लादनाख्येन चान्येति कर्म्मणेन्दुमितीदृशी ॥ २१ ॥

समुच्चयोपमामाह । समुच्चयोपमेति । कान्त्यैव केवलं कान्त्या । चकारः समुच्चयद्योतकः । कर्म्मणा क्रियया च । अत्र गुणक्रिययोः समुच्चयः, एवं केवलगुणसमुच्चये केवलक्रियासमुच्चयेऽन्यसाधारणधर्म्मसमुच्चये च समुच्चयोपमा ज्ञातव्या ॥ २१ ॥

त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः ।
इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥ २२ ॥

अतिशयोपमां दर्शयति । त्वय्येवेति । पूर्व्वार्द्धं मुखचन्द्रमसोर्विभिन्नाश्रयत्वप्रतिपादकम् । तस्मादियत्येवं भिदा आश्रयमात्रकृताभेदः । नान्या न गुणक्रियादिकृता । इत्यस्मादतिशयोपमा, अतिशयः प्रस्तुतस्योत्कर्षाधिक्यं स च गुणक्रियाकारादिभिः सत्यपि सदृति भेदे नान्येत्यनेनाभिन्नत्वाध्यवसानप्रतिपाद्यः ईदृशातिशयस्य भेदान्तरेषु नास्तीत्येतद्भेदस्यैव तथात्वेन व्यपदेशः । अत्र साम्यं वाचकशब्दाप्रयोगद्व्यञ्जनयैव गम्यते व्यञ्जना

च वक्तृवैशिष्ट्यमविवक्षया भेदाभेदप्रतीत्या प्राप्तप्रसरा, न च रूपकध्वनिरयं भिन्नाश्रयत्वेन भेदस्य स्फुटतया प्रतिपादितत्वात् नापि व्यतिरेकः उपमानादुपमेयस्याधिकतायामतात्पर्यात् तस्मादुपमैवेयमिति विवेचनीयम् ॥ २२ ॥

मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।
पद्मेऽपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा ॥ २३ ॥

उत्प्रेक्षितोपमां दर्शयति । मय्येवेति । मुखश्रीर्मुखश्रीसजातीया श्रीरिति निदर्शनागर्भेयमुक्तिः । विकत्थनैरात्मश्लाघनैः । सा मुखश्रीः । उत्प्रेक्षितोपमेति, निरुक्तश्लाघा हि इन्दौ परमार्थतो नास्त्येव केवलं चाटुकारेण सम्भावनया कल्पिता सम्भावना चोत्प्रेक्षा तन्मूलत्वादियमुत्प्रेक्षितोपमेत्यर्थः । अत्रापि साम्यं व्यञ्जनागम्यम् । एवमग्रेऽपि बोध्यम् ॥ २३ ॥

यदि किञ्चिद्भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम् ।
तत्ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥ २४ ॥

अद्भुतोपमां दर्शयति । यदीति । तत्तदा, अद्भुतोपमेति विभ्रान्तलोचनत्वादयो धर्मा मुखस्यैव तत्प्रतियोगिनि पद्मे तु तेषां सम्भावनया मिथःसादृश्यद्योतनाच्चमत्कारातिशय इत्युपमाया अद्भुतत्वं, तथा चोक्तं । यत्रोपमेयधर्माः स्युरुपमानेऽधिरोपिताः । चमत्कारविधानार्थं तामाहुरद्भुतोपमामिति । नव्यास्तु यद्यर्थबलेनान्यधर्मस्यान्यत्र कल्पनेऽतिशयोक्त्याख्यमलङ्कारमिच्छन्ति । यदुक्तमतिशयोक्तिप्रस्तावे प्रकाशकृता । निगीर्याध्यव-

मानन्तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं ययर्योक्तौ च कल्पनमिति ॥ २४ ॥

शशीत्युत्प्रेक्ष्य तन्वङ्गि त्वन्मुखं त्वन्मुखाशया ।
इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥ २५ ॥

मोहोपमामाह । शशीति । त्वन्मुखं शशीति उत्प्रेक्ष्य सम्भाव्य अभिन्नत्वेन पूर्व्वं भ्रमविषयीकृत्येत्यर्थः अनन्तरं शशिनं दृष्ट्वा त्वन्मुखाशया त्वन्मुखमिदमिति बुद्ध्या इन्दुमपि अनुधावामि द्रष्टुं स्पृहयामीत्यन्वयः । मोहोपमेति मोहोभ्रान्तिः इन्दोर्मुखत्वेन ज्ञानमित्यर्थः तेन सादृश्यद्योतनादियं मोहोपमेत्यर्थः । उक्तञ्च । प्रतियोगिनमारोप्य तदभेदेन कीर्त्तनम् । उपमेयस्य यन्मोहोपमासौ भ्रान्तिमदच इति । एतेन नवीनैरङ्गीकृतस्य भ्रान्तिमदलङ्कारस्य प्राचामुपमात्वेन संग्रह इति बोध्यम् । अत्रापि शशीति इन्दिति प्रक्रमभङ्गः पूर्व्वोक्तरीत्या बोढव्यः ॥ २५ ॥

किं पद्ममन्तर्भ्रान्तालि किन्ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥ २६ ॥

संशयोपमामाह । किमिति । दोलायते संशयानं भवति संशयस्य हेतुश्च भ्रान्तालित्वलोलेक्षणत्वयोर्बिम्बानुबिम्बता । संशयोपमेति संशयस्य सादृश्यपर्य्यवसायित्वादिति भावः । इत्यञ्च नवीनोक्तः सन्देहालङ्कारोऽपि प्राचामुपमैवेति न पृथङ् निरूपयिष्यते उपमानोपमेयविषयकस्यैव संशयस्य नवीनैरलङ्कारत्वाभ्युपगमादिति बोध्यम् ॥ २६ ॥

न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ २७ ॥

निर्णयोपमामाह। नेति। यस्मादिन्दुनिग्राह्यस्य इन्दुना कृतनिग्रहस्य पद्मस्य इन्दोर्लज्जाकरी द्युतिर्नास्ति निगृहीतस्य निग्राहकत्वाभावात्, अत इदं त्वन्मुखमेव, एवकारान्न पद्ममित्यर्थः। निर्णयोपमेति उपमेयस्य निर्णयभङ्ग्या सादृश्यद्योतनादिति भावः, निर्णयस्य च संशयोत्तरकालीनत्वात् प्रथममिदं त्वन्मुखम्वा पद्मम्वेति संशयोबोद्धव्यः संशयोत्तरस्यैव निर्णयस्यालङ्कारत्वात्। यदुक्तमग्निपुराणे, उपमेयस्य संशय्य निश्चयान्निश्चयोपमेति। यथा, शिशुपालवधे। किन्तावत् सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते तरुण्याः। संशय्य चणमिति निश्चिकाय कश्चिद्विव्वोकैर्वकसहवासिनां परोक्षैरिति। अतश्च विश्वनाथादिभिरङ्गीकृता निश्चयालङ्कारोऽप्युपमैव नालङ्कारान्तरमिति बोध्यम्॥ २७॥

शिशिरांशुप्रतिस्पर्द्धि श्रीमत्सुरभिगन्धि च।
अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता॥ २८ ॥

श्लेषोपमामाह। शिशिरांश्विति। शिशिरांशुः प्रतिस्पर्द्धी विरोधी यस्य तदित्यम्भोजविशेषणं। वक्त्रपक्षे तु शिशिरांशोः प्रतिस्पर्द्धिनी न्यक्कारजनिका या श्रीस्तद्वत्। श्लेषोपमेति। अत्र श्लेषपदमर्थश्लेषपरं शब्दश्लेषस्तु वक्ष्यमाणसमानोपमाविषयः।

अत्र च प्रतिस्पर्द्धादिशब्दपरिवर्त्तनेऽपि श्लेषत्वानपायादर्थश्लेष एव, शब्दपरिवर्त्तनासहत्वे तु श्लेषस्य शब्दगतत्वं यथोदाहरिष्यते। अत्रालङ्कारान्तरस्य श्लेषस्य सद्भावेऽपि न तत्त्वेन व्यपदेशः श्लेषवैचित्रस्य प्रधाने सादृश्यवैचित्रे निलीनतया व्यपदेशकत्वाभावात् प्रधानेन व्यपदेशा भवन्तीत्युक्तेः॥ २८॥

सरूपशब्दवाच्यत्वात् सा समानोपमा यथा।
बालेवोद्यानमालेयं सालकाननशोभिनी॥ २९॥

समानोपमामाह। सरूपेति। समानं वाच्यभेदाद्भिन्नमपि श्लिष्टत्वेनैकमिव प्रतीयमानं रूपं तत्तद्वर्णात्मकं स्वरूपं यस्य तादृशो यः शब्दस्तेन वाच्यत्वात् साधारणधर्मस्योपस्थाप्यत्वात्, यद्वा युगपद्धर्मद्वयोपस्थापनद्वारा प्रयोज्यत्वात्, सा समानोपमेति यत्र श्लिष्टशब्देन साधारणधर्मोपस्थितिः सा समानोपमेत्यर्थः, क्वचित् सरूपोपमेति पाठः। बालेव युवतिरिव। सालकाननशोभिनीति सालकं सचूर्णकुन्तलं यदाननं तेन शोभिनीत्युपमानविशेषणं। सालस्य सर्ज्जवृक्षस्य काननेन शोभिनीत्युपमेयविशेषणम्, अत्र भिन्नयोरप्युपमानोपमेयधर्म्मयोः समानशब्दवाच्यत्वात् साधारण्यमिति पूर्व्वमेवोक्तम्। इत्यञ्चार्थश्लेषमूलकत्वे श्लेषोपमा पूर्व्वमुक्ता शब्दश्लेषमूलकत्वे तु समानोपमेत्यनयोर्भेदः। एवञ्च पूर्व्वश्लोके शिशिरांशुपरिस्पर्द्धीत्यत्र शब्दश्लेषः श्रीमत्सुरभिगन्धि चेत्यत्रार्थश्लेष इति केषाञ्चिन्निर्व्वचनमनवबोधविजृम्भितम्॥ २९॥

पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम्।
समानमपि सोत्सेकमिति निन्दोपमा स्मृता॥ ३०॥

निन्दोपमामाह। पद्ममिति। बहुरजो बहुपरागम् अथच रजोगुणभूयिष्ठं, क्षयी कृष्णपक्षे क्षयिष्णुः अथच क्षयरोगवान्। समानमपि गुणान्तरेण तुल्यमपि तवाननं ताभ्यां पद्मचन्द्राभ्यां सोत्सेकमधिकं रजस्वलत्वक्षयित्वाभावात् सोत्कर्षमित्यर्थः। ताभ्यामिति पञ्चम्यन्तम्। इत्युपमाननिन्दापूर्व्वकत्वान्निन्दोपमा। नचायं व्यतिरेकः साम्यमात्रपर्य्यवसायित्वेन वाक्यस्य भेदे तात्पर्य्याभवात् यत्र भेद एव तात्पर्य्यं तत्र व्यतिरेक इति वक्ष्यते॥ ॥ ३०॥

ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोधृतः।
तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते॥ ३१॥

प्रशंसोपमामाह। ब्रह्मण इति। उद्भवत्यस्मादित्युद्भव उत्पत्तिस्थानं। सर्व्वजगतामुद्भवस्यापि ब्रह्मण उद्भवः, शम्भुना शिरसा मस्तकान्तरेण धृत इति पद्मचन्द्रयोर्महती प्रशंसा तया च प्रस्तुतमुखस्यापि प्रशंसेति प्रशंसोपमेयं। किन्तु त्वन्मुखेन तुल्यावित्यत्र मुखस्योपमानतया प्रसिद्धोपमेयत्वविपर्य्यासाद्विपर्य्यासोपमापि तदनयोः सङ्करः। अत्र पद्म इति पुंलिङ्गपद्मशब्दो न बहुभिः प्रयुक्त इत्यप्रयुक्तत्वं पूर्व्ववत् सहनीयं, पद्ममिति पाठः सम्यक्॥ ३१॥

चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः।
स गुणोवास्तु दोषोवेत्याचिख्यासोपमां विदुः॥ ३२॥

आचिख्यासोपमामाह। चन्द्रेणेति। आचिख्यासु, आख्यातुमिच्छु। स आख्यानाभिलाषः गुणोवा दोषोवास्तु अनेन च ह्वद्गतभावप्रकटनया आरल्यद्योतनाचाहत्वातिशयः॥ ३२॥

शतपत्रं शरच्चन्द्रस्त्वदाननमितित्रयम्।
परस्परविरोधीति सा विरोधोपमा मता॥ ३३॥

विरोधोपमां दर्शयति। शतपत्रमिति। शतपत्रं पद्मं। पद्मचन्द्रयोर्विरोधोविभिन्नकालीनशोभाशालित्वरूपः, ताभ्यां सहाननस्य विरोधोमनोज्ञत्वाद्येकधर्म्मवत्त्वरूपः, विरोधस्य च साम्यपर्य्यवसानादियं विरोधोपमा॥ ३३॥

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्ज्जितुम्।
कलङ्किनोजडस्येति प्रतिषेधोपमैव सा॥ ३४॥

प्रतिषेधोपमां दर्शयति। नजात्विति। प्रतिगर्ज्जितुं विरोद्धुं सदृशीभवितुमित्यर्थः, यतः कलङ्किनः तथा जडस्य शीतलस्य अथच मूर्खस्य, सादृश्यप्रतिषेधेन तदतिशयद्योतनादेषा प्रतिषेधोपमा। निन्दोपमायां प्रतिषेधो नास्तीत्यनयोर्भेदः, भेदतात्पर्य्याभावाच्च व्यतिरेकात्॥ ३४॥

मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।
तथापि सम एवासौ नोत्कर्षीति चटूपमा ॥ ३५ ॥

चटूपमामाह । मृगेक्षणाङ्कमिति । मृगेक्षणाङ्कं मृगस्यावयवविशेषाभ्यामीक्षणाभ्यामङ्कितं । मृगेणैवाङ्कितः ईक्षणाद्यवयवसमुदायवता सम्पूर्णमृगशरीरेणैव चिह्नितः। सम एव तुल्याह्लादजनक एव, एवकारव्यवच्छेद्यं दर्शयति, नोत्कर्षी नाधिकाह्लादजनकः । चटूपमेति चटुः प्रियोक्तिस्तत्प्रतिपादितत्वाच्चटूपमा। अत्रोत्कर्षकारणे सत्यपि नोत्कर्ष इति विशेषोक्तिगर्भत्वमस्या वक्तव्यम्, अन्यथा सर्व्वेष्वाप्युपमाभेदेषु चटुसत्त्वाच्चटूपमात्वापत्तेः ॥ ३५ ॥

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा ॥ ३६ ॥

तत्त्वाख्यानोपमामाह । न पद्ममिति । मुखे पद्मत्वेन भ्रान्तं प्रत्युक्तिरियं । विस्पष्टसादृश्यात् भ्रमकुदासेन सादृश्यस्य विशेषेण स्पष्टीकृतत्वात् न ह्यसदृशे भ्रान्तिर्भवति। तत्त्वाख्यानोपमेति। भ्रमनिरासार्थं भ्रमविषयस्य तत्त्वकथनं तत्त्वाख्यानं तत्प्रयुक्तत्वादेषा तत्त्वाख्यानोपमा। निर्णयोपमायाः संशयपूर्व्वकत्वमस्यास्तु भ्रान्तिपूर्व्वकत्वमित्यनयोर्भेदः ॥ ३६ ॥

चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव ।
आत्मनैवाभवत्तुल्यमित्यसाधारणोपमा ॥ ३७ ॥

असाधारणोपमामाह। चन्द्रेति। कान्तिमतिक्रम्य स्वकान्त्या निकृष्टीकृत्य। आत्मनैवाभवत्तुल्यमिति चन्द्रारविन्दे एव मुखस्योपमानतया जगति प्रसिद्धे, तत्कान्तेरतिक्रमे तु उपमानान्तरासम्भवादात्ममात्रतुल्यत्वमित्यभिप्रायः, नव्यास्तु भिन्नयोर्द्वयोः साम्यमुपमा एकस्योपमानोपमेयत्वे त्वनन्वयाख्योऽलङ्कार इत्याहुः। नचोपमा वाऽनन्वयो वा भवतु एकस्योपमानोपमेयत्वमेव कथमिति वाच्यम् अनन्यसदृशत्वप्रतिपिपादयिषया काल्पनिकभेदाभ्युपगमेन तस्य विवक्षितत्वात् यथा आत्मानमात्मना वेत्सीत्यादौ स्वभिन्नाभावादेकस्य परमात्मनो वेत्तृवेद्यत्वादिकमिति। असाधारणोपमेति प्रतियोग्यभावात् साम्यस्यैकमात्रवृत्तित्वेन साधारण्याभावादिति समाख्या ॥३७॥

सर्व्वपद्मप्रभासारः समाहृत इव क्वचित्।
त्वदाननं विभातीति तामभूतोपमां विदुः ॥ ३८ ॥

अभूतोपमामाह। सर्व्वेति। क्वचिदेकत्र स्थाने विधात्रा समाहृतः संगृहीतः सर्व्वेषां पद्मानां प्रभासार इव त्वदाननं विभातीत्यन्वयः। तादृशप्रभासारसमाहरणस्य वस्तुतोऽभूतत्वादिमामभूतोपमां विदुः। अत्रेवशब्दस्य सम्भावनार्थकत्वादसम्भविनस्तु प्रभासारमयत्वस्य सम्भाव्यमानत्वादुत्प्रेक्षैवेयमिति बहवः प्रभासारमयत्वसम्भावनया पद्माननयोः साम्यप्रतीतेरुपमैवेति प्राञ्चः, एवञ्च यत्र प्रस्तुतेऽप्रस्तुतस्य धर्म्मिणः सम्भावना तत्रैवोत्प्रेक्षा, यत्र तु धर्म्मस्य सम्भावना तत्राप्रस्तुताप्रस्तु-

तयोः साम्यप्रतीतिस्तत्रोपमैवेति प्राचामभिप्राय इति बोध्यम् ॥ ॥ ३८ ॥

चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।
परुषा वागितोवक्त्रादित्यसम्भावितोपमा ॥ ३९ ॥

असम्भावितोपमामाह । चन्द्रेति । अत्र निःसरणक्रियाध्याहारात् पञ्चमीत्रयम् । असम्भावितोपमेति उपमानयोरसम्भावितत्वेनोपमेयस्यासम्भावितत्वप्रतीतेरियमसम्भावितोपमा । किञ्चैकस्य बहूपमानसद्भावादस्यमाणबहूपमापि ॥ ३९ ॥

चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ ४० ॥

बहूपमामाह । चन्दनोदकेति । पूर्व्वार्द्धे, उपमानानां सामान्यवाचिभिरिति कर्म्मधारयः । अत्रैकस्य स्पर्शस्य शीतलत्वाय चन्दनादीनां बहूनामुपमानानामुपन्यासादियं बहूपमा । नन्वेकेनैवोपमानेन शीतलत्वे पर्य्याप्ते उपमानान्तरोपादानमनर्थकं स्यादित्यत आह, अतिशयमिति, अतिशयं शीतलत्वस्याधिक्यं, यथा बहूनां मधुरवस्तूनां सम्मेलनादास्वादस्याधिक्यं तथा बहूनामुपमानानां सम्मेलनादुपमेयधर्म्मस्याधिक्यमित्यर्थः । नव्यास्तु मालोपमामिमामाहुः ॥ ४० ॥

चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।
तव तन्वङ्गि वदनमित्यसौ विक्रियोपमा ॥ ४१ ॥

विक्रियोपमामाह। चन्द्रेति। विक्रियोपमेति, अत्रोपमानभूतौ चन्द्रबिम्बपद्मगर्भौ प्रकृती ताभ्यामुत्कीर्णमुद्धृतञ्च वदनं विकृतिः, प्रकृतिविकृत्योश्च साम्यमस्त्येवेति विक्रियया उपमानविकृतत्वेनेयमुपमा, यदुक्तमाग्नेये, उपमानविकारेण तुलना विक्रियोपमेति। अन्यत्र च। उपमेयस्य यत्र स्यादुपमानविकारता। प्रकृतेर्विकृतेः साम्यात्तामाहुर्विक्रियोपमामिति। अत्रापि पूर्ववद्धर्मयोरुत्कीर्णत्वोद्धृतत्वयोरुत्प्रेक्षया धर्म्मिणोः साम्यप्रतीतिस्तत्रैव च विश्रान्तिरित्युपमैव प्रधानं न तूत्प्रेक्षेति बोध्यम्॥ ४१॥

पुष्प्यातप इवाह्नीव पूषा, व्योम्नीव वासरः।
विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता॥ ४२॥

मालोपमामाह। पुष्प्यातप इति। मालोपमेति। यथा, मालायां पुष्पादीनां प्रथमस्य द्वितीयेन द्वितीयस्य तृतीयेन तस्य च चतुर्थेनेत्येवं क्रमेण सम्बन्धस्तथात्राप्युपमानवाक्यघटकानामेकस्यापरेण तस्य चापरेण सम्बन्धात् मालोपमासमाख्या, तथा हि आतपो यथा पुष्पि सूर्य्ये लक्ष्मीमादधाति, पूषा यथा अह्नि, अहर्यथा व्योम्नि, तथा विक्रमस्त्वयि लक्ष्मीमधादिति पुष्पोऽह्नि अह्नश्च व्योम्नि सम्बन्धः, एवं विन्यासचातुर्य्येणैव वैचित्रातिशयत्वेन च बहूपमातोऽस्या भेदः अन्यथा उभयत्राप्युपमानबहुत्वात् पृथग्भेदकरणमसङ्गतं स्यादित्यवधेयम्। नव्यास्तूभयत्रापि मालोपमात्वं वदन्ति तच्चित्रकृवैचित्र्यविशेषानवलोकनविजृम्भितम्, अत्र वासर इति प्रक्रमभङ्गः पूर्ववत् बोद्धव्यः॥ ४२॥

वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥ ४३ ॥

वाक्यार्थोपमामाह । वाक्यार्थेनैवेति । वाक्यार्थो विशेषण-विशेष्यतामापन्नः पदार्थसमूहस्तेन तादृशः कोऽपि प्राकरणिको वाक्यार्थो यद्युपमीयते सा वाक्यार्थयोरुपमानोपमेयत्वाद्वाक्यार्थोपमेत्यन्वयः, इत्यञ्च साङ्गेनाप्रस्तुतवाक्यप्रतिपाद्येनाङ्गिना साङ्गस्य प्रस्तुतवाक्यप्रतिपाद्यस्याङ्गिनः साम्यं वाक्यार्थोपमेत्यर्थः अत एव हि वैचित्र्यातिशयः, अन्यथा यथा व्योम्नि विधुर्भाति तथा भूम्यां मुखं तवेत्यादौ वाक्यार्थयोर्विधुमुखयोः साम्याद्वाक्यार्थोपमात्वापत्तेः न चेष्टापत्तिर्विधुरिव मुखमित्यादाविव वैचित्र्यविशेषानुपलम्भात् तस्यैव च भेदकत्वात् । सा चोपमा द्विधा तत्र हेतुरेकानेकेवशब्दत्वादिति, अयम्भावः यत्रैकैकस्यैकैकस्मिन् साम्यस्यान्वयबोधे तात्पर्य्यं तत्रानेकेवशब्दप्रयोगः यत्र तु विशिष्टस्यान्वयबोधानन्तरं पर्य्यालोचनया विशेषणानां साम्यप्रतीतिस्तत्रैकेवशब्दप्रयोग इति । साङ्गोपमायाञ्च प्रायेण कविभिरिवशब्दः प्रयुज्यते, अत इवशब्दघटितत्वमुक्तम् ॥ ४३ ॥

त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥ ४४ ॥

तत्रैकेवशब्दप्रयोगे वाक्यार्थोपमामुदाहरति । त्वदाननेति । अधीरे चञ्चले अक्षिणी यत्र तत् । आविराविर्भवन्त्यो बहिः

किञ्चिल्लक्ष्यमाणा दशनानां दीधितिर्यत्र तत्। ता इवलक्ष्याः केसराः किञ्जल्का यस्य तत्। अत्राचिदशनदीधितिरूपाङ्गवतोऽङ्गिन आननस्य अङ्गकेसररूपाङ्गवताङ्गिना पङ्कजेन साम्यमिति तस्य बहुपदार्थरूपवाक्यार्थगतत्वाद्वाक्यार्थोपमा। अत्र विशिष्टयोरेवोपमानोपमेयत्वप्रतीतिरित्येकेवशब्दप्रयोगः। अत्रेवशब्दस्योपमानोत्तरप्रयुक्तत्वनियमलङ्घनं प्राचां निरङ्कुशत्वविजृम्भितमिति ध्येयम्॥ ४४॥

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम्।
मया मधुव्रतेनेव पायं पायमरम्यत॥ ४५॥

अनेकेवशब्दप्रयोगे तामुदाहरति। नलिन्या इति। नलिनी नलिनस्तम्बः नलिनसमूहः नलिनयुक्तं तडागादिकं वा। पायं पायं पुनःपुनः पीत्वा। अरम्यतेति भावे लङ्। अत्रेवशब्दास्त्रयः प्रयुक्ताः, तेन च तन्वङ्ग्यादीनां प्रत्येकं नलिन्यादिभिः साम्यं शाब्दबोधविषयीभवत् कमपि चमत्कारातिशयं जनयति, पूर्वोदाहरणे तु विशिष्टयोरुपमानोपमेययोः साम्यस्य शाब्दबोधे ज्ञाते पश्चाद्विशेषणानां पर्य्यालोचनया साम्यप्रतीतिरित्येकानेकेवशब्दप्रयोगकृतो भेदः॥ ४५॥

वस्तु किञ्चिदुपन्यस्य न्यसनात् तत्सधर्म्मणः।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा॥ ४६॥
नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु।
ननु द्वितीयो नास्त्येव पारिजातस्य पादपः॥ ४७॥

प्रतिवस्तूपमामाह। वक्ष्यतीति। किञ्चित् किमपि प्रस्तुतं वस्तु उपन्यस्य उत्कर्षायापकर्षाय वा पूर्वं वाक्येन प्रतिपाद्य तत्समर्थनाय तस्य सधर्मणोऽप्रस्तुतवस्त्वन्तरस्य न्यसनाद्वाक्यान्तरेण प्रतिपादनात् साम्यप्रतीतिरस्ति इवाद्यभावेऽपि व्यञ्जनया सादृश्यावगमोभवति इति हेतोः सा वस्तुनोवाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमेत्यन्वयः। तत्सधर्मणा इति सधर्मेण एकधर्मवत इत्यर्थः सच धर्मः कथितपदत्वस्य दुष्टत्वाभिधानात् भिन्नवाचकतया निर्देशनीयः। तदुक्तं प्रकाशकृता। प्रतिवस्तूपमा तु सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिरिति। साम्यप्रतीतिरस्तीतिहेतुमन्निगदेन प्रतिवस्तूपमाया नवीनैरुक्तमलङ्कारान्तरत्वं प्रतिषिद्धं साम्यप्रतीत्या उपमात्वसम्भवेनालङ्कारान्तरत्वाभ्युपगमस्यानौचित्यात्। उदाहरति यथेति। जायमानेष्विति जातेष्वित्यस्योपलक्षकं जातेषु जायमानेषु च राजसु मध्ये एकोऽपि त्वादृशस्त्वत्सदृशो नास्तीत्यन्वयः। पारिजातस्येति पारिजातपुष्पस्येत्यर्थः, यद्वा राहोः शिर इत्यादिवदभेदविवक्षया षष्ठी, अत्र सदृशोनास्ति द्वितीयोनास्तीति साधारणधर्मो वस्तुत एक एव पौनरुक्त्यनिरासाय शब्दभेदेन निर्दिष्टः। इयं वैधर्म्येणापि भवति यथा, "चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि। विनावन्तीर्न निपुणाः सुदृशोरतनर्म्मणि" इत्यादि, अत्र चातुर्य्यचातुर्य्याभावौ वाक्यार्थयोः साम्यं प्रयोजयतः॥ ४६॥ ४७॥

अधिकेन समीकृत्य हीनमेकक्रियाविधौ।
यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा॥ ४८॥
दिवो जागर्त्ति रक्षायै पुलोमारिर्भुवो भवान्।
असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः॥ ४९॥

तुल्ययोगोपमामाह। अधिकेनेति। एकस्या एकजातीयायाः क्रियाया विधौ करणे हीनं न्यूनगुणम् अधिकेन गुणाधिकेन समीकृत्य, अत्र उदरं पूरयित्वा भुङ्क्ते इत्यादिवद् प्राक्काले क्त्वा, समीकुर्व्वन्नित्यर्थः, यद्ब्रुवन्ति, यदित्यव्ययं यत्नम्यन्तं यच वैचित्रे यद्वैचित्र्यबोधायेत्यर्थः ब्रुवन्ति कवयोवर्णयन्ति सा तादृशवैचित्र्यरूपा तुल्ययोगात् क्रियायामधिकहीनयोः समानसम्बन्धादुपमेयमिति तुल्ययोगोपमेत्यन्वयः। एकजातीयक्रियाकरणेन प्रकृताप्रकृतयोः साम्यप्रतिपादनं तुल्ययोगोपमेत्यर्थः। प्रकृतानामप्रकृतानां वा एकधर्म्मसम्बन्धरूपा नवीनैरङ्गीकृता तुल्ययोगिता त्वितो भिन्नैव स्वरूपभेदात्। उदाहरति यथेति। पुलोमारिरिन्द्रोदिवोरक्षायै जागर्त्ति, भवान् भुवो रक्षायै जागर्त्ति, तेन पुलोमारिणा असुरा हन्यन्ते, त्वया च सावलेपाः सगर्व्वा नृपा हन्यन्ते इत्येकजातीयाभ्यां जागरणहननक्रियाभ्यां हीनस्यापि प्रस्तुतस्य राज्ञो गुणाधिकेनेन्द्रेण साम्यं वर्णनया प्रतिपादितम्॥ ४८॥ ४९॥

कान्त्या चन्द्रमसं, धाम्ना सूर्य्यं, धैर्य्येण चार्णवम्।
राजन्ननुकरोषीति सैषा हेतूपमा मता॥ ५०॥

हेतूपमामाह । कान्त्येति । अत्र कान्त्यादिभिर्हेतुभिश्च-न्द्रादिसाम्यप्रतीतिरिति हेतूत्थापितत्वादेषा हेतूपमा ॥ ५० ॥

न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ ५१ ॥

इत्थं सप्रभेदामुपमां निरूप्य प्रसङ्गात्तदीयदोषेषु वक्तव्येषु तत्र, हीनाधिकत्वं वचनलिङ्गभेदो विपर्य्ययः । असादृश्यासम्भवौ च दोषाः सप्तोपमा गता इति प्राचीनोक्तानां सप्तानां दोषाणां मध्ये स्वमते विपर्य्ययादिदोषत्रयस्योपमालक्षणे सादृश्यस्योद्भूतत्वविशेषणेनैवाप्राप्तावसरत्वं प्रतिपाद्य सम्प्रति सम्भविनोऽवशिष्टदोषचतुष्टयस्यापि दूषकत्वस्य सार्व्वत्रिकत्वं परिहरति । न लिङ्गवचने इति । लिङ्गवचने इति प्रथमाद्विवचनान्तं । भिन्ने इति उपमानोपमेयपदयोः पृथग्भूते इत्यर्थः । हीनाधिकतापि वेति उपमानस्येति बोध्यम्, उपमेयापेक्षया उपमानस्य जातिगतं प्रमाणगतञ्च न्यूनत्वमधिकत्वञ्चेत्यर्थः । उपमादूषणायालमिति अत्र तत्रेति बोध्यम् उत्तरवाक्ये यत्रेति श्रवणात् । यत्रोद्वेग इति उद्वेगः प्रतीतिमान्थर्य्यं स च लिङ्गवचनभेदस्थले साधारणधर्म्मस्योभयान्वयाभावेन साम्यस्य सम्यगनिर्व्वाहात्, हीनतास्थले चोपमानस्यापकृष्टत्वज्ञानेन तदुपमितस्य प्रस्तुतस्योत्कर्षानुपलम्भात्, अधिकतास्थले चाधिकोपमितस्य क्षुद्रोपमेयस्योपहसनीयत्वज्ञानाच्च जायते । स च यत्र न भवति तत्र सम्वयेतान्युपमादूषणाय अलं समर्थानि न भवन्ति ।

तथा हि लिङ्गवचनभेदेऽपि यत्र साधारणधर्म्मस्योभयात्वये बाधाभावः, हीनताधिकतयोश्च नात्यन्तिकत्वं तत्र न दोष इति यथोदाहरिष्यते। नव्यास्तु कालपुरुषविध्यादिभेदस्याप्युपमादूषकतामाहुः। क्रमेण यथा "काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेशयोः। हिमनिर्म्मुक्तयोर्योगे चित्राचन्द्रमसोरिव" इति। अत्र चित्राचन्द्रमसोरभिख्या न खल्वासीदपि तु सर्व्वदापि भवति। लतेव राजसे तन्वि इति, अत्र लता राजते त्वं राजसे इति। चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथेति। अत्र मार्कण्डेयमुनेर्जीवनं न खलु विधेयमिति। एतेषाञ्च दूषकत्वं स्फुटं प्रतीयमानमपि प्रायेण कविभिर्न गणितमिति ग्रन्थकृताप्युपेक्षितम्॥ ५१॥

स्त्रीव गच्छति षण्ढोऽयं, वक्त्येषा स्त्री पुमानिव,।
प्राणा इव प्रियोऽयं मे, विद्या धनमिवार्ज्जिता॥५२॥

लिङ्गवचनभेदस्यानुद्वेगकरत्वं दर्शयति। स्त्रीवेति। अत्र पूर्व्वार्द्धे गच्छतीति वक्तीति च तिङन्तपदप्रतिपाद्यस्य क्रियारूपसाधारणधर्म्मस्योभयत्रान्वयाल्लिङ्गभेदो न श्रोतॄणामुद्वेगं जनयति। एवमुभयान्वययोग्यक्रियया वचनभेदस्य दूषकत्वाभावो यथा, "तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरतास्पतः। दधते स्म परां शोभां तदीया विभ्रमा इव" इति, अत्र धादधधातुभ्यामेकवचनबहुवचननिष्पन्ना दधते इति क्रिया श्लिष्टत्वेनोभयान्वययोग्या। यत्र प्रकृतोचितलिङ्गवचनपर्य्यायशब्दान्त-

राभावान्नियतलिङ्गवचनपदैरेवोपमानोपमेयभावोऽवश्यं विधेयस्तत्रागत्या व्यत्ययेनान्वयसिद्धौ नोद्वेग इति दर्शयति प्राणा इवेत्यादि, अत्र प्राणपदं समूहवाचकत्वान्नियतबहुवचनान्तं धनपदञ्च नियतक्लीवलिङ्गम्, अनयोश्च प्रकृतोचितलिङ्गवचनपर्य्यायान्तरमप्रसिद्धं तस्मात् प्राणा यथा प्रियास्तथायं प्रिय इति, धनं यथा अर्ज्जितं तथा विद्यार्ज्जितेति विपरिणामेनान्वयोऽगत्याकर्त्तव्य इति नोद्वेगः, एवं स लोहकारभस्त्रेव श्वसन्नपि न जीवतीत्यादीनि महाकविप्रयुक्तानि बहून्येवंविधानि द्रष्टव्यानि, तथा चन्द्रेण तुल्यममलाङ्गि मुखं त्वदीयं मत्कौतुकामृतपयोनिधिवृद्धिकारि इत्यादौ तुल्यादिशब्दप्रयोगे, मधुरः सुधावदधर इत्यादौ वदादितद्धितप्रयोगे, चन्द्र इव मुखमित्यादौ साधारणधर्म्माप्रयोगे वस्तूपमायामेवंविधेऽन्यत्रापि च लिङ्गवचनभेदस्यानुद्वेगकरत्वं बोध्यम् ॥ ५२ ॥

भवानिव महीपाल देवराजो विराजते ।
अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥ ५३ ॥

उपमानस्य हीनत्वाधिकत्वयोरनुद्वेजकत्वं दर्शयति । भवानिवेति । इवान्तस्योपमानत्वनियमात् भवच्छब्दवाच्यो राजा चोपमानं तस्य च मनुष्यत्वाद्देवराजापेक्षया हीनत्वमस्त्येव परन्तु राज्ञो लोकपालांशसम्भूतत्वान्नात्यन्तं तदिति न श्रोतृबुद्धिमाकुलयति तथा, यथा चण्डाल इव राजासौ संग्रामेऽधिकमाहस इत्यादावतिनिकृष्टस्य चण्डालस्योपमानतायां । ननु

विपर्य्यासोपमायामस्यां वर्णनीयस्य राज्ञ उत्कर्षातिशयार्थमेवोपमानत्वप्रतिपादनं पर्य्यवसाने तूपमेयत्वमेव प्रतीयत इति चेत्तर्हि, उत्सङ्गितकुरङ्गोऽयमृक्षमण्डलमध्यगः। विधुर्व्याघ्र इवाभाति हन्तुं विरहदुर्बलानित्युदाहरणमत्र बोध्यम्, अत्र श्लिष्टविशेषणमहिम्ना निकृष्टस्यापि व्याघ्रस्योपमानत्वं नोद्वेगं जनयति। एतच्च जातिगतन्यूनतायां, प्रमाणगतायान्तु, वामयाश्यामुखे भाति विधुश्चन्दनबिन्दुवदित्युदाहरणम्, अत्र विम्बापेक्षया चन्दनबिन्दोः प्रमाणगतन्यूनत्वेऽप्यस्ति कश्चिच्चमत्कारातिशयः येन न्यूनत्वकृतोद्वेगस्तिरोधीयते। अलमिति। अत्र मनुष्यविशेषस्य नृपस्योपमानमंशुमान् जात्याधिकः, अधिकत्वेनैव चोपमानत्वम् अन्यथोपमाविलोपप्रसङ्गात् निकृष्टेनोपमीयमानतायां प्रस्तुतस्योत्कर्षप्रतीत्यनुपपत्तेः तस्मादत्यधिकत्व एवोद्वेगः, यथा हरवन्नीलकण्ठोऽयं विराजति शिखावल इति, अत्र पक्षिणः शिखावलस्यात्यधिकोहर उपमानम्, एतच्चाधिक्यं जातिगतम्, प्रमाणगतन्तु कुम्भाविव कुचावेताविल्यादौ, अत्र कुचापेक्षया कुम्भस्य नात्यधिकत्वमिति नोद्वेगः, उद्वेगस्य, तालीफलमिदं भाति नीलं नीलाचलोपममित्यादौ, उपमानस्य प्रमाणतोऽत्यधिकत्वात् ॥ ५३ ॥

इत्येवमादौ सौभाग्यं न जहात्येव जातुचित् ।
अस्त्येव क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ॥ ५४ ॥
हंसीव धवलश्चन्द्रः, सरांसीवामलं नभः ।
भर्तृभक्तोभटः श्वेव. खद्योतो भाति भानुवत् ॥ ५५ ॥

ईदृशं वर्ज्यते सद्भिः, कारणं तत्र चिन्त्यताम्।
गुणदोषविचाराय स्वयमेव मनीषिभिः ॥ ५६ ॥

पूर्व्वश्लोकद्वये निरुद्वेगं स्वयमेव दर्शयति। इत्येवमादाविति। सौभाग्यं न जहात्येवेति, अत्र लिङ्गवचनभेदो हीनाधिकता चेति कर्त्तपदमूह्यं। सौभाग्यं प्रस्तुतस्योत्कर्षं न जहाति न प्रतिबध्नाति। यत्रोद्वेगो न धीमतामित्यत्र यत्रेत्यनेन क्वचिदुद्वेगोऽप्यस्तीति सूचितं तद्दर्शनायाह अस्त्येवेति, क्वचित्प्रयोगे वाग्विदामुद्वेगोऽस्त्येवेत्यन्वयः। हंसीवेत्यादि, अत्र प्रथमपादे उपमानोपमेयपदयोर्लिङ्गभेदः, द्वितीये वचनभेदः। तृतीये उपमानस्य जात्या न्यूनता चतुर्थे चाधिकता, एतेषामुद्वेगजनकत्वं पूर्व्वमुक्तं ॥ ५४ ॥ ५५ ॥

ईदृशमिति। सद्भिर्निपुणकविभिः। तत्र क्वचिद्वर्ज्यत्वे क्वचिदवर्ज्यत्वे च कारणमुद्वेगानुद्वेगरूपं, गुणदोषविचाराय मनीषिभिः प्राप्तबुद्धिभिः स्वयमेव चिन्त्यतामित्यन्वयः, एतेन गुणदोषाः स्वयमेव सुबुद्धिभिर्ज्ञायन्ते, अतस्तेषां साकल्येन प्रदर्शनया ग्रन्थबहुलीकरणमप्रयोजनमिति दिङ्मात्रमेव दर्शितमिति सूचयता स्वस्य न्यूनत्वं परिहृतम् ॥ ५६ ॥

इववद्वायथाशब्दाः समाननिभसन्निभाः।
तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः ॥ ५७ ॥

प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः।
सदृक्सदृशसंवादिसजातीयानुवादिनः॥ ५८॥
प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः।
सलक्षणसदृक्षाभसपक्षोपमितोपमाः॥ ५९॥
कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि।
सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः॥ ६०॥
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु।
स्पर्द्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्ज्जति॥ ६१॥
आक्रोशत्यवजानाति कदर्थयति निन्दति।
विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति॥ ६२॥
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति।
तेन सार्द्धं विगृह्णाति तुलां तेनाधिरोहति॥ ६३॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति॥ ६४॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः।
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः॥ ६५॥

उपमालक्षणे प्रतीयत इत्यत्र प्रतीतिरभिधया लक्षणया व्यञ्जनया च भवतीत्युक्तं, तत्र वाचकादिशब्दान्निर्द्दिशति। इवेत्यादि। वदिति तद्धितो वतिप्रत्ययः स च तत्र तस्येवेत्यनेन कश्चिदिवार्थे विहितः, तेन तुल्यं क्रिया चेद्वतिरित्यनेन

च क्वचित्तुल्यार्थे विहितः। वा इति वशब्दस्योपलक्षकः तस्यापि सादृश्यवाचकत्वात्। निभादयः केचित् समासमध्यगता एव प्रयुज्यन्ते। कल्पदेशीयदेश्याः प्रत्ययाः। अन्यूनार्थवादिनोऽहीनार्थवाचकाः। समासश्चेति बहुव्रीहिः कर्मधारयोपलक्षकः यथा शस्त्रीश्यामा, पुरुषव्याघ्र इत्यादौ। शशाङ्कवदनादिष्विति शशाङ्कसदृशं वदनं यस्या इति बहुव्रीहौ पूर्व्वार्द्धसम्बन्धोत्तरपदस्येत्यादिना सदृशपदलोपः। सन्धत्ते इत्यत्र रुन्धे इति मुष्णातीत्यत्र पुष्णातीति क्वचित्पाठः। तस्य मुष्णाति सौभाग्यमित्यादिवाक्यप्रयोगदर्शनया प्रौढोक्त्या सौभाग्यादिमोषणादिसापेक्षतयैव सादृश्यप्रतीतिर्नान्यथेति सूचितम् अतएव चौरो धनं मुष्णातीत्यादौ न साम्यप्रतीतिः। सर्व्वत्र तच्छब्द उपमानपरः। तुलां तेनाधिरोहतीति तेन सह तुलां मानयन्त्रं स्वसमीकरणायाधिरोहति। तुलासादृश्यमानयोरिति मेदिनी। नतूपमां, तथात्वे अधिरोहतीत्युपादानवैफल्यात् तुलाशब्देनैव साम्यप्रतीतेः, तथा तेनेत्यत्र हतीयानुपपत्तेश्च, अतएवात्र तुलोपमावर्ज्जनात्तुल्यार्थैरित्यादिना हतीयाया अप्राप्तौ सहार्थविवक्षया हतीयेति गोयीचन्द्रस्य प्रयासो विफल इव प्रतिभाति। तच्छीलमित्येकं, तच्छीलति परिचिनोतीति तस्य शीलं स्वभावो यस्येति वा विग्रहः नतु तस्येव शीलं यस्येति, तथात्वे समासस्य बहुव्रीहिरित्यनेनैव सिद्धौ विशेषणोपादानमनर्थकं स्यात्। तन्निषधति उत्कर्षकक्षायां प्रवेष्टुं वारयति। सादृश्यसूचकाः

सादृश्यस्य बोधकाः वाचका लक्षका व्यञ्जकाश्चेत्यर्थः । तत्र इवादयो वाचकाः, स्पर्द्धत इत्यादयो लक्षकाः स्पर्द्धादिधातूनां सादृश्ये सङ्केतिलाभावात्, तस्य मुष्णाति सौभाग्यमित्यादयो व्यञ्जकाः । सूचका इत्यत्र वाचका इति पाठस्तु न मनोरमः सर्व्वेषां वाचकत्वाभावात् । वाचकशब्देषु च इवादिप्रयोगे श्रौती, तुल्यादिप्रयोगे त्वार्थीत्युपमाभेदो नवीनैः प्रदर्शितः । उपमायामिमे इत्याद्यर्द्धं न सर्व्वत्र पुस्तकेषु दृश्यते ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

## इत्युपमाचक्रम् ।

उपमैव तिरोभूतभेदा रूपकमुच्यते ।
यथा बाहुलता, पाणिपद्मं, चरणपल्लवः ॥ ६६ ॥

अथ रूपकं लक्षयति । उपमैवेति । तिरोभूतोऽप्रकटः सन्नपि प्रतिबन्धकत्वसंकोचात् स्वोत्तरकालीनेनाभेदेन निह्नुतप्राय इत्यर्थः, भेदः प्रस्तुताप्रस्तुतयोर्भेदयहो यत्र तादृशी उपमैव सादृश्यमेव रूपकमुच्यत इत्यन्वयः । प्रस्तुताप्रस्तुतयोः सादृश्यप्रत्ययजन्याभेदप्रतीतिसध्रीचीनाभेदप्रतीतिजन्यवैचित्र्यं रूपकमित्यर्थः इयञ्चाभेदप्रतीतिराहार्य्यरूपा, आहार्य्यत्वञ्च सत्यपि बाधे प्रमातुरिच्छाप्रयोज्यत्वं प्रतिबध्यतावच्छेदककोटावनाहार्य्यत्वस्य निवेशनीयत्वेन तादृशाभेदप्रतीतेर्बाधाप्रतिबध्यत्वात् सादृश्यञ्चात्र गौणसारोपलक्षणागम्यं बोध्यं तेन

गौणसाध्यवसानलक्षणाबोध्यसादृश्यमूलायामतिशयोक्तौ नातिव्याप्तिः नापि चन्द्रसदृशं मुखं चन्द्र इत्यादौ शब्दवाच्यसादृश्यग्रहोत्तराभेदग्रहेऽतिप्रसङ्गः, अपह्नुतौ तु नेदं नभोमण्डलमम्बुराशिरित्यादौ न लक्षणाजन्यसादृश्यप्रतीतिपूर्व्वकत्वमभेदाध्यवसानस्य, नूनं मुखमिदं चन्द्र इत्यादावुत्प्रेक्षायामपि न तथात्वं नाप्याहार्य्यात्मकत्वं सम्भावनायाः इत्यन्यत्र च निरुक्तदिशातिप्रसङ्गो निरसनीयः। प्रकृते मुखं चन्द्र इत्यादौ प्रथमं लक्षणया चन्द्रपदात् चन्द्रसादृश्योपस्थित्या चन्द्रसदृशं मुखमित्यन्वयबोधः, तदनन्तरमेव च लक्षणामूलया व्यञ्जनया चन्द्रो मुखमित्यभिन्नतया मुखचन्द्रयोः प्रतीतिः सा च सद्य एव विदग्धजनहृदयोन्मादकरं किमपि वैचित्रमुद्भावयति येन च सादृश्यप्रतीतिजन्यमुपमावैचित्रं स्वकुक्षौ निक्षिप्यते ततस्तु नात्रोपमारूपकयोः साङ्कर्य्यमिति पूर्व्वमेवोक्तम्, इयञ्चाहार्य्यात्मिकाऽभेदप्रतीतिर्लक्षणायाः प्रयोजनभूता लक्षणाजनितसादृश्यप्रकारकशाब्दबोधानन्तरस्फुरणात्। उक्तञ्च प्रका[illegible]कृता। भेदेऽपि ताद्रूप्यप्रतीतिः सर्व्वथैवाभेदावगमश्च प्रयोजनमिति। लक्षणाजन्यसादृश्यप्रतीत्यनन्तरोत्पन्नाया एव ताद्रूप्यप्रतीतेर्व्विचित्रातिशयजनकत्वादेतदलङ्कारत्वमिति स्पष्टीकृतं कण्ठाभरणे यथा, "यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात्। उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुः" इति। शारीरकमीमांसाभाष्यव्याख्याने वाचस्पतिमिश्रैरपि उपमानशब्दस्योपमेयवृत्तौ गौणलक्षणाया हेतुत्वमुक्तं यथा, अपिच परशब्दः परत्र-

लक्ष्यमाणगुणयोगेन वर्त्तत इति। विश्वनाथस्तु रूपकादौ साम्यस्य व्यङ्ग्यत्वं, रूपकस्य च गौणीमूलकत्वमाह, तत् स्ववचनद्वयेनैव प्रमादप्रतिपादनादुपेक्षणीयम्। उपमैवेत्येवकारेण सम्बन्धान्तरव्यावृत्तिः, तेन आयुर्घृतमित्यादौ लक्षणाजन्यकार्य्यकारणभावादिप्रत्ययेन भिन्नयोरभेदो न रूपकम्। रत्नाकरस्तु सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तो वा यावान् भिन्नयोः सामानाधिकरण्यनिर्द्देशः स सर्व्वोऽपि रूपकं, सारोपलक्षणामूलकत्वस्य तुल्यत्वेन सादृश्यप्रयुक्तस्य तादात्म्यस्येव सम्बन्धान्तरप्रयुक्तस्यापि तादात्म्यस्य संग्रहीतुमौचित्यात्, तस्माद्दुराग्रह एवायं प्राचामुपमानोपमेययोरभेदोरूपकं न कार्य्यकारणादिकयोरितीत्याह। अपरे च कार्य्यकारणयोरभेदोहेत्वलङ्कारः, उपमानोपमेययोरभेदोरूपकं, सम्बन्धान्तरवतोरभेदस्तु वैचित्राजननान्नालङ्कार इत्याहुः। नवीनतरास्तु रूपकस्य सादृश्यप्रतीतिपूर्व्वकत्वमेव, तच्च सादृश्यं प्रत्यक्षादिप्रमाणान्तरगम्यं, नतु गौणसारोपलक्षणया शब्दप्रमाणगम्यं, तत्र सादृश्यस्य शब्दवेद्यत्वादुपमैव, अतएवाग्नेये, उपमानस्य तत्त्वं यदुपमेये तु रूप्यते। गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुरिति। अत्र दृष्ट्वेत्युक्तं, तस्मात् सादृश्यस्य प्रमाणान्तरवेद्यत्व एव रूपकं। लक्षणास्थले तु लक्षणाफलत्वेनाभ्युपगताऽप्यभेदबुद्धिर्हृदोत्थबोधतया शाब्दबोधविषयतां गतस्य सादृश्यस्य तत्काल एव प्रवृत्तमुपमाव्यपदेशं न व्याहन्तुमीष्टे प्रवृत्तत्वात् तस्य, नहि निर्बाधं लब्धसत्ताकं वस्तु कालान्तरीयेण प्रतिद्वन्द्विनान्यथाकर्त्तुं

प्रकाश इति वदन्ति। इत्थं रूपकस्य सामान्यलक्षणमभिधाय तत्प्रभेदान् दर्शयन् तत्र समस्तव्यस्तशब्दगतत्वेन द्विविधस्य तस्य प्रथमं समस्तगतत्वमुदाहरति। यथेति। बाहुलतेत्यादि, बाहुरेव लता, पाणिरेव पद्मं, चरण एव पल्लव इति मयूरव्यंसकादित्वात् कर्म्मधारयः, अत्र बाहुलतेत्यादिव्यासवाक्यवत् समासवाक्येऽपि प्रथमं गौणलक्षणया लतादिपदात् तत् सादृश्यप्रतीतिस्तदनन्तरं च समभिव्याहृतया व्यञ्जनया ताद्रूप्यप्रतीतिरिति बहवः। नव्यास्तु व्यस्तरूपकस्यैव गौणीमूलकत्वं न समस्तरूपकस्य, समस्ते त्वभेदप्रतीतिमात्रमिति वदन्ति। केचित्तु बाहुलतेवेति उपमितं व्याघ्रादिभिः सामान्याप्रयोग इत्यनेन कर्म्मधारयमामनन्ति तन्न रुचिरम्, इवादिवत् तादृशकर्म्मधारयस्यापि साम्यवाचकत्वेनोपमायाः सम्भवात्, अतएवैवंविधस्थले साधकबाधकाप्रयोगे रूपकोपमयोः साङ्कर्य्यमपीच्छन्ति तदन्यतरप्रयोगे त्वन्यतरमेव, यथा मुखचन्द्रं चुम्बतीत्यादौ चुम्बनमुपमेयमुख एव सम्भवतीत्युपमासाधकं तेनात्र मुखं चन्द्र इवेत्युपमितिसमासः। "आन्तरं मे तमो हन्ति मुखचन्द्रस्तव प्रिये" इत्यादौ तमोहननमुपमानचन्द्रस्यैव धर्म्म इति रूपकस्य साधकं तेनात्र मुखमेव चन्द्र इति रूपकसमासः। मुखचन्द्रः शोभत इत्यादौ तु द्वयोरपि शोभासम्भवात् एकतरसाधकबाधकाभावेनोपमारूपकयोः सङ्करः तेनात्र मुखं चन्द्र इवेति मुखमेव चन्द्र इति च समासद्वयाश्रयणम्। एवं सुन्दरं वदनाम्बुजमित्यादौ सामान्यधर्म्मप्रयोगे उपमितिसमासाभावात्

सुन्दरमिति रूपकस्य साधकं, तेन वदनमेवाम्बुजमिति रूपकसमासः। येतु समासस्य वाचकतां नाङ्गीकुर्व्वन्ति तेषां मते पुरुषव्याघ्र इत्यादौ व्याघ्रादिपदं व्याघ्रादिसदृशे लाक्षणिकमिति लक्षणाजन्यसादृश्यबोधानन्तरं तयोरभेदारोपे रूपकं सम्भवत्येव, परन्तु तदालङ्कारिकराद्धान्तविरुद्धमेव मन्तव्यं। प्रकृते तु बाहुलतेत्यादौ निरङ्कयुक्त्या सङ्कर एव, शुद्धोदाहरणन्तु, तव बाहुलता बाले पुष्पिता नखरश्मिभिरित्यादिकं बोध्यम्, अत्र पुष्पितत्वमुपमानलतायाः एव धर्म्म इति रूपकस्य साधकम्॥ ६६॥

अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्च्चिषः।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी॥ ६७॥

व्यस्तरूपकमुदाहरति। अङ्गुल्य इति। त्वं वसन्तश्रीरिति, नन्वस्फुटसादृश्ययोर्नायिकावसन्तश्रियोः कथं विषयविषयिभाव इति सादृश्यार्थं तदुभयवृत्तिवस्तूनां प्रथमं विम्बप्रतिविम्बतया विषयविषयिभावं दर्शयति अङ्गुल्यः पल्लवानीत्यादि, अत्र वाक्यत्रयेऽपि विषयविषयिणोर्विभिन्नलिङ्गत्वप्रदर्शनया रूपके लिङ्गभेदो न दूषणायेति सूचितं, क्वचिद्वचनभेदोऽपि यथा शास्त्राणि चक्षुर्नवमित्यादौ, अत्र शास्त्राणीति बहुवचनेन सकलशास्त्रज्ञानवत्त्वज्ञापनाच्चमत्कारातिशयः, अन्यैवंविधस्थले तु दोष एव यथा मुखं पद्मानीति॥ ६७॥

इत्येतदसमस्ताख्यं समस्तं पूर्व्वरूपकम् ।
स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥ ६८ ॥

इत्येतदिति । एतद्रूपकमसमस्तशब्दगतत्वादसमस्ताख्यं । पूर्व्वरूपकं चाङ्गुलतेत्यादिपूर्व्वश्लोकप्रदर्शितरूपकं समस्तं समस्तशब्दगतत्वात् समस्तनामकम् । उभयगतत्वादुभयशब्दघटितनामकमथाह । स्मितमिति । समस्तव्यस्तरूपकमिति मुखेन्दोरित्यत्र समासः स्मितं ज्योत्स्नेत्यत्र च व्यासः ॥ ६८ ॥

ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।
ध्रियते मूर्द्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ६९ ॥
अङ्गुल्यादौ दलादित्वं, पादे चारोप्य पद्मताम् ।
तद्योग्यस्थानविन्यासादेतत् सकलरूपकम् ॥ ७० ॥

सकलरूपकमाह । ताम्राङ्गुलीति, ताम्राङ्गुलय एव दलानि तेषां श्रेणिर्यत्र तत् । नखानां दीधितय एव केसरा यत्र तत् । दलादित्वं दलत्वादि । तद्योग्यस्थानविन्यासादिति । तस्य पङ्कजधारणस्य योग्यस्थानं मूर्द्धा तस्य विन्यासात् शब्देन प्रतिपादनात्, यद्वा तस्य पङ्कजस्य योग्यस्थाने मूर्द्ध्नि विन्यासाद्धारणात् तादृशधारणस्य वर्णनादित्यर्थः । अयम्भावः मूर्द्ध्नि धारणं पङ्कजस्यैवोचितमित्युपमानमात्रगतत्वाद्रूपकस्य साधकम्, उपमेये च चरणेऽसम्भवादुपमायाबाधकम्, एतदनुक्तौ तु सा-

धकबाधकाभावात् पूर्व्वोक्तदिशा सङ्कर एव स्यादिति। सकलरूपकमिति चरणस्य पङ्कजत्वेन रूपणे तदनुगुणतया चरणावयवेष्वपि पङ्कजावयवानां रूपणात् सकलरूपकता। इदमेव नव्याः साङ्गरूपकमाहुः। यथा दर्पणे, "अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्" इति, उदाहृतञ्च यथा, "रावणावग्रहक्लान्तमितिवागमृतेन सः। अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे" इति ॥ ६८ ॥ ७० ॥

अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम्।
मुखं मुक्तारुचो धत्ते घर्म्माम्भःकणमञ्जरीः ॥ ७१ ॥
मञ्जरीकृत्य घर्म्माम्भः, पल्लवीकृत्य चाधरम्।
नान्यथा कृतमत्रास्यमतोऽवयवरूपकम् ॥ ७२ ॥

अवयवरूपकमाह। अकस्मादेवेति। हे चण्डि! कोपने! स्फुरित आकम्पितोऽधर एव पल्लवोदलं यत्र तत् ते मुखं मुक्तारुचो मुक्ताकारा घर्म्माम्भसां कणा एव मञ्जर्य्यः कणिकोपरिस्थगुलिका इत्यर्थः, ताः अकस्मादेव धत्ते इत्यन्वयः ॥ ७१ ॥

मञ्जरीकृत्येति। अत्र पद्ये घर्म्माम्भो घर्म्माम्भःकणान् मञ्जरीकृत्य मञ्जरीत्वेनारोप्य, एवमधरं पल्लवीकृत्य च आस्यमवयविभूतं मुखन्तु नान्यथाकृतं विषयान्तराभिन्नतया नारोपितम्, अतोऽवयवमात्ररूपणादवयवरूपकमिदमित्यन्वयः। अत्र प्रस्तुते मुखे पद्मत्वारोपोऽर्थवशादवसेयः, अतएवेदमेकदे-

प्रविवर्त्तिरूपकमित्यालङ्कारिकाः। यथा दर्पणे, "यत्र कस्यचिदार्थत्वमेकदेशप्रविवर्त्ति तत्" इति॥ ७२॥

वल्गितभ्रु गलद्घर्म्मजलमालोहितेक्षणम्।
विवृणोति मदावस्थामिदं वदनपङ्कजम्॥ ७३॥
अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम्।
आसीद्गमितमत्रेदमतोऽवयविरूपकम्॥ ७४॥

अवयविरूपकमाह। वल्गितेति। वल्गितभ्रु चलितभ्रूयुगम्। मदावस्थामिति मदो मद्योपयोगजनितविकारः स च मद्योरहानन्दसम्भेदो मदो मद्योपयोगज इत्युक्तरूपः, तस्यावस्थां प्रादुर्भावं। वदनपङ्कजमिति, नन्वत्र वदनमेव पङ्कजमिति रूपकपरिग्रहे किं विनिगमकम्, उपमानपङ्कजमात्रान्वयिधर्म्मान्तरानुपादानात् प्रत्युत वल्गितभ्रुत्वादीनामुपात्तानामुपमेयवदनमात्रसम्बन्धित्वेनोपमासाधकत्वादुपमैवात्र भवितुमर्हतीति चेत्तर्हि वदनमम्बुजमिति व्यस्तमेव पठनीयमिति॥ ७३॥

अविकृत्येति। अत्र मुखस्याङ्गानि भ्रूप्रभृतीनि अविकृत्य उपमानान्तराभिन्नतया नारोप्य मुखमेवारविन्दतां गमितं पङ्कजत्वेनारोपितमासीत् अतोऽवयविनो मुखमात्रस्यैव तादृग्पपङ्कजत्वेन रूपणादवयविरूपकमिदम्। अत्र भ्रुव उपमानं दलं, घर्म्मजलस्य मकरन्दः, लोहितेक्षणस्य च परागपिञ्जरभ्रमरोऽनुपात्तः, इदं निरङ्गरूपकमिति नव्याः॥ ७४॥

मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते।
मुखेन मुग्धः सोऽप्येष जनोरागमयः कृतः॥ ७५॥
एकाङ्गरूपकञ्चैतदेवं द्विप्रभृतीन्यपि।
अङ्गानि रूपयन्त्यत्र, योगायोगौ भिदाकरौ॥ ७६॥

पूर्व्वोक्तावयवरूपकस्य भेदान् दर्शयन् प्रथममेकाङ्गरूपक-भेदमाह। मदेति। एष जनो मल्लचणः रागमयः अनुराग-बहुलः अथ च लौहित्यमयः। एकाङ्गरूपकमिति रक्तनेत्रो-त्पलेनेत्यत्रैवारोपात्, मदपाटलगण्डेनेत्यत्र च तदभावादेका-ङ्गमात्ररूपणेनेदमेकाङ्गरूपकाख्यम्। एवमिति अत्र द्विप्रभृ-तीन्यप्यङ्गान्येवं रूपयन्ति, तेन च द्व्यङ्गरूपकं त्र्यङ्गरूपकमित्या-दीनि नामान्यवयवरूपकस्य ज्ञेयानि। तेषु च विशेषावाह, योगायोगौ भिदाकराविति, योग आरोप्यमाणानां परस्परं युज्यमानः सम्बन्धः, अयोगस्तदभावः तौ भिदाकरौ भेदकौ, द्विप्रभृत्यङ्गारोपेषु आरोप्यमाणानां परस्परसम्बन्धासम्बन्धाभ्यां युक्तरूपकमयुक्तरूपकमिति च भेदद्वयमित्यर्थः॥ ७५॥ ७६॥

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम्।
इति पुष्पद्विरेफाणां सङ्गत्या युक्तरूपकम्॥ ७७॥

तत्र प्रथमं युक्तरूपकमुदाहरति। स्मितेति। स्मितमेव पुष्पं तेनोज्ज्वलं, लोले नेत्रे एव भृङ्गौ यत्र तत्। अत्र मुख-

स्यावयवयोरेव स्मितनेत्रयोः पुष्पभृङ्गाभिन्नतया रोपणादवयवरूपकम् । अवयवत्वस्याधेयत्वं, तथात्वस्य स्मितस्य विद्यत एव । इतीति, पुष्पद्विरेफाणां सङ्गत्या सम्भवता परस्परयोगेन पुष्पेषु द्विरेफाणां सम्बन्धस्य युक्तत्वेनेत्यर्थः युक्तरूपकनामकमिदम् ॥ ॥ ७७ ॥

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।
इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥ ७८ ॥

अयुक्तरूपकमुदाहरति । इदमिति । आर्द्रं सरसं स्मितमेव ज्योत्स्ना यत्र तत् । ज्योत्स्नोत्पलायोगादिति, ज्योत्स्नोत्पलयोरारोप्यमाणयोरयोगात् उत्पले ज्योत्स्नायोगस्याभावादयुक्तरूपकमिदम् ॥ ७८ ॥

रूपणादङ्गिनोऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥
मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्त्तितभ्रूलतेनालं मर्द्दितुं भुवनत्रयम् ॥ ८० ॥

विषमरूपकमाह । रूपणादिति । अङ्गिनो रूपणात्, तथा अङ्गानां रूपणारूपणाश्रयात् कस्यचिदङ्गस्य रूपणात् कस्यचिदरूपणाच्चेत्यर्थः । आश्रयपदं भावसाधितम् । एवं रूपणारूपणरूपवैषम्याद्विषमरूपकमिदम् ॥ ७९ ॥

उदाहरति । मदरक्तेति । मुखेन्दुनेत्यत्र मुखस्याङ्गिनोरूपणम् । अङ्गयोस्तु भ्रूकपोलयोर्मध्ये भ्रुवोरूपणं, कपोलस्यारूपणमिति वैषम्यम् ॥ ८० ॥

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ ८१ ॥
विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।
पादे तदर्पणादेतत् सविशेषणरूपकम् ॥ ८२ ॥

सविशेषणरूपकमाह । हरिपाद इति । शिरः पादस्य ध्वजस्य चाग्रभागः, तत्र लग्नं जह्नुकन्याया मन्दाकिन्या जलमेवांशुकं श्वेतपटाञ्चलं यस्य सः । असुरेभ्यो निःशङ्का बलिदमनान्निर्भया ये सुरास्तेषामानन्दोत्सवस्य ध्वजः केतुर्हरेर्वामनस्य पादो वामचरणः ॥ ८१ ॥

विशेषणेति । विशेषणसमग्रस्य विशेषणविशिष्टस्य, केतोर्ध्वजस्य, विशेषणञ्चात्र शिरोलग्नेत्यादि असुरनिःशङ्केत्यादि च ॥ ॥ ८२ ॥

न मीलयति पद्मानि न नभोऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ८३ ॥
अक्रिया चन्द्रकार्य्याणामन्यकार्य्यस्य च क्रिया ।
अत्र सन्दर्श्यते यस्माद्विरुद्धं नाम रूपकम् ॥ ८४ ॥

विरुद्धरूपकमाह । नेति । मानिनीं प्रति नायकस्योक्ति-

रियं। न मीलयति न सङ्कोचयति। असूनां हरणायैवेति विप्रलम्भोद्दीपकत्वादिति भावः। कल्पत इत्यत्र यस्यतीति क्वचित्पाठः, यस्यति यतते ॥ ८३ ॥

अक्रियेति। चन्द्रस्यारोप्यमाणस्य कार्य्याणि पद्ममीलन-नभोऽवगाहनादीनि, अन्यस्यारोप्यमाणचन्द्रभिन्नस्य यमस्य कार्य्यमसुहरणरूपम्। विरुद्धमिति, उपमानाभिन्नतया रूपितस्योपमेयस्योपमानकार्य्यकरणमेवोचितं तदकरणात् प्रत्युत तदन्यकार्य्यकरणाच्च विरोधप्रतिभासाद्विरुद्धरूपकमिदं, विरोधश्चात्रानौचित्यरूपः ॥ ८४ ॥

गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्व्वतः।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥ ८५ ॥
गाम्भीर्य्यप्रमुखैरत्र हेतुभिः सागरोगिरिः।
कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥ ८६ ॥

हेतुरूपकमाह। गाम्भीर्य्येणेति। गाम्भीर्य्यमक्षोभ्याशयत्वं, गौरवं सारशालित्वं। तृतीया पञ्चमी चात्र हेतौ ॥ ८५ ॥

गाम्भीर्य्यप्रमुखैरिति। क्रियते प्रस्तुते राजनि आरोप्यते, अत्र गाम्भीर्य्यादिसाधारणधर्म्माणां हेतुतयोपादानेन समुद्राद्यारोपणाद्धेतुरूपकमिदं। विश्वनाथादयस्तु एकस्य प्रस्तुतस्य गाम्भीर्य्यादिविषयभेदेनानेकधोल्लेखादुल्लेखालङ्कारोऽयमित्याहुः ॥ ८६ ॥

राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
सखि ! वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम् ॥ ८७ ॥

श्लिष्टरूपकमाह । राजहंसोपभोगार्हमिति । राजहंसो नृपश्रेष्ठः पक्षिविशेषश्च, भ्रमरः कामुको भृङ्गश्च । "राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति । भ्रमरः कामुके भृङ्गे इति च मेदिनी । श्लिष्टरूपकमिति साधारणधर्म्मस्य श्लेषनिष्पन्नत्वादिति भावः । साधारणधर्म्मप्रयोगाभावात्र वक्त्रमम्बुजमिवेत्युपमितिसमासाभावान्नोपमाशङ्का ॥ ८७ ॥

इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥ ८८ ॥
अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
सन्नद्धोदयरागस्य मुखस्य प्रतिगर्ज्जति ॥ ८९ ॥
चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।
असमग्रोऽप्यसौ शश्वदयमापूर्णमण्डलः ॥ ९० ॥

उपमारूपकव्यतिरेकरूपके क्रमेणाह । इष्टमिति । गौणः गुणसम्बन्धादारोप्यमाणश्चन्द्रादिः, मुख्य आरोपविषयो मुखादिः, तयोः साधर्म्यदर्शनादुपमारूपकं वैधर्म्यदर्शनाद्व्यतिरेकरूपकञ्च इष्टं कविभिरभिलषितम् । क्रमेणोदाहरति । यथेति । अयमिति मदेन मद्यपानेन आलोहितच्छायः किञ्चिल्लोहितकान्तिः । सन्नद्धः स्फुरन्नुदयराग उदयकालीनलौहित्यं

यस्य, तस्य चन्द्रस्य प्रतिगर्ज्जति समानरागवत्त्वात् स्पर्द्धते सतु सदृशीभवतीत्यर्थः, तथा सत्युपमाया विश्रान्तिधामतया प्राधान्यात् तया निगीर्णस्य मुखचन्द्रमा इत्यत्र सतोऽपि रूपवैचित्रस्य व्यपदेशकत्वाभावेन भेदकरणानौचित्यात् चन्द्राभिन्नं मुखं चन्द्रसदृशमिति प्रतीत्यसङ्गतेश्च। वस्तुतस्तु, रक्तं तव मुखं चण्डि साक्षात् सन्ध्येन्दुमण्डलमित्युदाहरणमस्य बोध्यम्, अत्र रक्तत्वं मुख्यगौणयोर्मुखेन्दुमण्डलयोः साधर्म्यमित्युपमारूपकमिदं। न चोपमाया अप्रतीतौ कथमुपमारूपकमितिसमाख्यालाभ इति वाच्यं, तस्य रूप्यरूपकयोः साधर्म्यसद्भावरूपतया पारिभाषिकत्वात्। चन्द्रमा इति। असौ देवैः पीयमानश्चन्द्रः शश्वदसमग्रोऽसम्पूर्णः, अयं मया पीयमानस्त्वन्मुखचन्द्रमाः पुनः शश्वदापूर्णमण्डल इति मुख्यगौणयोर्मुखचन्द्रमसोः सम्पूर्णत्वाऽसम्पूर्णत्वरूपवैधर्म्यप्रयोगाद्व्यतिरेकरूपकमिदं व्यतिरेकस्योपमानादुपमेयस्योत्कर्षः। नच वक्ष्यमाणव्यतिरेक एवायमिति वाच्यं, सादृश्यप्रतीतिपूर्व्वकभेदपर्य्यवसानाभावात्, यथा वक्ष्यति। शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः। तत्र यद्भेदकथनं व्यतिरेकः स उच्यत इति॥ ८८॥ ८९॥ ९०॥

मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः।
न ते सुन्दरि! संवादीत्येतदाक्षेपरूपकम्॥ ९१॥

आक्षेपरूपकमाह। मुखचन्द्रस्येति। इत्थमितिपदं वाक्यस्यास्य कमलसङ्कोचनरतचन्द्रनिन्दाबोधकवाक्यान्तरार्थं सूच-

यति। इत्थं कमलसङ्कोचनेन अन्योपतापिनः परपीडयितुः, यद्वा इत्थमेवमतिनिर्द्दयमेवेत्यर्थः, अन्योपतापिनो मादृशविरहिजनतापकस्य चन्द्रस्य चन्द्रत्वं तव मुखचन्द्रस्य न संवादि न युज्यते सर्व्वेषामाह्लादकत्वेन परपीडकधर्म्माध्यासायोगादिति भावः। विलक्षणमेवेदं त्वन्मुखचन्द्रस्य चन्द्रत्वमित्यर्थः। आक्षेपरूपकमिति आक्षेपः प्रतिषेधोक्तिः तदुपादाननियतत्वादाक्षेपरूपकमिदं। न चायं व्यतिरेकः सादृश्यप्रतीत्यभावात्, नाप्यपह्नुतिः प्रस्तुतस्यानिषेधात् चन्द्रत्वस्यारोप्यमाणतया प्रस्तुतत्वाभावात्॥ ८१॥

मुखेन्दुरपि ते चण्डि! मां निर्द्दहति निर्द्दयम्।
भाग्यदोषान्ममैवेति तत् समाधानरूपकम्॥ ८२॥

समाधानरूपकमाह। मुखेन्दुरपीति। अपिना निर्द्दहनस्यात्यन्तायोग्यत्वं सूचितं। तच्च स्वयं समाधत्ते भाग्यदोषान्ममैवेति नष्टघटनघटनायां भाग्यस्यातिभार इति स्वयमुत्थापितानुपपत्तिसमाधानसहकृतत्वात् समाधानरूपकमिदम्॥ ॥ ८२॥

मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्त्तकी तव।
लीलानृत्यं करोतीति रम्यं रूपकरूपकम्॥ ८३॥

रूपकरूपकमाह। मुखपङ्कजेति। मुखमेव पङ्कजं तदेव रङ्गो नाट्यालय इति समासद्वयम्, एवं भ्रूरेव लता सैव नर्त्त-

कीति। रूपकरूपकमिति एकेन रूपितस्याप्यपरेण रूपणा-दिति भावः। यथा प्रथमं मुखस्य पङ्कजत्वेन रूपणं ततश्च रङ्ग-त्वेन रूपणमिति एवं भ्रूलतानर्त्तकीत्यत्रापि, इदञ्च समास-गतमेव, व्यासे तु एकस्य बहुभीरूपणे हेतूपादाने गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्व्वत इत्यादौ हेतुरूपकं पूर्व्वमुक्तं तदनुपादाने मालावयविरूपकमिति। यथा सौन्दर्य्यस्य तर-ङ्गिणी, तरुणिमोत्कर्षस्य हर्षोद्गमः, कान्तेः कार्म्मणकर्म्म, नर्म्मर-हसामुल्लासनावासभूः। विद्या वक्रगिरां, विधेरनवधिप्रावीण्य-साचात्क्रिया, वाणाः पञ्चशिलीमुखस्य, ललनाचूडामणिः सा प्रिया, इति। रम्यमिति, यत्र बहुभीरूपणे रम्यता न भवति तत्र नेदं यथा, नारीबाहुलताव्यालीपरिरब्धः, कुतः सुखी-त्यादि, अत्र बाहौ लतात्वारोपे न कापि रम्यता, अपकर्ष-प्रतिपादनस्यैव प्रस्तावात्, प्रकृते तु मुखस्य पङ्कजत्वारोपेणोत्कर्ष-प्रतिपादनं युज्यत एव ॥ ९३ ॥

नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।
एतानि केसराण्येव नैता दन्तार्च्चिषस्तव ॥ ९४ ॥
मुखादित्वं निवर्त्त्यैव पद्मादित्वेन रूपणात् ।
उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ९५ ॥

तत्त्वापह्नवरूपकमाह। नैतदित्यादि। मुखादित्वं मुखत्वा-दि, निवर्त्त्यैव प्रतिषिध्यैव, पद्मादित्वेन पद्मत्वादिना प्रस्तुतस्य रूपणात् उद्भावितः रूपकारम्भेः स्फुटतया व्यञ्जितोगुणो-

त्कर्षः तादात्म्यारोपहेतुप्रस्तुतगुणाधिक्यं यत्र तत्, अतएवेदं तस्य प्रस्तुतस्वरूपस्यापह्नवेनाप्रस्तुतस्वरूपारोपात्तच्चापह्नवरूपकं, रूपकान्तरेषु सामानाधिकरण्यादिना उपमेयस्योपमानाभिन्नतया प्रतिपादनात् यावान् गुणोत्कर्षः अत्र तु प्रतिषेधपूर्व्वकारोपेण ततोऽप्यधिक इति सहृदयसंवेद्यं। नचापह्नुतिरेवेयं धर्म्मिधर्म्मगतत्वेन द्वयोर्विभिन्नविषयत्वात्, रूपके ह्यस्मिन् प्रस्तुतस्य धर्म्मिणः प्रतिषेधेन धर्म्म्यन्तरारोपः, अपह्नुत्यान्तु प्रस्तुतस्य धर्म्मप्रतिषेधेन धर्म्मान्तरारोप इति। विभागश्चायमुदाहरणदर्शनादवसीयते, तथाहि रूपकेऽस्मिन् नैतन्मुखमिदं पद्ममित्यादौ मुखादेर्धर्म्मिणः प्रतिषेधेन धर्म्म्यन्तरस्य पद्मादेरारोपः, न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामितीत्यपह्नुत्युदाहरणे स्मरस्य धर्म्मिणः पञ्चवाणताधर्म्मं प्रतिषिध्य सहस्रवाणतारूपधर्म्मान्तरारोप इति बहवः। अन्ये तु सादृश्यप्रतीतिपूर्व्वकारोपो रूपकम्, अपह्नुतिस्तु न तथा, प्रकृते प्रतिषेधेऽपि सादृश्यप्रतीतिरस्त्येवेत्याहुः। नव्यास्तूभयत्राप्यपह्नुतिमेव वदन्ति सत्यपह्नवे रूपकायोगात्, अतएव दर्पणकृता, रूपकं रूपितारोपोविषये निरपह्नवे इति निरपह्नवेति विषयविशेषणमुपन्यस्तम् ॥ ८४ ॥ ८५ ॥

न पर्य्यन्तोविकल्पानां रूपकोपमयोरतः।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ ८६ ॥

॥ इति रूपकचक्रम् ॥

रूपकमुपसंहरति। न पर्य्यन्त इति। विकल्पाः किञ्चिद्वैचित्रमालक्ष्य भेदकल्पनाः तेषां पर्य्यन्तः शेषसीमा। अनुक्तमिति तथा हि परम्परितमपि रूपकभेद एव यथोक्तं प्रकाशकृता, नियतारोपणोपायः स्यादारोपः परस्य यः। तत् परम्परितं श्लिष्टे वाचके भेदभाजि वेति। श्लिष्टवाचके यथा "विद्वन्मानसहंसवैरिकमलासङ्कोचदीप्तद्युत" इत्यादि, भेदभाजि यथा "आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः" इत्यादि। इदञ्चाधिकारूढवैशिष्ट्यमपि। यथा, "इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधर" इत्यादि। क्वचिद्वैयधिकरण्येऽपि यथा, विदधे मधुपश्रेणीमिह भ्रूलतया विधिरिति। क्वचिद्वैधर्म्म्येऽपि, यथा, सौजन्याम्बुमरुस्थली, सुचरितालेख्यद्युभित्ति, र्गुणज्योत्स्नाकृष्णचतुर्द्दशी, सरलतायोगश्वपुच्छच्छटा। यैरेषापि दुराशया कलियुगे राजावली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलमित्यादि। एवमन्येऽपि भेदा नवीनैरुद्भाविता ज्ञातव्याः। स्मितेनोपायनं दूरादागतस्य कृतं मम। स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्त्वयेत्यादौ नवीनैरङ्गीकृतः परिणामस्तु न रूपकेभ्यन्तर्भवितुमर्हति गौणलक्षणामूलकत्वाभावात् रूपकस्य च तन्मूलकत्वस्य प्रतिपादितत्वात् तस्मादतिरिक्त एवायमलङ्कारः वैचित्रविशेषस्य स्फुटं प्रतीयमानत्वादित्यवधेयम्॥ ९६॥

जातिक्रियागुणद्रव्यवाचिनैकत्र वर्त्तिना।
सर्व्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा॥ ९७॥

अथ दीपकं लक्षयति। जातीति। एकत्र वर्त्तिना प्रबन्धघटके कस्मिंश्चिदेकस्मिन् आदौ मध्येऽन्ते वा वाक्ये स्थितेन जातिक्रियागुणद्रव्यवाचिना जात्याद्यन्यतमवाचकेन पदेन यदि सर्व्ववाक्योपकारः स्वार्थद्वारा वाक्यान्तरार्थान्वयस्योपपत्तिर्भवति, तदा तद्दीपकम्, एकान्तःपातिनोऽपि दीपवद्वाक्यान्तरोद्दीपकत्वाद्दीपकाख्यमलङ्कारमाहुरित्यन्वयः। दीपो यथा एकदेशस्थितोऽपि देशान्तरीयपदार्थान् दीपयति तथैकवाक्यगतमपि जात्याद्यन्यतमवाचकपदं काकाचिन्यायेनानुषङ्गेण तदादिसर्व्वनाम्ना चकारादिना वा वाक्यान्तरे परामृष्टं सत् स्वार्थद्वारा तदर्थान्वयं सम्पादयतीति। इत्यस्यैकवाक्योपात्तपदप्रतिपाद्यस्य जात्याद्यन्यतमस्य तत्रैव जनितान्वयतया निराकाङ्क्षस्यापि पुनरनुषङ्गादिना वाक्यान्तरार्थान्वितत्वं दीपकमिति निर्गलितोऽर्थः, अतएवास्यार्थालङ्कारत्वं यथा श्रुतान्वये शब्दालङ्कारता स्यादिति बोध्यं। प्रस्तुताप्रस्तुतयोरेकधर्म्मसम्बन्धरूपमपरैरङ्गीकृतं दीपकमप्यनेकवाक्यगतत्वे निरुक्तदीपकलक्षणलक्षितमेव यथा, "किवणाणं धणं णाआणं फणमणी केसराइं सीहाणं। कुलवालिआणं त्थणआ कुतो घेप्पन्ति अमिआणं" इत्यादौ। एकवाक्यगतत्वे तु भिन्नप्रकारमेव तदिति बोध्यम्। एवमुपमारूपकयोः साधारणधर्म्मस्योभयान्वयित्वेऽप्यनुषङ्गादिपरामृष्टपदोपस्थाप्यत्वाभावान्नातिव्याप्तिः। सर्व्ववाक्योपकार इति जात्यादिपदं यस्य वाक्यस्यान्तर्गतं यत्र च परामृष्टं तयोर्द्वयोर्वाक्ययोरुपकार इत्यर्थः।

एतेन चैकस्मिन् वाक्येऽस्य न सद्भाव इति सूचितम् ॥ ९७ ॥

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम्।
स एवावनताङ्गीनां मानभङ्गाय कल्पते ॥ ९८ ॥

एवं जात्यादिगतत्वेन चतुर्विधेऽस्मिन् प्रथमं जातिगतमुदाहरति। पवन इति। जीर्णमित्यनेन पवनस्य मान्द्यं सूचितम्। अत्र पूर्ववाक्योपात्तस्य पवनस्योत्तरवाक्ये स एवेति तच्छब्देन परामर्शः, तेनैव च तदर्थान्वयनिर्वाहः। पवनशब्दस्य बहुव्यक्तिवाचकत्वाज्जातिवाचक इति जातिदीपकमिदम् ॥ ९८ ॥

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥ ९९ ॥

क्रियादीपकमुदाहरति। चरन्तीति। [illegible]दिक्करिणः। चक्रवालाद्रिर्लोकालोकाचलः। कुन्दभासः शुक्लाः, गुणा यशांसि। तव यशांसि ब्रह्माण्डव्यापकानीत्यर्थः। अत्र चकारेण परामृष्टायाः पूर्ववाक्यगतचरन्तीतिक्रियाया उत्तरवाक्यगतेन गुणा इत्यनेनाप्यन्वय इति क्रियादीपकमिदम् ॥ ९९ ॥

श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥ १०० ॥

गुणदीपकमुदाहरति । श्यामला इति । प्रावृषेण्याभिः प्रावृड्भवाभिः । प्रावृष एन्य इत्येन्यप्रत्ययः । नवशाद्वलराजिभिः नवतृणहरितीकृतप्रदेशैः । अत्रापि भुवश्चेति चकारेण पूर्व्ववाक्यगतस्य श्यामला इति गुणवाचकपदस्य परामर्श इति गुणदीपकमिदम् ॥ १०० ॥

विष्णुना विक्रमस्थेन दानवानां विभूतयः ।
क्वापि नीताः, कुतोऽप्यासन्नानीता दैवतर्द्धयः ॥ १०१ ॥

द्रव्यदीपकमुदाहरति । विष्णुनेति, विक्रमस्थेन पादविक्षेपं कुर्व्वता, दानवानां बलिप्रभृतीनां । दैवतर्द्धय इन्द्रादीनां श्रियः कुतोऽप्यानीता आसन्नित्यन्वयः । अत्र विष्णोरेकत्वाद्विष्णुनेति द्रव्यपदं तस्य चोत्तरवाक्ये काकाचिन्यायादनुषङ्गाद्वा परामर्श इति द्रव्यदीपकमिदम् ॥ १०१ ॥

इत्यादिदीपकान्युक्तान्येवं मध्यान्तयोरपि ।
वाक्ययोर्दर्शयिष्यामः कानिचित्तानि तद्यथा ॥ १०२ ॥

एवं जात्यादिचतुष्टयगतत्वेन चतुर्विधस्यास्य पुनरपि जात्यादिपदानामादिमध्यान्तवाक्यगतत्वात् त्रैविध्यं दर्शयन्नाह । इत्यादीति । इत्येषु चतुर्षु पूर्व्वश्लोकेषु आदिदीपकान्युक्तानि परामृश्यमानजात्यादिपदानामादिवाक्यनिवेशितत्वात् । एवमित्यादि एवम्, आदिवाक्य इव मध्यान्तयोरपि वाक्ययोर्दीपकानि कानिचिद्दर्शयिष्यामः, कानिचिदिति ग्रन्थबाहुल्य-

भिया न तु सर्व्वाणीत्यर्थः। तद्यथेति तानि यथेत्यर्थः, तत् केषाञ्चिद्दर्शनं यथेति वा ॥ १०२ ॥

नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः।
बध्नन्ति च पयोदेषु दृशोर्हर्षाश्रुगर्भ्भिणीः॥ १०३॥

नृत्यन्तीति। निचुलः स्थलवेतसद्रुमः तस्योत्सङ्गे तलप्रदेशे। गायन्ति केकाध्वनिं कुर्व्वन्ति। हर्षाश्रुगर्भ्भिणीरानन्दाश्रुपूर्णाः। अत्र कलापिन इति जातिपदं चकारेण वाक्यान्तरेऽपि परामृष्टं, तच्च मध्यवाक्यगतमिति जातिगतं मध्यदीपकमिदम् ॥ १०३ ॥

मन्दोगन्धवहः क्षारो, वह्निरिन्दुश्च जायते।
चर्च्चाचन्दनपातश्च शस्त्रपातः प्रवासिनाम्॥ १०४॥

मन्द इति। क्षारः क्षारवत्मोहकारी क्लेशकर इत्यर्थः। चर्च्चा मङ्गलवस्तूनां विक्षेपः तद्रूपश्चन्दनसम्पातः। अत्र जायत इति मध्यवाक्यगतया क्रियया सर्व्ववाक्यदीपनमिति क्रियागतं मध्यदीपकमिदं, किञ्चात्र रूपकमपि, तदनयोः सङ्करः। एवं श्लोकद्वयेन जातिगतं क्रियागतञ्च मध्यदीपकमुदाहृतं, गुणद्रव्यगतन्तु मध्यदीपकं स्वयमूहनीयम्। क्रमेण यथा, "तडिद्भिर्वारिवाहानां योगः, स्त्रीभिः प्रवासिनाम्। लताभिः पादपानाञ्च समायाते घनागमे" इति। अत्र योगः संयोगः स च गुणः, मध्यवाक्यगतेन च तेन सर्व्ववाक्यदीपनाद्गुणगतं

मध्यदीपकमिदम् । "मुहुर्विश्वं संसृजति बिभर्त्ति च मुहुर्हरिः । मुहुश्च नाशं नयति बालक्रीडनकौतुकी" इति । अत्र हरिर्द्रव्यं तच्च मध्यवाक्यगतमिति द्रव्यगतं मध्यदीपकम् ॥ १०४ ॥

जलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम् ।
चलञ्च तडितां दाम, बलं कुसुमधन्वनः ॥ १०५ ॥

अन्तदीपकमुदाहरति । जलमिति । बलं सैन्यं तच्च जातिवाचकमन्तवाक्यगतञ्च सत् वाक्यत्रयेऽपि विधेयमिति जातिगतमन्तदीपकमिदम् ॥ १०५ ॥

त्वया नीलोत्पलं कर्णे, स्मरेणास्त्रं शरासने ।
मयापि मरणे चेत,स्तयमेतत् समं कृतम् ॥ १०६ ॥

क्रियागतमन्तदीपकमुदाहरति । त्वयेति । मानिनीं प्रत्युक्तिरियम् । अत्र कृतमित्यन्तवाक्यगतं क्रियापदं वाक्यत्रयेऽप्यन्वितमिति क्रियागतमन्तदीपकमिदम् । एवं गुणद्रव्यगतं स्वयमूहनीयं, क्रमेण यथा, "इदमुज्जृम्भते बिम्बं भानोस्तापयितुं जगत् । ममैव हृदयं चण्डि मुखञ्च तव लोहितम्" ॥ अत्रान्तवाक्यगतं लोहितमिति गुणपदं वाक्यद्वयं दीपयति । "सत्यं विश्वं सन्तपति सत्यं कर्षति वै रसान् । तमांसि तु निहन्तीति प्रार्थनीयोदयो रविः" ॥ अत्र रविरिति द्रव्यपदं सर्व्वाणि वाक्यानि दीपयति ॥ १०६ ॥

शुक्लः श्वेतार्च्चिषोवृद्ध्यै पक्षः, पञ्चशरस्य सः ।
सच रागस्य, रागोऽपि यूनां रत्युत्सवश्रियः ॥ १०७ ॥
इत्यादिदीपकत्वेऽपि पूर्व्वपूर्व्वव्यपेक्षिणी ।
वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम् ॥ १०८ ॥

इत्थं जात्यादिचतुष्टयस्यादिमध्यान्तवाक्यगतत्वेन द्वादशविधं दीपकं प्रदर्श्य तत्रैव किञ्चित्किञ्चिद्वैचित्र्योद्भावनेन प्रभेदान्तराणि दर्शयन् सम्प्रति मालादीपकं दर्शयति । शुक्ल इति । शुक्लः पक्षः श्वेतार्च्चिषश्चन्द्रस्य वृद्ध्यै भवति, स शुक्लः पक्षः पञ्चशरस्य, सच पञ्चशरो यूनां रागस्य, स रागोऽपि तेषां रत्युत्सवश्रिय इत्यन्वयः । सर्व्वत्र वृद्ध्यै इत्यस्यानुषङ्गः । इत्यादिदीपकत्वेऽपि वृद्ध्यै इत्यस्यानुषज्यमानपदस्यादिवाक्योपात्तत्वादादिदीपकत्वसद्भावेऽपि पूर्व्वपूर्व्वव्यपेक्षिणी स्वोपकारकत्वेन पूर्व्वं पूर्व्वमपेक्षमाणा वाक्यमाला उत्तरोत्तरवाक्यसमूहः प्रयुक्ता इत्यतो वैचित्र्यादिदं मालादीपकं मतमित्यन्वयः, इत्थञ्च पूर्व्वपूर्व्वसापेक्षोत्तरोत्तरवाक्येषु जात्याद्यन्यतमपदानुषङ्गो मालादीपकमिति लक्षणम् । तादृशानुषज्यमानपदञ्च सापेक्षवाक्यैकतमनिष्ठमेवेति न नियमः वाक्यान्तरगतेनाप्येतत्सम्भवात् । अतएव प्रकाशकृता, संग्रामाङ्गनमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत् समासादितम् । कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्त्तिरतुला कीर्त्त्या च लोकत्रयम्, इत्यत्रासादितेति क्रि-

यापदस्य निरपेक्षवाक्यगतत्वेऽपि मालादीपकमङ्गीकृतम्॥
॥१०७॥१०८॥

अवलेपमनङ्गस्य वर्द्धयन्ति वलाहकाः।
कर्शयन्ति तु घर्म्मस्य मारुतोद्धूतशीकराः॥ १०९॥
अवलेपपदेनात्र वलाहकपदेन च।
क्रिये विरुद्धे संयुक्ते, तद्विरुद्धार्थदीपकम्॥ ११०॥

विरुद्धार्थदीपकमाह। अवलेपमिति। कर्शयन्ति कृशं कुर्व्वन्ति, घर्म्मस्य ग्रीष्मस्य, मारुतोद्धूतशीकरा इत्युभयत्र हेतुः॥
॥ १०९॥

अवलेपेति। अवलेपपदेन वलाहकपदेन चेति वर्द्धनाकर्शनाक्रिययोः कर्म्मभूतेन कर्त्तृभूतेन चेत्यर्थः। क्रिये वर्द्धनाकर्शनारूपे, विरुद्धे इति अत्रापिर्बोध्यः, विरुद्धे अपि असमानाधिकरणे अपीत्यर्थः, संयुक्ते सामानाधिकरण्यं प्रापिते। अत्रायमर्थः, निरुक्तक्रियाद्वयफलभूतौ वृद्धिह्रासौ विरुद्धावपि एकस्मिन् कर्म्मण्यवलेपे वर्त्तमानौ वर्णितौ। एवं तत्फलकक्रियाद्वयस्यैकस्मिन् कर्त्तरि वलाहके वर्णितमिति। सम्बन्धिभेदाच्चावलेपस्य विरोधप्रशमनम्। विरुद्धक्रिययोश्चानयोरेकस्मिन् कर्म्मणि कर्त्तरि च सम्बन्धेन वैचित्र्यविशेषोपलम्भाद्विरुद्धार्थदीपकमिदम्। इदञ्चादिदीपकम् आदिवाक्यगतयोः कर्म्मकर्त्तृपदयोरवलेपवलाहकयोरुत्तरवाक्येऽनुषङ्गात्। तदपि चाव-

लेपस्य गुणवाचकत्वाद्गुणगतं, बलाहकस्य जातिवाचकत्वा-ज्जातिगतश्च तदनयोः सङ्करोऽयम् ॥ ११० ॥

हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।
आदत्ते चाद्य मे प्राणानसौ जलधरावली ॥ १११ ॥
अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते ।
यतो जलधरावल्या तस्मादेकार्थदीपकम् ॥ ११२ ॥

एकार्थदीपकमाह । हरत्याभोगमिति । आशानां दिशा-माभोगं विस्तारं । ज्योतिषां गणं ग्रहनक्षत्रसमूहम् ॥ १११ ॥

अनेकेति । अनेकशब्दोपादानात् उपात्तैर्हरतिगृह्णात्या-दत्त इति त्रिभिः पदैरुपस्थाप्येत्यर्थः, वस्तुतस्तु अनेकशब्दो-पादानेति प्रथमान्त एव पाठः सम्यक्, अनेकैः शब्दैरुपादान-मुपस्थापनं यस्याः सेत्यर्थः । एकैव अर्थतोऽभिन्नैव क्रिया जलधरावल्या अन्तवाक्यगतेन जलधरावलीतिकर्त्रा पदेन यतो-दीप्यते निर्व्यूढान्वयः क्रियते, तस्मात् अनेकपदप्रतिपाद्यस्या-प्येकार्थस्य दीपनादेकार्थदीपकमिदम् । अनेकक्रियाणामेक-कारकत्वरूपं नव्यैरङ्गीकृतं दीपकन्त्वितो भिन्नमेव, यथा दूरं समागतवति त्वयि जीवनाथे भिन्ना मनोभवशरेण तपस्विनी सा । उत्तिष्ठति स्वपिति वासगृहं त्वदीयमायाति याति हसति श्वसिति क्षणेन, इति । अत्रोत्थानादिक्रिया भिन्ना एव ॥ ११२ ॥

हृद्यगन्धवहास्तुङ्गास्तमालश्यामलत्विषः।
दिवि भ्रमन्ति जीमूता भुवि चैते मतङ्गजाः॥ ११३॥
अत्र धर्म्मैरभिन्नानामभ्राणां दन्तिनां तथा।
भ्रमणेनैव सम्बन्ध इति श्लिष्टार्थदीपकम्॥ ११४॥

श्लिष्टार्थदीपकमाह। हृद्येति। हृद्योऽनुद्धतो गन्धवहो वायुर्यत्र ते इति जीमूतविशेषणम्। हृद्यं गन्धं मदसौरभं वहन्तीति मतङ्गजविशेषणञ्च॥ ११३॥

अत्रेति। धर्म्मैरभिन्नानामभिन्नधर्म्मवताम्, अभिन्नत्वञ्च धर्म्माणामेकशब्दप्रतिपाद्यत्वं वस्तुत एकरूपत्वञ्च, तत्र हृद्यगन्धवहा इत्यत्र प्रथमम्, अन्यत्र द्वितीयं। भ्रमणेनैव सम्बन्ध इति सामान्यलक्षणमङ्गमनार्थमिदम्, भ्रमन्तीतिक्रियाया वाक्यद्वयेऽपि योजनात्। श्लिष्टार्थदीपकमिति श्लिष्टयोः श्लिष्टशब्दप्रतिपाद्यधर्म्मवतोरर्थयोर्जीमूतमतङ्गजयोः कर्त्रोर्भ्रमन्तीति क्रियया दीपनात् श्लिष्टार्थदीपकमिदं। श्लेषश्चात्र शब्दश्लेषोऽर्थश्लेषश्च बोध्यः तत्र हृद्यगन्धवहा इत्यत्र शब्दश्लेषः, अन्यत्रार्थश्लेषः॥ ११४॥

अनेनैव प्रकारेण शेषाणामपि दीपके।
विकल्पानामवगतिर्विधातव्या विचक्षणैः॥ ११५॥
इति दीपकचक्रम्।

दीपकमुपसंहरति। अनेनैवेति। प्रकारेण वैचित्र्यविशेषेण। शेषाणामुक्तावशिष्टानां विकल्पानां भेदानां जात्यादीनां द्विकादिगतत्वेन समस्तदीपकानामावलिसंपुटप्रभृतो-

नाश्नेत्यर्थः। तत्रावलिदीपकं यथा, त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च। इत्यादि, अत्रासीति क्रियया वाक्यावलिर्दीप्यते। एवमन्यदपि ज्ञेयम्॥ ११५ ॥

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च।
दीपकस्थान एवेष्टमलङ्कारत्रयं यथा॥ ११६॥

अथ दीपकनिरूपणानन्तरं तत्सजातीयमावृत्त्यलङ्कारं निरूपयति। अर्थावृत्तिरिति। अर्थः वाक्यान्तरीयपदप्रतिपाद्यः, तस्यावृत्तिर्वाक्यान्तरे तदर्थकपदान्तरश्रवणेन पुनरुपलब्धिरित्येकः। तथा पदस्य वाक्यान्तरीयस्य आवृत्तिर्वाक्यान्तरे पुनरुच्चारणमिति द्वितीयः। एवमेकत्रोभयोरर्थपदयोरावृत्तिरिति तृतीयः। इत्यलङ्कारत्रयं दीपकस्थाने सम्भव एवेष्टम्। अयमर्थः यत्र वाक्यान्तरे तत्तत्पदस्यानुपादानेऽपि वाक्यान्तरीयपदस्यानुषङ्गादिनान्वयनिर्व्वाहाद्दीपकसम्भवस्तत्रैव तदर्थकपदान्तरस्य तत्पदस्यैव वा पुनरुपादानेऽयमावृत्त्यलङ्कार इति, एतेन पदावृत्तेर्यमकादावतिप्रसङ्गः परिहृतः तत्र द्वितीयपदानुपादाने वाक्यान्तरीयपदानुषङ्गस्यायोग्यत्वेन विवक्षितान्वयानुपपत्तेः, योग्यत्वे वा निरुक्तविषयगतत्वनियमे मानाभावादतया तद्बाधकत्वादित्यवगन्तव्यं। दीपकस्थानमेवेष्टमिति पाठे तु दीपकस्य स्थानं स्थितिः सम्भवो यत्रेति समासः। भोजराजस्तु "त्रिविधाप्यावृत्तिर्दीपकस्यैव भेद"

इत्याह। यथा दीपकभेदप्रस्तावे, "अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरावली। संपुटं रसना माला चक्रवालश्च तद्भिदा" इति। एतन्मते वाक्यान्तरीयपदपदार्थयोर्वाक्यान्तरेऽनुषङ्गादिना वा साक्षात्पुनःप्रयोगेण वाऽवगमो दीपकमिति। अत्रावृत्तिरर्थपदयोः पुनरावर्त्तनमित्यावृत्तिपदस्य योगार्थ एव लक्षणमवगन्तव्यम् ॥ ११६ ॥

विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः।
उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च ॥ ११७ ॥

क्रमेणावृत्तित्रयमुदाहरति। विकसन्तीति। कदम्बानि कदम्बमुकुलानि एवमन्यत्र। कन्दल्यो गुल्मभेदाः, कन्दलीशब्दस्य हरीतक्यादिपाठात् प्रसवेऽपि स्त्रीत्वं। ककुभान्यर्ज्जुनवृक्षमुकुलानि। प्रावृषीत्यधिकरणमत्र बोध्यम्। अत्र विकसन्तीत्यादिक्रियाचतुष्टयं विभिन्नस्वरूपमप्येकार्थमेवेत्यर्थस्यैवावर्त्तनादर्थावृत्तिरियम् ॥ ११७ ॥

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम्।
यूनाञ्चोत्कण्ठयत्येष मानसं मकरध्वजः ॥ ११८ ॥

उत्कण्ठयतीति। कलापिनां वृन्दमुत्कण्ठयति स्वदिदृक्षया उद्ग्रीवं करोति। यूनां मानसमुत्कण्ठयति मेघस्योद्दीपकत्वादुत्सुकं करोति। अत्र पदमात्रस्यैवावृत्तिर्न त्वर्थस्य, द्वयोर्विभिन्नार्थकत्वात् ॥ ११८ ॥

जित्वा विश्वं भवानत्र विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥ ११९ ॥

जित्वेति । अवरोधनैरन्तःपुरिकाभिः । दिवं गत इति युद्धमरणादिति भावः । अत्र विहरतीति पदस्य तदर्थस्य चोत्तरवाक्ये आवृत्तिः, वाक्यद्वयेऽपि द्वयोरेकार्थत्वादित्युभयावृत्तिः, नच तथात्वे कथितपदत्वदोषापात इति वाच्यं तस्योद्देश्यप्रतिनिर्द्देश्यव्यतिरिक्तविषयत्वात्, उद्देश्यप्रतिनिर्द्देश्यतायान्तु प्रत्युतैकशब्दप्रयोगस्यैव युक्तत्वात् । यथा उदेति सविता ताम्रस्ताम्र एवास्तमेति चेत्यादि । उद्देश्यप्रतिनिर्द्देश्यत्वञ्च, एकोद्देशेन विधेयस्य उद्देश्यान्तरेऽपि विधेयत्वम्, एकविधेयसमुद्दिष्टस्य विधेयान्तरेऽप्युद्देश्यत्वं, एकविधेयसमुद्दिष्टस्य उद्देश्यान्तरे विधेयत्वमिति त्रिविधम्, प्रकृते च राजोद्देशेन विधेयस्य विहरणस्य रिपुवर्गोद्देशेनापि विधेयत्वमित्युद्देश्यप्रतिनिर्द्देश्यत्वमिति युज्यत एवैकशब्दप्रयोगः ॥ ११९ ॥

इत्यावृत्तिगणः ।

प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ।
अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता ॥ १२० ॥

अथाक्षेपं लक्षयति । प्रतिषेधोक्तिरिति । प्रतिषेधस्य उक्तिरुक्तिमात्रं नतु वस्तुतः प्रतिषेधः तात्त्विकप्रतिषेधस्य वैचित्र्याजनकत्वेनालङ्कारत्वाभावात्, प्रतिषेधाभास आक्षेप इत्यर्थः,

प्रतिषेधोक्तिश्च विशेषविवक्षानिबन्धनेति बोध्यं तत एव हि वैचित्र्यातिशयः, प्रतिषेधस्य इष्टार्थस्यैव अनिष्टप्रतिषेधे वैचित्र्याभावात्, सर्व्वञ्चैतदुक्तमाग्नेये। यथा, प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया। तमाक्षेपं ब्रुवन्तीति। उक्तिरिति प्रतिपादनमित्यर्थः, नतु वाचकशब्देनाभिधानं, व्यञ्जनादिनापि प्रतिषेधप्रतीतेराक्षेपत्वाभ्युपगमात्। अन्याध्यवसानाभावान्नास्यापह्नुतावतिप्रसङ्गः। स चाक्षेपस्त्रैकाल्यापेक्षया प्रतिषिध्यमानत्रैकालिकवस्तुगतत्वेन वृत्तवर्त्तमानवर्त्तिष्यमाणवस्तूनां प्रतिषेधप्रतियोगित्वेनेत्यर्थः, प्रथमं त्रिधा भवति। नव्यास्तु प्रतिषेधकर्त्तुः स्वोक्तस्ववक्ष्यमाणयोरेव प्रतिषेधोक्तिराक्षेपो न वस्तुसामान्यस्येत्याहुः। त्रैविध्यञ्चैतत् स्थूलभेददृष्ट्या, वस्तुतस्तस्यासङ्ख्येयत्वमेवेत्याह। अथेति, आक्षेप्याः प्रतिषेध्यास्तेषां भेदा धर्म्मधर्म्मिकार्य्यकारणादयस्तेषामानन्त्यादनन्तप्रतियोगिकस्याप्याक्षेपस्य पुनरनन्तता असङ्ख्येयत्वमित्यन्वयः॥ १२०॥

अनङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः।
इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः॥ १२१॥
इत्यनङ्गजयायोगबुद्धिर्हेतुबलादिह।
प्रवृत्तैव यदाक्षिप्ता वृत्ताक्षेपः स ईदृशः॥ १२२॥

क्रमेण त्रिविधमाक्षेपमुदाहरति। अनङ्ग इति। पुष्पैररविन्दादिभिः, यदुक्तम्, 'अरविन्दमशोकञ्च चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः' इति। अस-

म्भाव्यमिति अनुपपत्त्या अविश्वसनीयमित्यर्थः, तथाहि विजेता तावदङ्गरहितः, वाणाश्च पञ्चैव, ते च पुष्पाणि न लायसाः, विजेतव्यञ्च विश्वं ब्रह्मेन्द्रादिधीरवीरपूर्णं समस्तं जगदिति सर्व्वथा विजयोऽश्रद्धेय इत्यनुपपत्तिस्थिरीकृतं विजयासम्भाव्यत्वं प्रतिषेधति, अथवेति, वस्तूनां शक्तयः कार्य्यसम्पादनयोग्यताः विचित्रा दुर्बोधाः, अन्वयव्यतिरेकादिना तर्कयितुमशक्या इत्यर्थः। तस्मात् सम्भवत्येवानङ्गस्य पुष्पवाणकरणकविश्वविजय इत्यसम्भाव्यत्वबुद्धेः प्रतिषेधः॥ १२१ ॥

अत्र वृत्ताक्षेपं सङ्गमयति। इत्यनङ्गेति। प्रवृत्तैव दुर्व्वारयानुपपत्त्या पूर्व्वमुत्पन्नैव, अनङ्गजयस्यायोगोऽसम्भाव्यत्वं तस्य बुद्धिः, हेतुबलात् वस्तुशक्तीनां विचित्रत्वरूपकारणमहिम्ना इह यदाक्षिप्ता प्रतिषिद्धा स ईदृशो वृत्ताक्षेप इत्यन्वयः। अत्र वाचकशब्दाप्रयोगात् प्रतिषेधो व्यङ्ग्य एव, विशेषश्चात्र जनमात्रस्य कामपरतन्त्रता, तत्प्रतिपादनेच्छयैव वाक्यस्यास्य प्रयोगात्, एवमन्यत्रापि बोध्यम्॥ १२२ ॥

कुतः कुवलयं कर्णे करोषि कलभाषिणि!।
किमपाङ्गमपर्य्याप्तमस्मिन् कर्म्मणि मन्यसे॥ १२३॥
स वर्त्तमानाक्षेपोऽयं कुर्व्वत्येवासितोत्पलम्।
कर्णे काचित् प्रियेणैवं चाटुकारेण रुध्यते॥ १२४॥

कुत इति। कुवलयं नीलोत्पलं, करोषि धारयसि, अपर्य्याप्तमसमर्थम्, अस्मिन् कर्म्मणि कर्णशोभासम्पादने। अत्र

कर्ण्णं कुवलयकरणस्य कुत इत्यनेन कैमर्थ्येन प्रतिषेधः न कुर्व्वि-त्यर्थः ॥ १२१ ॥

स इति। सोऽयं वर्त्तमानाक्षेपः, यतोऽसितोत्पलं कर्ण्णं कुर्व्वत्येव काचित्, एवं कुत इत्यादिवाक्येन, प्रियेण रुध्यते प्रतिषिध्यते, इति हेतुहेतुमद्भावेनान्वयः। अत्र कुर्व्वत्येवेत्येव-कारेण न तु कृतवती न वा करिष्यन्तीति प्रतिषेधस्य करण-समानकालीनताप्रत्यायनया वर्त्तमानप्रतियोगिकत्वं सूचितं। विशेषश्चात्र अपाङ्गकुवलययोरतिसाम्यप्रतिपादनेन नायिका-सन्तोषणम् ॥ १२४ ॥

सत्यं ब्रवीमि, न त्वं मां द्रष्टुं वल्लभ! लप्स्यसे।
अन्यचुम्बनसंक्रान्तलाक्षारक्तेन चक्षुषा॥ १२५॥
सोऽयं भविष्यदाक्षेपः, प्रागेवातिमनस्विनी।
कदाचिदपराधोऽस्य भावीत्येवमरुन्ध यत्॥ १२६ ॥

सत्यमिति। द्रष्टुमिति, शकादिभिर्युक्ताद्क्रियार्थार्थाच्चेति तुमङ्। दर्शनमित्यर्थः, मां द्रष्टुं न लप्स्यसे न द्रक्ष्यसीत्यर्थः, तत् कुत इति चक्षुर्विशिनष्टि, अन्येति, अन्यस्याश्चुम्बनेन सङ्क्रा-न्ता तदधरतः सङ्क्रमिष्यन्ती या लाक्षा तयेव रक्तेन लोहि-तीभविष्यता अथचानुरक्तीभविष्यता। अत्र लप्स्यस इति प्रधा-नक्रियाया भविष्यत्कालबोधकत्वात् सङ्क्रान्तेति रक्तेतिक्रान्त-क्रियाद्वयस्यापि भविष्यत्कालबोधकत्वमेवाप्रधानत्वात्, तदुक्तं जुमरनन्दिना, कृदादिभिस्तिङा वा विहितं कर्त्तृत्वाद्युक्तत्वादि

च कालविशेषस्य परस्परमाप्याकाङ्क्षाविरोधेन प्रधानत्वाच्चिङ्गा बाध्यत इति ॥ १२५ ॥

सोऽयमिति। अतिमनस्विनी सुप्रशस्तमनस्का सुनिपुणेत्यर्थः। अपराधो नायिकान्तरानुरागरूपः, अस्य प्रतिषिषेध, अत्र सत्यं ब्रवीमीत्यादिना भङ्ग्या नायकस्य वर्त्तिष्यमाणनायिकान्तरानुरागस्य प्रतिषेधात् वर्त्तिष्यमाणाक्षेपोऽयं। विशेषश्चात्र नायकस्य चिरं स्ववशे स्थापनम् ॥ १२६ ॥

तव तन्वङ्गि ! मिथ्यैव रूढमङ्गेषु मार्द्दवम्।
यदि सत्यं मृदून्येव, किमकाण्डे रुजन्ति माम् ॥ १२७॥
धर्म्माक्षेपोऽयमाक्षिप्तमङ्गनागात्रमार्द्दवम्।
कामुकेन यदत्रैवं कर्म्मणा तद्विरोधिना ॥ १२८ ॥

इत्थमाक्षेपस्य स्थूलभेदत्रयं दर्शयित्वा, आक्षेप्यभेदानन्त्यादनन्ततेत्यनेन तत्प्रभेदानामशक्यनिरूपणत्वमुक्त्वापि शिक्षार्थं किञ्चित्तत्प्रकारोपदेशार्थं कतिचिद्भेदान् दर्शयति। तवेति। मृदून्येवेत्यत्र अङ्गानीति विशेष्यम्। अकाण्डे निष्कारणं रुजन्ति तापयन्ति। मृदूनां तापकत्वासम्भवान्न तात्त्विकमेषां मार्द्दवमिति प्रतिषेधः ॥ १२७ ॥

धर्म्माक्षेपोऽयमिति। तद्विरोधिना मार्द्दवविरुद्धेन। कर्म्मणा तापदानक्रियया ॥ १२८ ॥

सुन्दरी सा नवेत्येष विवेकः केन जायते।
प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥ १२९ ॥

धर्म्म्याक्षेपोऽयमाक्षिप्तो धर्म्मी, धर्म्मं प्रभाकयम्।
अनुज्ञायैव यद्रूपमत्याश्चर्य्यं विवक्षता ॥ १३० ॥

धर्म्म्याक्षेपमाह। सुन्दरीति। अत्र अत्रेति विद्यत इति चाध्याहार्य्यं। सुन्दरीत्यस्य नायिकेत्यर्थः नतु सौन्दर्य्यवतीति तथात्वे सौन्दर्य्यधर्म्मस्यैव प्रतिषेधेन धर्म्माक्षेप एव स्यात्। ततश्चैवमन्वयः, अत्र सा सुन्दरी नायिका विद्यते न वा इत्येषः, संशय एवेति शेषः। विवेकः नायिका विद्यत इति निश्चयः पुनः केन कथं जायते। वस्तुतस्तु 'सा सुन्दरीयमित्येष' इत्येव पाठो लिपिकरप्रमादादन्यथा जातः सङ्गतत्वात्। यथाश्रुते संशयप्रदर्शना निष्प्रयोजना अन्वयश्च न सम्यक् सङ्गच्छत इति बोध्यम्। ननु प्रत्यक्षविषयं कथमपलपसीत्यत्राह। प्रभामात्रमिति, हि यतस्तरलं चञ्चलं समन्तात् प्रसरदित्यर्थः प्रभामात्रं दृश्यते नतु तस्याः प्रभाया आश्रयोऽधिकरणं नायिकेति, नहि प्रभामात्रस्य प्रत्यक्षेण तदाश्रयनायिकासद्भावः शक्यते ज्ञातुं, प्रभायाः प्रतिनियताश्रयत्वाभावात् तस्मान्नायिकानिश्चयोदुरुपपाद इति प्रभारूपधर्म्मं संस्थाप्यैव तद्धर्म्मिभूताया नायिकाया एव प्रतिषेधाद्धर्म्म्याक्षेपः ॥ १२८ ॥

अत्र धर्म्मिणः प्रतिषेधं सङ्गमयति। धर्म्म्याक्षेपोऽयमिति। अत्याश्चर्य्यं रूपं प्रभाधिक्यवर्णनेन नायिकायाः सौन्दर्य्यातिशयं विवक्षता प्रतिपिपादयिषता चाटुकारेण प्रभाकयं धर्म्ममनुज्ञायैव अनुमन्यैव अप्रतिषिध्यैवेत्यर्थः यद्यस्माद्धर्म्मी नायिकारूप आक्षिप्तस्तस्माद्धर्म्म्याक्षेपोऽयमित्यन्वयः ॥ १३० ॥

चक्षुषी तव रज्येते, स्फुरत्यधरपल्लवः।
भ्रुवौ च भुग्नौ, न तथाप्यदुष्टस्यास्ति मे भयम्॥ १३१॥
स एष कारणाक्षेपः प्रधानं कारणं भियः।
स्वापराधो निषिद्धोऽत्र यत् प्रियेण पटीयसा॥ १३२॥

कारणाक्षेपमाह। चक्षुषी इति। रज्यते स्वयं रक्ते भवतः। अदुष्टस्य नायिकान्तरानुरागादिरूपदोषाभाववतः। प्रधानमिति, साक्षाज्जनकत्वान्मुख्यमित्यर्थः तादृशजनकत्वञ्च स्वापराधस्यैव, चक्षूरागादीनान्तु कोपव्यञ्जकानामपराधोद्भावनद्वारा परम्परया, एतेन प्रधानकारणाभाव एव कारणाक्षेपस्य विषयः अप्रधानकारणाभावस्तु वक्ष्यमाणविभावनाया इति सूचितम्। अन्यथा द्वयोरपि समानविषयत्वेन भेदव्यवस्थायामनन्यः प्रयासोभवेदिति बोध्यं। किञ्चात्र न भयमस्तीत्यनेन भयरूपकार्य्यप्रतिषेधात् कार्य्याक्षेपोऽपीति द्वयोः सङ्करोऽयं। शुद्धोदाहरणन्तु। अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः। किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्, इति। अत्रोत्तरार्द्धव्यङ्ग्यस्य वशीभूतपतिकत्वरूपकार्य्यस्य वासोरुचिरत्वादिरूपकारणान्येवाक्षिप्तानि॥ ३१॥ ३२॥

दूरे प्रियतमः, सोऽयमागतो जलदागमः।
दृष्टाश्च फुल्ला निचुला, न मृता चास्मि, किं न्विदम्॥१३३॥

**कार्य्याक्षेपः स, कार्य्यस्य मरणस्य निवर्त्तनात्।**
**तत्कारणमुपन्यस्य दारुणं जलदागमम्॥ १३४॥**

कार्य्याक्षेपमाह। दूर इति। सोऽयमिति प्रत्यभिज्ञया जलदागमस्य प्रसिद्धदुःखदत्वं सूचयति। जलदागमः प्रावृट्कालः, कथमस्यागमनं ज्ञातमित्यत्राह दृष्टास्वेति, अत्र चद्वयं फुल्लनिचुलदर्शनमरणाभावयोः सामानाधिकरण्यं बोधयति, एतच्चासम्भवमित्याह किं न्विदमिति, इदं निरुक्तसामानाधिकरण्यं किं नु अत्यसम्भवमित्यर्थः॥ १३३॥

कार्य्याक्षेप इति। निवर्त्तनात् प्रतिषेधकथनात्। तत्कारणमिति। तत् विरहिमारकत्वेन प्रसिद्धमित्यर्थः, नतु तस्य कारणमित्यर्थः उपन्यस्येति क्त्वान्तक्रियाघटितस्योत्तरार्द्धस्य योजनया पूर्व्वार्द्धरूपत्वेन तदन्तर्वर्त्तिना तच्छब्देन मरणपरामर्शासम्भवात्। एतेन च प्रसिद्धकारणोपन्यासेन कार्य्याभाववर्णनेऽयं कार्य्याक्षेपः, अप्रसिद्धकारणोपन्यासेन तु विशेषोक्तिरिति द्वयोर्भेदोऽपि प्रतिपन्नः, कारणस्य प्रसिद्धत्वाप्रसिद्धत्वाभ्यां भेदस्य सुवचत्वादन्यथा तदर्थं दुरवस्था स्यादिति ध्येयम्। वस्तुतस्तु निवर्त्तनादित्यत्र निवर्त्तनमिति तदित्यत्र यदिति पाठः सम्यक्। एतत्पाठे तु विशेषोक्तितोभेदाय कारणपदस्य प्रसिद्धकारणपरत्वं वक्तव्यम्॥ १३४॥

**न चिरं मम तापाय तव यात्रा भविष्यति।**
**यदि यास्यसि यातव्यमलमाशङ्कयाऽत्र ते॥ १३५॥**

इत्यनुज्ञामुखेनैव कान्तस्याक्षिप्यते गतिः।
मरणं सूचयन्त्यैव सोऽनुज्ञाक्षेप उच्यते॥ १३६॥

अनुज्ञाक्षेपमाह। न चिरमिति। यात्रा विदेशगमनं। न चिरं तापायेति विरहवेदनया झटितिमरणसम्भवेन चिरजीवनाभावादिति भावः। अत्र यात्रायाम्। आशङ्कयेति मदीयचिरतापस्येति शेषः॥ १३५॥

इत्यनुज्ञेति। अनुज्ञामुखेनैव गमनानुमतिद्वारेणैव नतु निषेधार्थकशब्दादिना। गतिराक्षिप्यत इत्यत्र हेतुः मरणं सूचयन्त्येवेति अनिष्टस्य विधेयत्वासम्भवेन प्रतिषेधपर्य्यवसानादिति भावः। अनुज्ञाक्षेप इति नन्वाक्षेप्यभेदानन्त्यादनन्तेत्युक्तेराक्षेप्यभेदेनैव व्यपदेशो युज्यते कथमत्रानुज्ञाक्षेपेति व्यपदेश इति चेन्न आक्षेप्यभेदानां भेदकरणं प्रत्येव तत्र हेतुत्वस्योक्तत्वात्, नतु व्यपदेशं प्रति, व्यपदेशस्तु आक्षेपोत्थापकानुज्ञादिनापि भवतीति बोध्यम्। नव्यास्तु एवंविधस्थले वि[illegible]क्षेप इत्याहुः॥ १३६॥

धनञ्च बहु लभ्यं ते सुखं क्षेमञ्च वर्त्मनि।
न च मे प्राणसन्देहस्तथापि प्रिय मास्म गाः॥ १३७॥
इत्याचक्षाणया हेतून् प्रिययात्रानुबन्धिनः।
प्रभुत्वेनैव रुद्धस्तत् प्रभुत्वाक्षेप उच्यते॥ १३८॥

प्रभुत्वाक्षेपमाह। धनञ्चेति। चकारो भिन्नक्रमे सुखमित्यनन्तरं योज्यः। यद्वा सुखमनायासेनेत्यर्थः, लभ्यमिति

विदेशे इति शेषः, तथा वर्त्मनि चेमञ्च विदेशगमनवर्त्मापि निरुपद्रवमित्यर्थः। तथा मम च मे प्राणसन्देहः, तत्र धनलाभादिना त्वरितागमनसम्भावनया वा प्राणान् धारयिष्यामीत्यर्थः। तथापि धनलाभादिसद्भावेऽपि मास्म गाः देशान्तरं मा गच्छ ॥ १३७ ॥

इत्याचचाणयेति। इत्यस्मिन् श्लोके, प्रियस्य यात्रायाः अनुबन्धिनोऽनुकूलान् अवश्यकर्त्तव्यताबोधकानित्यर्थः, हेतून् धनलाभादीन् आचचाणया उपन्यस्यन्त्यापि, अत्र प्रत्याचचाणयेति पाठस्तु न सम्यक्। रुद्धो गमनान्निवारितः प्रिय इति शेषः। अत्र हेतुसद्भावादवश्यकरणीयमपि गमनं प्रभुत्वेनैवाचिप्तमित्याचेपस्य प्रभुत्वप्रयुक्तत्वात् प्रभुत्वाचेपः। न चात्र हेतूपन्यासेनावश्यकर्त्तव्यतयाभ्यनुज्ञातस्य गमनस्य प्रतिषेधे विरुद्धहेत्वन्तरानुपादानान्निर्हेतुत्वदोषापात इति वाच्यम् अनुरक्तनायिकाया नायकविदेशगमनाभ्यनुज्ञानस्य हेतुसाधितस्याप्यनभिमतत्वेन प्रस्खलद्रूपतया तत्प्रतिषेधाप्रतिबन्धकत्वात् स्वतःसिद्धायमानस्य च प्रतिषेधस्य विधानस्यानुवादरूपतया हेत्वपेचाभावाच्चेति बोध्यम् ॥ १३८ ॥

जीविताशा बलवती धनाशा दुर्ब्बला मम ।
गच्छ वा तिष्ठ वा कान्त स्वावस्था तु निवेदिता ॥१३९॥
असावनादराक्षेपो यदनादरवद्वचः ।
प्रियप्रयाणं रुन्धत्या प्रयुक्तमिह रक्तया ॥ १४० ॥

अनादराक्षेपमाह । जीविताशेति । जीविताशा बलवतीति तव सान्निध्येन चिरं जीवितुमिच्छामि, तव विदेशगमने तु मरिष्यामीतिध्वनिः । स्वावस्था त्वद्विदेशगमननिबन्धनमरणरूपा ॥ १३९ ॥

असाविति । अनादरवद्वचः गच्छ वा तिष्ठ वेत्यनास्थावद्वाक्यं । रुन्धत्या, जीविताशा बलवतीति वाक्यव्यङ्ग्यस्वमरणप्रतिपादनेन प्रतिषेधन्त्या ॥ १४० ॥

गच्छ गच्छसि चेत् कान्त, पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १४१ ॥
इत्याशीर्व्वचनाक्षेपो यदाशीर्व्वादवर्त्मना ।
स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिध्यते ॥ १४२ ॥

आशीर्व्वचनाक्षेपमाह । गच्छेति । ममापि जन्मेति तव गमनानन्तरमेव मरिष्यामि मरणानन्तरञ्चावश्यं जन्म भवेत् तच्च त्वदीयगन्तव्यदेशे भवतु तथा सति पुनस्त्वद्दर्शनं प्राप्स्यामीत्यर्थः ॥ १४१ ॥

इत्याशीर्व्वचनाक्षेप इति । आशीर्व्वादवर्त्मना आशीर्व्वादप्रकाशनद्वारा, आशीर्व्वादश्च पन्थानः सन्तु ते शिवा इत्यनेन । यद्वा आशीराशंसा सा च प्रियार्थस्य प्राप्तीच्छारूपा, तस्या वादः ममापीत्याद्युत्तरार्द्धेन प्रकाशनं, तद्द्वारेणैव स्वावस्थां भाविमरणरूपां सूचयन्त्या सत्या कान्तस्य यात्रा निषि-

ध्यत इत्याशीर्व्वचनस्य भाविस्वमरणसूचनद्वारा प्रिययात्रा-
क्षेपकत्वादाशीर्व्वचनाक्षेपोऽयम् ॥ १४२ ॥

यदि सत्यैव यात्रा ते, काप्यन्या मृग्यतां त्वया ।
अहमद्यैव रुद्धास्मि रन्ध्रापेक्षेण मृत्युना ॥ १४३ ॥
इत्येष परुषाक्षेपः परुषाक्षरपूर्व्वकम् ।
कान्तस्याक्षिप्यते यस्मात् प्रस्थानं प्रेमनिघ्नया ॥ १४४ ॥

परुषाक्षेपमाह। यदीति। काप्यन्या प्रियतमा मृग्यताम-
न्विष्यतां। ननु त्वमेवैका मे प्रियतमा, किमन्ययेत्यत्राह, अह-
मद्यैवेत्यादि, रन्ध्रापेक्षेण छिद्रानुसन्धायिना, रन्ध्रान्वेषणमृत्यु-
नेति क्वचित्पाठः। रन्ध्रञ्चात्र तव विदेशगमनरूपं द्वारं।
रुद्धास्मि आक्रान्ता भवामि ॥ १४३ ॥

इत्येष इति। परुषाक्षरपूर्व्वकं, काप्यन्या मृग्यतामिति अ-
द्यैव मृत्युना रुद्धास्मीति कठोरवाक्यप्रयोगपुरःसरं। प्रेमनि-
घ्नया प्रणयमात्रावलम्बनजीवनया ॥ १४४ ॥

गन्ता चेद्गच्छ तूर्णं, ते कर्णे यान्ति पुरा रवाः ।
आर्त्तबन्धुमुखोद्गीर्णाः प्रयाणपरिपन्थिनः ॥ १४५ ॥
साचिव्याक्षेप एवैष यदत्र प्रतिषिध्यते ।
प्रियप्रयाणं, साचिव्यं कुर्व्वत्येवानुरक्तया ॥ १४६ ॥

साचिव्याक्षेपमाह। गन्तेति। गन्ता भाविगमनवान्,
भविष्यति लुङ्। कथमियं ते मां गमयितुं त्वरेत्यत्राह कर्णा-

वित्यादि, रवाः मन्मरणबोधका वर्णाः ते कर्णौ पुरा यान्ति यास्यन्ति, पुरायोगे भविष्यति लट्। यतः प्रयाणपरिपन्थिनो यात्राप्रतिकूलाः ॥ १४५ ॥

साचिव्याक्षेप इति। साचिव्यं कुर्व्वत्येव त्वं गच्छेत्यनेन प्रयाणे स्वसहायतां दर्शयन्त्येव यत् प्रयाणं प्रतिषिध्यते स्वमरणद्योतनया निवार्य्यते अत एष साचिव्याक्षेप इत्यन्वयः ॥ ॥ १४६ ॥

गच्छेति वक्तुमिच्छामि त्वत्प्रियं, मत्प्रियैषिणी।
निर्गच्छति मुखाद्वाणी मागा इति, करोमि किम्॥१४७॥
यत्नाक्षेपः स, यत्नस्य कृतस्यानिष्टवस्तुनि।
विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात्॥ १४८ ॥

यत्नाक्षेपमाह। गच्छेतीति। त्वत्प्रियं धनलाभादिप्रयोजकत्वात्तवानुकूलं गच्छेति पदमहं वक्तुमिच्छामि, किन्तु मत्प्रियैषिणी मागा इति वाणी मम मुखान्निर्गच्छति, किं करोमीत्यन्वयः। अत्र मत्प्रियैषिणीत्यनेन तव दृष्ट एव चिरावस्थानं मम प्रियं, तत् सर्व्वथा मागच्छेति ध्वनिः ॥ १४७ ॥

यत्नाक्षेप इति। अनिष्टवस्तुनि गच्छेतिगमनविधानरूपे कृतस्य कृतस्यापीत्यर्थः, यत्नस्य विपरीतं यत् फलं मागा इति वाणीभिःसरणरूपं तस्योत्पत्तेर्हेतोरानर्थक्योपदर्शनात् गमनेऽनर्थसम्भावनासूचनात् गमनमाक्षिप्तमिति सोऽयं यत्नाक्षेप इत्यन्वयः ॥ १४८ ॥

क्षणं दर्शनविघ्नाय पक्ष्मस्पन्दाय कुप्यतः ।
प्रेम्णः प्रयाणं त्वं ब्रूहि, मया तस्येष्टमिष्यते ॥ १४९ ॥
सोऽयं परवशाक्षेपो यत् प्रेमपरतन्त्रया ।
तया निषिध्यते यात्रेत्यन्यार्थस्योपदर्शनात् ॥ १५० ॥

परवशाक्षेपमाह । क्षणमिति । प्रयाणेऽनुज्ञां प्रार्थयन्तं प्रति नायिकाया उक्तिरियं । क्षणं व्याप्य दर्शनस्य विघ्नाय प्रतिबन्धकाय । क्वचित् क्षणदर्शनेति समस्त एव पाठः । पक्ष्मस्पन्दाय कुप्यतः पक्ष्मस्पन्दमसहमानस्य प्रेम्णः प्रयाणं स्वीयविदेशयात्रां ब्रूहि निवेदय । प्रेम्ण इति कर्म्मत्वाविवक्षायां सम्बन्धविवक्षया षष्ठी । प्रेमाणमनुज्ञापयेत्यर्थः। ननु त्वामेवानुज्ञापयामि किं प्रेम्णोऽनुज्ञापनयेत्यत्राह, मयेत्यादि । यतो मया तस्य प्रेम्ण इष्टमभिमतमिष्यते अभिमन्यते, प्रेमपरवशास्मि प्रेम्णो यदभिमतं तदेव ममाभिमतं, तत्र प्रयाणं प्रेम्णोऽभिमतञ्चेत्तदनुष्ठीयतां, नाच प्रतिकूलायिष्ये परन्तु क्षणविच्छेदासहिष्णुना प्रेम्णा तन्नानुमंस्यते इति भावः ॥ १४९ ॥

सोऽयमिति । प्रेमपरतन्त्रया स्वस्य प्रेमपरवशत्वं प्रतिपादयन्त्या तया इति अनेन पूर्व्वोक्तप्रकारेण अन्यार्थस्य प्रेमानुमतिग्रहणस्य उपदर्शनादुपदेशात् यात्रा निषिध्यत इति सोऽयं परवशाक्षेप इत्यन्वयः । तस्यार्थस्यैव सूचनादिति क्वचिच्चतुर्थपादः, तत्र तस्यार्थस्यैव यात्रानिषेधस्यैव सूचनात् पक्ष्मस्पन्दाय कुप्यत इति प्रेमविशेषणेन व्यञ्जनादित्यर्थः ॥ १५० ॥

सन्निध्ये विरहं नाथ! देह्यदृश्याञ्जनं मम ।
यदक्तनेत्रां कन्दर्पः प्रहर्त्तुं मां न पश्यति ॥ १५१ ॥
दुष्करं जीवनोपायमुपन्यस्योपरुध्यते ।
पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम् ॥ १५२ ॥

उपायाक्षेपमाह । सन्निध्ये इति । अदृश्याञ्जनमदृश्यताजनकसिद्धकज्जलविशेषं । मम मह्यं । यदक्तनेत्रां येनाञ्जनेनाक्ते स्वचिते नेत्रे यस्यास्तां । पश्यति पश्येत् । तव प्रयाणोद्यमे कन्दर्पप्रहारशङ्कैव परं मां व्याकुलयति, सा यदि निवार्य्येत तर्हि विरहे का क्षतिस्ततसुखेन गम्यतामित्यर्थः ॥ १५१ ॥

दुष्करमिति । दुष्करं दुर्घटं । जीवनोपायं कामप्रहारनिवारकसिद्धाञ्जनदानरूपम् । उपरुध्यते तादृशाञ्जनदानासम्भवात् प्रतिषिध्यते ॥ १५२ ॥

प्रवृत्तैव प्रयामीति वाणी वल्लभ! ते मुखात् ।
अयतापि त्वयेदानीं मन्दप्रेम्णा ममास्ति किम् ॥ १५३ ॥
रोषाक्षेपोऽयमुद्रिक्तस्नेहनिर्यन्त्रितात्मना ।
संरब्धया प्रियारब्धं प्रयाणं यन्निषिध्यते ॥ १५४ ॥

रोषाक्षेपमाह । प्रवृत्तैवेति । अत्र एवकारेण क्तप्रत्ययेन चातिविस्मयो ध्वन्यते । ईदृशे प्रेम्णि तव मुखात् प्रयामीति वाणीनिःसरणमतिविस्मयनीयं सर्व्वथा प्रेमानुरोधस्त्वया शिथिलीकृतस्तस्मादिदानीं मन्दप्रेम्णा अयतापि गच्छतापि त्वया

किं मम प्रयोजनमस्तीत्यन्वयः। अयतेति, इगताविव्यस्य परस्मैपदिनो भौवादिकस्य रूपम्॥ १५३॥

रोषाक्षेपोऽयमिति। उद्रिक्त उद्रेकं गतो यः स्नेहः प्रेम तेन निर्यन्त्रितो विवशीकृत आत्मा मनो यस्याः सा तया तया अतएव संरब्धया अयतापीत्यादिना प्रकाशितरोषया मत्या, विशुद्धस्य प्रेम्णः स्खलितमविषह्यं हि भवतीति प्रेमभङ्गे युज्यत एव रोषः॥ १५४॥

मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्च्छिता।
बुद्धा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो भवान्॥ १५५॥
इति तत्कालसम्भूतमूर्च्छयाशिष्यते गतिः।
कान्तस्य कातराक्ष्या यन्मूर्च्छाक्षेपः स ईदृशः॥ १५६॥

मूर्च्छाक्षेपमाह। मुग्धेति। बुद्धा मूर्च्छापगमात् प्राप्तसंज्ञा, बुद्धेति क्वाान्तपाठे संज्ञां लब्ध्वा। श्लोकद्वयमिदं न बहुषु पुस्तकेषु दृश्यते, अधिकन्तु प्रविष्टमिति सङ्गतमिति चात्र गृहीतम्॥ १५५॥ १५६॥

नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम्।
त्वद्द्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम्॥ १५७॥
असावनुक्रोशाक्षेपः सानुक्रोशमिवोत्पले।
व्यावर्त्य कर्म तद्योग्यं शोच्यावस्थोपदर्शनात्॥ १५८॥

अनुक्रोशाक्षेपमाह। नाघ्रातमिति। मधुनि मद्ये। त्वद्द्विषामित्यस्य काकाक्षिन्यायात् स्त्रीभिरित्यनेन दीर्घिकास्वित्य-

नेन च सम्बन्धः। विशीर्णमिति अनुद्धृततया परिणामेन शुष्कतामुपगतमित्यर्थः, द्विषां पलायनादिति भावः ॥ १५७ ॥

असाविति। उत्पले सानुक्रोशमिव सकरुणमिव यथा स्यात्तथा तस्योत्पलस्य योग्यं कर्म्म स्त्रीजनकर्त्तृकाघ्राणादिकं व्यावर्त्त्य प्रतिषिध्य शोच्यावस्था अनुपभोगपूर्व्वकविशीर्णता तस्या उपदर्शनात् प्रकाशनात् असावनुक्रोशाक्षेप इत्यन्वयः। आक्षेपस्यानुक्रोशजनकत्वादनुक्रोशाक्षेप इत्यर्थः। वस्तुतस्तु नीलोत्पलानुक्रोशेन त्वद्विषस्तत्र न सन्तीत्याक्षेपसूचनादनुक्रोशाक्षेपः, व्यपदेशकस्य व्यपदेश्यं प्रति साक्षात्परम्परया वा हेतुतासद्भावस्यौचित्यादिति ध्येयम्, इत्यनुक्रोशनाक्षेप इति क्वचित्, क्वचिच्च सानुक्रोशोऽयमाक्षेप इति पाठः ॥ १५८ ॥

अमृतात्मनि, पद्मानां द्वेष्टरि स्निग्धतारके ।
मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥ १५९ ॥
इति मुखेन्दुराक्षिप्तो गुणान् गौणेन्दुवर्त्तिनः ।
तत्समान् दर्शयित्वेह श्लिष्टाक्षेपस्तथाविधः ॥ १६० ॥

श्लिष्टाक्षेपमाह। अमृतात्मनीति। अमृतात्मनि अमृतस्येवात्मा आह्लादकत्वस्वरूपं यस्य तस्मिन् अन्यत्रामृतमये, तथा पद्मानां द्वेष्टरि सदृशे, अन्यत्र सङ्कोचके। तथा स्निग्धे तारके चक्षुःकनीनिके यस्य तस्मिन्। अन्यत्र स्निग्धाः प्रेमास्पदानि तारका अश्विन्यादयो यस्य तस्मिन्। अस्मिन् मुखेन्दौ मुखरूपे चन्द्रे सति अपरेणेन्दुना किं स मा तिष्ठत्वित्यर्थः ॥ १५९ ॥

इतीति। तत्समान् मुखेन्दुगुणसदृशान्। सादृश्यञ्च श्लिष्टैकशब्दप्रतिपाद्यत्वं। गौणेन्दुर्गौणलक्षणयेन्दुपदप्रतिपाद्यं मुखं तद्वर्त्तिनो गुणान् अमृतात्मतादीन् दर्शयित्वा मुखेन्दुराक्षिप्तो निष्प्रयोजनत्वेन प्रतिषिद्धः। श्लिष्टाक्षेप इति श्लिष्टपदप्रतिपाद्यधर्म्मदर्शनपूर्व्वकत्वादिति भावः॥ १६०॥

अर्थो न सम्भृतः कश्चिन्न विद्या काचिदर्ज्जिता।
न तपः सञ्चितं किञ्चिद्गतञ्च सकलं वयः॥ १६१॥
असावनुशयाक्षेपो यस्मादनुशयोत्तरम्।
अर्थार्ज्जनादेर्व्यावृत्तिर्दर्शितेह गतायुषा॥ १६२॥

अनुशयाक्षेपमाह। अर्थ इति। अर्थो धनं कश्चित् सुवर्णरजतभूम्याद्यन्यतमः॥ १६१॥

असाविति। अनुशयोत्तरं सानुशयं यथा तथा यस्मादर्थार्ज्जनादेर्व्यावृत्तिरभावो दर्शिता अतोऽसावनुशयाक्षेप इत्यन्वयः॥ १६२॥

किमयं शरदम्भोदः, किं वा हंसकदम्बकम्।
रुतं नूपुरसंवादि श्रूयते तन्न तोयदः॥ १६३॥
इत्ययं संशयाक्षेपः संशयो यन्निवर्त्त्यते।
धर्म्मेण हंससुलभेनास्पृष्टघनजातिना॥ १६४॥

संशयाक्षेपमाह। किमयमिति। शरदम्भोदः शरत्कालीनः श्वेतो मेघः। हंसकदम्बकं शरत्समयात्मानसादागच्छतां हंसानां श्रेणी। नूपुरसंवादि नूपुरशिञ्जितसदृशम्॥ १६३॥

इत्ययमिति । अस्पृष्टघनजातिना मेघेभ्यो व्यावृत्तेन, हंस-सुलभेन हंसमात्रगामिना धर्म्मेण नूपुरसंवादिरुतेन । संशयो यन्निवर्त्त्यत इति, संशयस्याक्षेपः संशयाक्षेप इति षष्ठीतत्पुरुषः ॥ १६४ ॥

चित्रमाक्रान्तविश्वोऽपि विक्रमस्ते न शाम्यति ।
कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः ॥ १६५ ॥
अयमर्थान्तराक्षेपः प्रक्रान्तो यन्निवार्य्यते ।
विस्मयोऽर्थान्तरस्येह दर्शनात्तत्सधर्म्मणः ॥ १६६ ॥

अर्थान्तराक्षेपमाह । चित्रमिति । आक्रान्तविश्वोऽपि विश्वं व्याप्नुवन्नपि ते विक्रमः प्रतापो न शाम्यति विषयान्तराक्रमणेच्छाया न विरमति एतच्चित्रमद्भुतमित्यन्वयः । अर्थान्तरोपन्यासेन चित्रत्वं प्रतिषेधति, कदावेति । कदा वा नैवेत्यर्थः ॥१६५॥

अयमिति । तत्सधर्म्मणो विक्रमसदृशस्य अर्थान्तरस्योदीर्णवह्नेस्तृप्त्यभावरूपस्य दर्शनाद्दर्शनातः, णिजन्तमिदं, प्रक्रान्तः प्रस्तुतश्चित्रमितिपदप्रतिपाद्यो विस्मयो यन्निवार्य्यते, अतोऽर्थान्तरेण प्रकृतस्याक्षेपादर्थान्तराक्षेपोऽयम् ॥ १६६ ॥

न स्तूयसे नरेन्द्र ! त्वं ददासीति कदाचन ।
स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः ॥ १६७ ॥
इत्येवमादिराक्षेपो हेत्वाक्षेप इति स्मृतः ।
अनयैव दिशान्योऽपि विकल्पः शक्य ऊहितुम् ॥ १६८॥

इत्याक्षेपचक्रम् ॥

हेत्वाक्षेपमाह । न स्तुयस इति । स्वमेव मत्वा स्वस्य स्वत्वा-स्पदमेव बुद्धा । एतेन दातुरौदार्य्यातिशयो ध्वनितः ॥ १९७ ॥

इत्येवमादिरिति । स्वमेवेत्यादिहेतूपन्यासेन प्रस्तुतस्य नरेन्द्रस्तवस्याक्षेपाद्धेत्वाक्षेपोऽयं । पूर्व्वमुक्तः कारणाक्षेपस्तु कारणस्यैवाक्षेपो नतु कारणेनाक्षेप इति नानयोरैकरूप्यं । विकल्पो भेदः ॥ १९८ ॥

ज्ञेयः सोऽर्थान्तरन्यासो, वस्तु प्रस्तुत्य किञ्चन ।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥ १९९ ॥

अथार्थान्तरन्यासं लक्षयति । ज्ञेय इति । किञ्चन किमपि वस्तु वाक्यार्थं प्रस्तुत्य प्रकृतत्वेनोपन्यस्य, तस्य प्रस्तुतवस्तुनः साधने अप्रामाण्यासम्भवशङ्कानिरासाय सोपपत्तिकत्वसम्पादने समर्थस्यान्यस्य कस्यचिदप्रस्तुतस्य वस्तुनो वाक्यार्थस्य यो न्यासः सोऽर्थान्तरन्यासो ज्ञेय इत्यन्वयः । अत्र प्रस्तुत्येति क्वाप्रत्ययेन प्रथमं समर्थनीयस्य प्रस्तुतस्योपन्यासः पश्चात् समर्थकस्याप्रस्तुतस्येत्यायातम्, एतच्च प्रायिकं वैपरीत्यस्यापि दर्शनात्, यथा शिशुपालवधे। 'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता। अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि'। अत्र सन्ध्यावर्णनस्य प्रस्तुतत्वादुत्तरार्द्धवाक्यार्थः समर्थनीयः पूर्व्वार्द्धवाक्यार्थस्तु समर्थकः। भोजराजस्त्वयं विपरीतार्थान्तरन्यास इत्याह। इत्यञ्च प्रस्तुतवाक्यार्थस्याप्रस्तुतवाक्यार्थेन समर्थनमर्थान्तरन्यास इति लक्षणं

बोध्यम्। अत्र च समर्थ्यसमर्थकयोः सामान्यविशेषभाव आद-रणीयः, स च क्वचित् साधर्म्येण क्वचिद्वैधर्म्येण च भवति। तदुक्तं प्रकाशकृता। 'सामान्यं वा विशेषो वा तदन्येन सम-र्थ्यते। यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा' इति। केचित्तु कार्य्यकारणयोरपि समर्थ्यसमर्थकत्वेऽर्थान्तरन्यासमाहुः यथा, 'पृथ्वि! स्थिरा भव भुजङ्गम! धारयैनां त्वं कूर्मराज! तदिदं द्वितयं दधीथाः। दिक्कुञ्जराः! कुरुत तत्रितये दिधीर्षामार्य्यः करोतु हरकार्म्मुकमाततज्यम्'। अत्र कारणभूतं हरकार्म्मुकात-तज्यीकरणं पृथ्वीस्थैर्य्यादेः कार्य्यस्य समर्थकम्। 'सहसा विद-धीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृ-श्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः'। इत्यत्र सम्पद्वरणं कार्य्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम्। अयन्तु वक्ष्यमाणहेत्वलङ्कार एवेत्यन्ये। यत्र तु वाक्यार्थयोर्न सामान्यविशेषभावो न वा कार्य्यकारण[illegible]वस्तत्र साधारणधर्म्मयोरभिन्नत्वे प्रतिवस्तूपमा, भिन्नयोस्तयोर्बिम्बानु-बिम्बत्वे दृष्टान्त इति बोध्यम्। क्रमेण यथा 'धन्यासि वैदर्भि! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि। इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति'। अत्र समाकर्षणमुत्तर-लीकरणञ्च क्रिया एकैवेति प्रतिवस्तूपमा। 'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्। अनधिगतपरिम-लापि हि हरति दृशं मालतीमाला'। अत्र कर्णे मधुधारावम-नस्य नेत्रहरणस्य च साम्यमेव नत्वैकरूप्यमिति दृष्टान्तः॥१६८॥

विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान्।
अयुक्तकारी युक्तात्मा युक्तायुक्तो विपर्य्ययः॥ १७०॥
इत्येवमादयो भेदाः प्रयोगेष्वस्य लक्षिताः।
उदाहरणमालैषां रूपव्यक्तौ निदर्श्यते॥ १७१॥

एवमर्थान्तरन्यासस्य सामान्यलक्षणमुक्त्वा समर्थकार्थभेदेन कतिचिद्भेदान् दर्शयन्नाह। विश्वव्यापीति। विश्वव्यापी सर्व्वत्र सम्भवयोग्यः। विशेषस्थोऽसर्व्वविषयः। श्लेषाविद्धः श्लिष्टविशेषणसम्पन्नः। विरोधवान् विरुद्धधर्म्मद्वयवान्। अयुक्तकारी स्वभावत एवासत्कर्म्मकर्त्ता। युक्तात्मा औचित्येन युज्यमानस्वरूपः, युक्तार्थ इति क्वचित्पाठः। युक्तायुक्तः युक्तोऽप्ययुक्तकारी। विपर्य्ययः अयुक्तकार्य्यादित्रितयविपरीतः अयुक्तः सन्युक्तकारीत्यर्थः। एते चाष्टविधाः समर्थकार्थभेदाः। आदिना भोजराजाद्युक्तानामनीकप्रत्यनीकादीनां ग्रहणम्। एषाञ्च योगार्थबलादेव लक्षणलाभ इति लक्षणमकृत्वैवोदाहरणानि दर्शयन्नाह उदाहरणमालैषामिति। रूपव्यक्तौ स्वरूपप्रदर्शनाय॥ १७०॥ १७१॥

भगवन्तौ जगन्नेत्रे सूर्य्याचन्द्रमसावपि।
पश्य गच्छत एवास्तं, नियतिः केन लङ्घ्यते॥१७२॥

क्रमेणोदाहरति। भगवन्ताविति। भगवन्तौ ऐश्वर्य्यवीर्य्याद्यतिशयवन्तौ, जगन्नेत्रे जगत्प्रकाशकौ। नियतिरिति, अत्र

ब्रह्मादिकीटपर्य्यन्तानां नियत्यधीनत्वमिति समर्थकस्तुर्थ-पादार्थो विश्वव्यापी, तेन च सामान्येन पादत्रयगतविशेषार्थः सोपपत्तिकः कृतः ॥ १७२ ॥

पयोमुचः परीतापं हरन्त्येव शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ १७३ ॥

पयोमुच इति । परीतापमिति, (प्रादेर्घञि बहुलमिति) दीर्घः । आत्मलाभः शरीरपरिग्रहः । अत्र महतामेवैतादृशी-रीतिर्न प्राणिमात्रस्येति विशेषस्थता । अत्रापि सामान्येन विशेषसमर्थनम् ॥ १७३ ॥

उत्पादयति लोकस्य प्रीतिं मलयमारुतः ।
ननु दाक्षिण्यसम्पन्नः सर्व्वस्य भवति प्रियः ॥ १७४ ॥

उत्पादयतीति । दाक्षिण्यसम्पन्नो दक्षिणदिग ।ः अ-थच सारल्यादिगुणवान् इति श्लेषावष्टम्भेनैवोत्तरार्द्धार्थः सम-र्थक इति श्लेषाविद्धः, अत्रापि समर्थ्यसमर्थकयोः सामान्य-विशेषता ॥ १७४ ॥

जगदानन्दयत्येष मलिनोऽपि निशाकरः ।
अनुगृह्णाति हि परान् सदोषोऽपि द्विजेश्वरः ॥ १७५ ॥

जगदिति । मलिनोऽपि कलङ्कितोऽपि । अनुगृह्णाति अनुग्रहेणोपकरोति, सदोषोऽपि दूषणवानपि, द्विजेश्वरो

ब्राह्मणश्रेष्ठः, निशाकरस्यापि द्विजराजत्वेन सामान्यरूपोऽयं समर्थकः। एष च सदोषत्वानुग्रहोपकारकत्वरूपविरुद्धधर्मद्वयवान्, नहि सदोषा जना उपकुर्व्वन्तीति विरोधात्। अत्र सदोषोऽपीतिपदस्य सरात्रिरपि सदूषणोऽपीत्यर्थद्वयेन श्लेषसम्भवात् श्लेषाविद्धत्वमाशङ्कितमन्यैः तन्न रुचिरं तादृशश्लेषस्य प्रकृतानुपयोगित्वेनानभ्युपगमात् मलिनत्वसदूषणत्वयोरेव समर्थ्यसमर्थकयोः साधर्म्यात्॥ १७५॥

मधुपानकलात्कण्ठान्निर्गतोऽप्यलिनां ध्वनिः।
कटुर्भवति कर्णस्य कामिनां, पापमीदृशम्॥ १७६॥

मधुपानेति। मधुपानेन कलात् सुस्वरात् कण्ठान्निर्गतोऽपि तादृशकण्ठनिर्गतत्वान्मधुरोऽपीत्यर्थः। कामिनां विरहिणाम्। पापमीदृशमिति, ईदृशं सुखदवस्तुनोऽपि दुःखदत्वसम्पादकम्। अत्र सामान्यस्य पापरूपसमर्थकार्थस्य मधुरस्यापि भ्रमरध्वनेः कटुत्वसम्पादनादयुक्तकारिता॥ १७६॥

अयं मम दहत्यङ्गमम्भोजदलसंस्तरः।
हुताशनप्रतिनिधिर्दाहात्मा ननु युज्यते॥ १७७॥

अयमिति। अम्भोजदलसंस्तरः अम्भोजदलकल्पिता शय्या। नैतदयुक्तमित्याह हुताशनप्रतिनिधिरिति, दाहस्तापकता आत्मा स्वभावो यस्य सः। अत्र हुताशनप्रतिनिधेर्दाहकत्वस्वभावो युक्त इति समर्थकस्य युक्तात्मता॥ १७७॥

क्षिणोतु कामं शीतांशुः किं वसन्तो दुनोति माम् ।
मलिनाचरितं कर्म्म सुरभेर्नन्वसाम्प्रतम् ॥ १७८ ॥

क्षिणोत्विति । क्षिणोतु हिनस्तु, शीतांशोः कलङ्कित्वात् परहिंसनं युक्तमित्यर्थः । वसन्तः पुनः किं कथं दुनोति नैतन्न्याय्यमिति सामान्यार्थेन द्रढयति मलिनाचरितमिति मलिनेन कलङ्किना अथच पापिना, सुरभेर्विख्यातस्य अथच वसन्तस्य । तथाच, मधौ कामदुघायाञ्च विख्याते सुरभिर्द्वयोरिति कोषः । असाम्प्रतमयुक्तम् । अत्रोत्कृष्टस्यापि सुरभेरपकृष्टकर्म्मकरणादयुक्तायुक्तता । किञ्चात्र मलिनसुरभिशब्दयोः श्लिष्टत्वात् श्लेषाविद्धतापि तदनयोः सङ्करः ॥ १७८ ॥

कुमुदान्यपि दाहाय, किमयं कमलाकरः ।
नहीन्दुगृह्येषूग्रेषु सूर्य्यगृह्यो मृदुर्भवेत् ॥ १७९ ॥
इत्यर्थान्तरन्यासचक्रम् ।

कुमुदान्यपीति । अपिना शीतांशुबोधितत्वेन शीतलानां दाहकत्वमत्याश्चर्य्यमिति ध्वनितं । किमयमिति जगद्दाहकसूर्य्यबोधितत्वेन दाहस्वभावस्य कमलाकरस्य विरहिजनदाहकत्वं नाश्चर्य्यमित्यर्थः । कमलाकरः कमलानीत्यर्थः कुमुदानीति प्रक्रमात् । नहीन्दुगृह्येष्विति । गृह्यः पक्षः ( पदपक्षपरतन्त्रेषु ग्रह इति क्यः ) अत्र अयुक्तस्यैवायुक्तकर्म्मकरणमिति अयुक्तकारि, युक्तात्म, युक्तायुक्तेतित्रितयाद्विपर्य्ययः । एतानि साधर्म्म्येणोदाहरणानि, ( वैधर्म्म्येण यथा, "इत्थमाराध्य-

मानोऽपि क्लिश्नाति भुवनत्रयम्। शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः" इति। अत्राराधनापकारयोः समर्थ्यसमर्थ्यकधर्म्मयोर्विरोधित्वं, प्रदेशस्थताख्योऽयं भेदः दुर्ज्जनस्य सार्व्वत्रिकत्वाभावात्॥ १७८॥

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः।
तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते॥ १८०।

अथ व्यतिरेकं लक्षयति। शब्दोपात्त इति। द्वयोर्वस्तुनोरुपमानोपमेययोः सादृश्ये शब्दोपात्ते साधारणधर्म्मवाचकशब्दप्रयोगेण झटितिबोधिते तथा प्रतीते वा साधारणधर्म्मवाचकस्यानुपादानात् पर्य्यालोचनयावगते वा सति, तत्रेति, न तत्र करुणा हेतु,रित्यादिवत् षष्ठ्यर्थे सप्तमी तयोरित्यर्थः, तयोरुपमानोपमेययोर्यद्भेदकथनं केनचिदसाधारणधर्म्मान्तरेणोपमानादुपमेयस्योत्कर्षायापकर्षाय वा वैधर्म्म्यप्रतिपादनं स व्यतिरेकः कथ्यत इत्यन्वयः। असाधारणधर्म्मान्तरञ्च उत्कर्षापकर्षहेतुभूतं तच्च क्वचिदुपात्तं क्वचिदनुपात्तञ्च भवति तेन व्यतिरेकस्य भेदचतुष्टयमन्यैरुक्तं ज्ञेयं, तथाहि अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा, इत्यादौ अकलङ्कत्वकलङ्कित्वरूपहेतुद्वयोपादानादेकः, प्रत्येकानुपादानात् द्वौ, समुदायानुपादानादेक इति चत्वारोभेदाः। भेदकथनञ्च क्वचिन्नञादिवाचकप्रयोगेण क्वचिद्विरुद्धधर्म्मोपादानमात्रेण च शाब्दं सम्भवति, क्वचिच्च पर्य्यालोचनागम्यम्, एतच्च वक्ष्यमाणोदाहरणेषु स्पष्टीभविष्यति।

इत्यञ्चोपमानादुपमेयस्योत्कर्षोऽपकर्षो वा वैचित्र्यविशेषजनक-तया प्रतिपाद्यमानो व्यतिरेक इति लक्षणम्, तत्रोत्कर्षव्यतिरे-कस्य वक्ष्यमाणोदाहरणानि, अपकर्षव्यतिरेकस्य यथा, 'क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते नित्यम्। विरम प्रसीद सुन्दरि! यौवनमनिवर्त्ति यातन्तु'। अत्रोपमेययौवनस्योपमान-चन्द्रापेक्षयापकर्षः ; यथा वा 'हनूमदाद्यैर्यशसा मया पुन-र्द्विषां हसैर्दूतपथः सितीकृतः'। अत्र यशस्विहनूमदाद्यपेक्षया दौत्यफलासम्पादकतया नलस्यायशस्वित्वादपकर्षः॥ १८० ॥

धैर्य्यलावण्यगाम्भीर्य्यप्रमुखैस्त्वमुदन्वतः।
गुणैस्तुल्योऽसि, भेदस्तु वपुषैवेदृशेन ते ॥ १८१ ॥
इत्येकव्यतिरेकोऽयं, धर्म्मेणैकत्र वर्त्तिना।
प्रतीतिविषयप्राप्तेर्भेदस्योभयवर्त्तिनः ॥ १८२ ॥

इत्थं व्यतिरेकस्य सामान्यलक्षणमुक्का बहुप्रभेदस्य [illegible] प्रथमं शब्दोपात्तसादृश्यप्रभेदान् क्रमेण दर्शयन्नेकव्यतिरेकमाह। धैर्य्येति। धैर्य्यं पाण्डित्यमनुल्लङ्घितवेलत्वञ्च, लावण्यं सौन्दर्य्यं लवणाकजलमयत्वञ्च, गाम्भीर्य्यं दुर्बोधाशयत्वं गभीरत्वञ्च, गा-म्भीर्य्येत्यत्र माहात्म्येति क्वचित्पाठः। तत्र माहात्म्यं महाशयत्वं विपुलत्वञ्च। भेदस्त्विति भेदो वैधर्म्यम्, ईदृशेन अतिसुन्दरकर-चरणादिमता। अत्र धैर्य्यादिसाधारणधर्म्मप्रयोगात् सादृश्यं शाब्दम्। उपमेयमात्रनिष्ठेन च शाब्देन विलक्षणवपुष्मत्वधर्म्मे-णाप्रस्तुतात् समुद्रात् प्रस्तुतस्य राज्ञ उत्कर्षः॥ १८१ ॥

इत्येकेति। इत्यस्मिन् श्लोके एकत्र वर्त्तिना एकस्मिन्नुपमेय एव वर्त्तमानेन धर्म्मेण सुन्दरवपुष्टलक्षणेन उभयवर्त्तिन उपमानोपमेयनिष्ठस्य भेदस्य उत्कर्षापकर्षरूपद्वैधर्म्मस्य उपमेयोत्कर्षस्य उपमानापकर्षस्य चेत्यर्थः प्रतीतिविषयप्राप्तेः प्रतीयमानत्वाद्धेतोरयमेकव्यतिरेक इत्यन्वयः। अत्र विषयपदं विषयत्वपरम्। एकमात्रनिष्ठधर्म्मेणोभयोर्मिथो व्यतिरिच्यमानत्वादेकव्यतिरेक इति वर्त्तुलार्थः॥ १८२॥

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि।
असावञ्जनसङ्काशस्त्वन्तु चामीकरद्युतिः॥ १८३॥
उभयव्यतिरेकोऽयमुभयोर्भेदकौ गुणौ।
कार्ष्ण्यं पिशङ्गता चोभौ यत्पृथग्दर्शिताविह॥ १८४॥

उभयव्यतिरेकमाह। अभिन्नवेलाविति। अभिन्नवेलौ अनुल्लङ्घितमर्य्यादौ। असावम्बुराशिरञ्जनसङ्काशः श्यामत्वात् मलिनः, त्वन्तु चामीकरद्युतिः सुवर्णकान्तिः। अत्र भवानिति त्वमिति च प्रक्रमभङ्गः सोढव्यः॥ १८३॥

उभयेति। अत्रोपमानोपमेयोभयगतावेव निकर्षोत्कर्षबोधकौ अञ्जनसङ्काशत्वचामीकरद्युतित्वरूपभेदकावुपात्ताविति उभयव्यतिरेकोऽयम्॥ १८४॥

त्वं समुद्रश्च दुर्व्वारौ महासत्त्वौ सतेजसौ।
अयन्तु युवयोर्भेदः स जडात्मा पटुर्भवान्॥ १८५॥

स एष श्लेषरूपत्वात् सश्लेष इति गृह्यताम्।
साक्षेपश्च सहेतुश्च दर्श्यते तदपि द्वयम्॥ १८६॥

सश्लेषव्यतिरेकमाह। त्वमिति। दुर्व्वारावित्यादि, दुर्व्वारत्वमनभिभवनीयत्वमवार्य्यपूरत्वञ्च, सत्त्वं गुणविशेषस्तिमिप्रभृतिजन्तुश्च, तेजः प्रतापोवाडवाग्निश्च, जडात्मा जलमयत्वात् शीतलस्वभावोमूर्खश्च, पटुस्तीक्ष्णो निपुणश्च॥ १८५॥

स एष इति। श्लेषरूपत्वात् जडात्मेतिपटुरितिश्लिष्टभेदकधर्म्मद्वयसम्पादितत्वात्। न चात्र दुर्व्वारावित्यादिसाधारणविशेषणानामपि श्लिष्टत्वेन सश्लेषत्वमस्येति वाच्यं तादृशविशेषणानां सादृश्यनिर्व्वाहकतया शब्दार्थान्यतरश्लेषाव्यभिचारित्वेन सर्व्वत्रापि सश्लेषत्वापत्तेः तस्माद्भेदकविशेषणस्यैव सश्लेषत्वेन सश्लेषत्वव्यपदेशः। अत्र प्रस्तुताप्रस्तुतयोरुत्कर्षकापकर्षकविशेषणद्वयस्यैव श्लिष्टत्वं, क्वचिदेकतरनि[illegible]शेषणस्य श्लिष्टत्वेऽप्ययं भवति यथा एतत्पद्यस्यैव, तथापि भवतः कर्ता जडात्मा नायमर्हतीत्युत्तरार्द्धपाठे, अत्रोपमानमात्रगतं जडात्मेति श्लिष्टविशेषणम्। इत्थं भेदकविशेषणस्यैकगतत्वेनोभयगतत्वेन श्लिष्टत्वेन च भेदत्रयमुक्त्वा पुनरपि भेदद्वयमाह। साक्षेपश्चेति। आक्षेपः विरुद्धधर्म्मान्तरोपन्यासेन सादृश्यप्रतिषेधः तत्सहितः। सहेतुकः हेतूपन्यासेन साध्यमानः, हेतुश्चात्र हेत्वर्थविहितपञ्चम्यादिविभक्त्यन्तपदप्रतिपाद्यरूपः अतएव हेतुविशेषणप्रयोगे न सहेतुकव्यतिरेकः॥ १८६॥

स्थितिमानपि धीरोऽपि रत्नानामाकरोऽपि सन् ।
तव कक्षां न यात्येव मलिनो मकरालयः ॥ १८७ ॥

क्रमेणोदाहरति । स्थितीति । अत्र मलिनत्वरूपविरुद्ध-धर्म्मप्रयुक्तसादृश्याक्षेपेण प्रस्तुतस्योत्कर्ष इति साक्षेपव्यतिरेकः, नचाक्षेप एवायमिति वाच्यं तस्यात्राङ्गतया व्यपदेशकत्वाभावात् ॥ १८७ ॥

वहन्नपि महीं कृत्स्नां सशैलद्वीपसागराम् ।
भर्त्तृभावाद्भुजङ्गानां शेषस्त्वत्तो निकृष्यते ॥ १८८ ॥

वहन्नपीति । भुजङ्गानां सर्पाणाम्, अथच विटानां । निकृष्यते निकृष्टीभवति । त्वत्त इति सार्वाङ्गीयत इत्यादिवदपादानसंज्ञकस्याऽपि कर्त्तृत्वविवक्षया निकृष्यत इति कर्म्मणि प्रयोगः । अत्र भर्त्तृभावादिति पञ्चम्यन्तपदप्रतिपाद्येन हेतुना प्रस्तुताप्रस्तुतयोरुत्कर्षनिकर्षबोध इति सहेतुव्यतिरेकः ॥१८८॥

शब्दोपादानसादृश्यव्यतिरेकोऽयमीदृशः ।
प्रतीयमानसादृश्योऽप्यस्ति सोऽप्यभिधीयते ॥ १८९ ॥

इत्थं शब्दोपात्तसादृश्यव्यतिरेकमुक्त्वा प्रतीयमानसादृश्यव्यतिरेकं दर्शयन्नाह । शब्दोपादानेति । शब्दस्य साधारणधर्म्मप्रतिपादकपदस्योपादानेन यत् सादृश्यं तत्पूर्व्वको व्यतिरेक ईदृशः निरुक्तस्वरूपः । शब्द उपादानं प्रतिपादको यस्य

तादृशं सादृश्यं यत्रेति केचित्। प्रतीयमानेति, प्रतीयमानं साधारणधर्म्माप्रयोगेऽपि सामर्थ्यादवगम्यमानं सादृश्यं यत्र सः साधारणधर्म्मप्रयोगाभावेऽपि प्रसिद्धसादृश्ययोरुपमानोपमेययोर्भेदकथनरूप इत्यर्थः। तादृशो व्यतिरेकोऽप्यस्ति सम्भवति, सोऽप्यभिधीयते अनन्तरमेव दर्श्यते॥ १८८॥

त्वन्मुखं कमलञ्चेति द्वयोरप्यनयोर्भिदा।
कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम्॥ १९०॥
अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम्।
इदन्तु नयनद्वन्द्वं तव तद्गुणभूषितम्॥ १९१॥

त्वन्मुखमिति। इतीति भिदाया विशेषणम् एषेत्यर्थः, जलसंरोहि सलिलोत्पन्नम्, त्वदुपाश्रयं त्वन्मात्रनिष्ठम्। विभिन्नोपादानत्वात्त्वन्मुखकमलयोर्भेद इत्यर्थः। अत्र साधारणधर्म्माप्रयोगान्मुखकमलयोः सादृश्यमशाब्दमपि प्रसिद्धत्वात् प्रतीयते॥ १९०॥

अभ्रूविलासमिति। अस्पृष्टमदरागमप्राप्तमद्यपानकृतलौहित्यं। मृगेक्षणं मृगस्य चक्षुः। तद्गुणभूषितं तैर्भ्रूविलासादिभिर्गुणैरलङ्कृतम्। अत्रापि विरुद्धधर्म्ममात्रप्रयोगात् सादृश्यमार्थम्॥ १९१॥

पूर्व्वस्मिन् भेदमात्रोक्तिरस्मिन्नाधिक्यदर्शनम्।
सदृशव्यतिरेकस्य पुनरन्यः प्रदर्श्यते॥ १९२॥

उदाहरणद्वयदर्शनायाः प्रयोजनं दर्शयति। पूर्व्वस्मिन्निति। पूर्व्वस्मिन् त्वन्मुखमित्याद्युदाहरणे, भेदमात्रोक्तिरिति न तु प्रस्तुतस्योत्कर्षोक्तिरित्यर्थः उत्कर्षबोधकवैधर्म्म्यानुपादानादत्रोत्कर्षस्य व्यङ्ग्यत्वमेवेति भावः। भेदश्चात्र कारणभेदरूपः। उक्तञ्च, अयमेव हि भेदो भेदहेतुर्व्वा यद्विरुद्धधर्म्माध्यासः कारणभेदश्चेति। न च जलसंरोहीत्यस्य जडसंरोहीतिश्लिष्टतया जडोपादानात् कमलादजडोपादानस्य मुखस्योत्कर्षः शब्दादेवोपस्थित इति कथं भेदमात्रोक्तिरित्युक्तमिति वाच्यम्, तात्पर्य्याभावेन जलपदस्य जडार्थबोधकत्वाभावात् वस्तुतस्तु जलसंरोहीत्यत्र नीरसंरोहीत्येव पठनीयम्। अस्मिन्निति। अस्मिन्ननन्तरोक्ते अभ्रूविलासमित्यादिपद्ये, आधिक्यदर्शनम् उपमानोपमेयनिकर्षोत्कर्षबोधकविशेषणैरुपमेयस्योत्कर्षमात्रप्रतिपत्तिः न तु साधारणविशेषणमहि[illegible] सादृश्यप्रतिपत्तिरिति। भेदश्चात्र द्वयोर्विरुद्धधर्म्मवत्तया प्रतीयते न तु स्फुटशब्देनाभिधीयते। इत्थं विरुद्धधर्म्मप्रयोगेण नञादिवाचकशब्देन वा स्फुटभेदव्यतिरेकं प्रदर्श्य सदृशधर्म्ममात्रप्रयोगेणास्फुटभेदव्यतिरेकं दर्शयति। सदृशव्यतिरेकश्चेति, सदृशेन सदृशधर्म्ममात्रप्रयोगेण व्यतिरेक आधिक्यं सदृशव्यतिरेक इत्यर्थः॥ १८२॥

त्वन्मुखं पुण्डरीकञ्च फुल्ले सुरभिगन्धिनी।
भ्रमद्भ्रमरमम्भोजं लोलनेत्रं मुखन्तु ते॥ १८३॥

सदृशव्यतिरेकोऽपि सादृश्यस्य शब्दोपात्तत्वेन प्रतीयमानत्वेन च द्विविधस्तत्र शब्दोपादानसादृश्यभेदमुदाहरति । त्वन्मुखमिति । फुल्लत्वं स्मितशोभितत्वं विकसितत्वञ्च । अत्र फुल्लसुरभिगन्धित्वयोः साधारण्यात् सादृश्यं शब्दोपात्तं । भ्रमदिति, भ्रमद्भ्रमरत्वं लोलनेत्रत्वञ्च धर्म्मद्वयमसाधारणमपि विम्बानुविम्बतया सदृशमेव नतु विरुद्धं, तेन च मुखपुण्डरीकयोर्भेदः प्रतीयत एव परन्तु विरुद्धधर्म्मोपादानेन यथा स्फुटतरः, नात्र तथेति युज्यत एव भेदविधानम् अत्र भ्रमरापेक्षया नेत्रस्योत्कर्षः पर्य्यालोचनया प्रतीयत इति मुखस्याधिक्याल्लक्षणसमन्वयः ॥ १८३ ॥

चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम् ।
नभो नक्षत्रमालीदमुत्फुल्लकुमुदं पयः ॥ १९४ ॥
प्रतीयमानशौक्ल्यादिसाम्ययोश्चन्द्रहंसयोः ।
कृतः प्रतीतशुद्धोश्च भेदोऽस्मिन् वियदम्भसोः ॥ १९५ ॥
पूर्व्वत्र शब्दवत्साम्यमुभयत्रापि भेदकम् ।
भृङ्गनेत्रादि तुल्यं, तत् सदृशव्यतिरेकता ॥ १९६ ॥

प्रतीतसादृश्यं सदृशव्यतिरेकमुदाहरति । चन्द्र इति । इदमिति काकाक्षिन्यायान्नभःपयसोर्विशेषणं । नभो नक्षत्रमालीदमिदमुत्कुमुदं पय इत्यपि क्वचित्पाठः ॥ १८४ ॥

अत्र प्रतीयमानसादृश्यत्वं सदृशव्यतिरेकत्वञ्च सङ्गमयति ।

प्रतीयमानेति। अस्मिन् पद्ये प्रतीयमानं वाचकाभावेऽपि प्रसिद्धत्वादवगम्यमानं यत् शीतत्वादि आदिना सितपक्षशो-भितत्वादीनां ग्रहणं। तेन साम्यं ययोस्तादृशयोश्चन्द्रहंसयो-रुपमानोपमेयभूतयोः, तथा प्रतीता शुद्धिर्बिम्बानुबिम्बत्व-बोधिका स्वच्छता ययोस्तथाविधयोर्वियदम्भसोश्च आश्रय-तया उपमानोपमेयधर्मभूतयोरित्यर्थः, भेदः कृतः प्रद-र्शित इत्यन्वयः। अयमर्थः साधारणधर्माप्रयोगात् प्रतीय-मानसादृश्ययोश्चन्द्रहंसयोः स्वच्छतासाधर्म्येण सदृशाभ्यां वियद-म्भोरूपविभिन्नधर्माभ्यां व्यतिरेचनं प्रदर्शितमिति प्रतीय-मानसादृश्यव्यतिरेकस्य सदृशव्यतिरेकाख्योभेद इति। अत्र पूर्व्वार्द्धान्ते वियदम्भसोरिति, उत्तरार्द्धान्ते चन्द्रहंसयोरिति पाठो न मनोरमः॥ १९५॥

पूर्व्वत्रेति। पूर्व्वत्र त्वन्मुखमित्यादिश्लोके शब्दवत् शब्दविशिष्टं साम्यं फुल्ले इति सुरभिगन्धिनी इति च साधारणधर्मबोधक-शब्दाभ्यां मुखपुण्डरीकयोः सादृश्यं प्रतिपादितमिति शब्दो-पादानसादृश्योऽयं सदृशव्यतिरेक इत्यर्थः। उभयत्र सदृश-व्यतिरेकत्वं सङ्गमयति उभयत्रापीति, उभयत्रापि श्लोकद्वयेऽपि तुल्यं कृष्णत्वादिना स्वच्छत्वादिना च प्रणिधानगम्यसादृश्यं भृङ्गनेत्रादि आदिना वियदम्भसोर्ग्रहणं, भेदकम् उपमानोपमे-ययोर्भिन्नत्वप्रतिपादनेन निकर्षोत्कर्षबोधकं, तत्तस्मात् सदृश-व्यतिरेकतेत्यन्वयः। अन्ये त्वेवंविधस्थले उत्कर्षनिकर्षयोः स्फुट-प्रतीतेरभावात् तस्या एवच व्यतिरेकव्यपदेशस्य जीवातुभूत-

त्वान्न व्यतिरेकत्वमुचितं किन्तु धर्म्मयोर्विम्बानुविम्बत्वादुपमा-ध्वनिरेवायमिति वदन्ति ॥ १९६ ॥

अरत्नालोकसंहार्य्यमवार्य्यं सूर्य्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ १९७ ॥
सजातिव्यतिरेकोऽयं, तमोजातेरिदं तमः ।
दृष्टिरोधितया तुल्यं, भिन्नमन्यैरदर्शि यत् ॥ १९८ ॥

व्यतिरेकचक्रम् ।

सजातिव्यतिरेकमाह । अरत्नालोकेति । दृष्टिरोधकरमिति, दृष्टिश्चक्षुर्ज्ञानञ्च, तमो मोहोऽन्धकारश्च, श्लेषवशादेव तमःपदेनोपमानोपमेयभूततमोद्वयप्रतिपादनात् सामान्यलक्षणसमन्वयः, व्यञ्जनया उपमानतमःप्रतीतिरच व्यतिरेक इति केचित् । अत्र दृष्टिरोधकरमितिविशेषणस्योभयत्र सत्त्वात् सादृश्यं शाब्दं । अरत्नालोकेत्यादिविशेषणद्वयस्योपमेयमात्रवृत्तित्वाद्भेदकम्, एतदेव दर्शयति सजातिव्यतिरेकोऽयमिति समाना जातिर्यस्य स सजातिः सजातितोव्यतिरेचनं सजातिव्यतिरेक इत्यर्थः । इदं प्रस्तुतं यौवनप्रभवं तमः, तमोजातेर्ज्ञानप्रतिबन्धकत्वरूपतमस्त्वधर्म्मवतोऽप्रस्तुततमःसामान्यस्य दृष्टिरोधितया दृष्टिरोधित्वरूपसाधारणधर्म्मसम्बन्धितया तुल्यं, तथा अन्यैः अरत्नालोकेत्याद्यसाधारणधर्म्मैर्भिन्नञ्च कृत्वा यददर्शि तत् सजातिव्यतिरेकोऽयमित्यन्वयः । अत्र अन्यैरिति वक्त-

वचनेन अहोरात्रवृत्तित्वादीनां परिग्रहः अन्यथा विरुद्ध-धर्म्मद्वयस्यैवोपादानाद्दरूवचनानुपपत्तेः। भिन्नमित्यनेनान्वये च तमोजातेरित्यस्य विपरिणामेन पञ्चम्यन्तता ज्ञातव्या, अन्ये तु तम एव तम इति श्लिष्टरूपकमिदं विरुद्धधर्म्मोपादाना-दधिकारूढवैशिष्ट्यमित्याहुः॥ १९७॥ १९८॥

प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम्।
यत्र स्वाभाविकत्वम्वा विभाव्यं, सा विभावना॥ १९९॥

विभावनां लक्षयति। प्रसिद्धेति। यत्रेति वैचित्र्ये इत्यर्थः। प्रसिद्धस्य सामान्यतोलोकविख्यातस्य न तु तात्त्विककारण-तापन्नस्य हेतोर्व्यावृत्त्या असद्भावप्रदर्शनेन यत्किञ्चिदतिगूढं कारणान्तरं यत्र वैचित्र्ये विभाव्यं फलोत्पत्त्यनुपपत्त्या निपु-णाभिनिवेशेनानुसन्धानीयं, तथा स्वाभाविकत्वम्वा निपुणानु-सन्धानेनापि कारणान्तराप्रतीतेः फलस्य स्वतःसम्पद्यमान-त्वम्वा विभाव्यं, सा द्विविधवैचित्र्यरूपा विभावनेति योजना, इत्यञ्च विना प्रसिद्धहेतुमुत्पन्नस्य फलस्य गूढकारणान्तरवि-भावनजन्यं कारणान्तरानुपलब्ध्या नैसर्गिकत्वनिश्चयजन्यं वा वैचित्र्यं विभावनेति लक्षणं, ततश्च कारणान्तरं स्वाभाविकत्वं वा विभाव्यतेऽस्यामित्यधिकरणप्रत्ययान्तो योगरूढोऽयं वि-भावनाशब्दः अलङ्कारसंज्ञानां प्रायेण योगरूढत्वात्। न-व्यास्तु कारणाभावे फलोत्पत्तिवर्णनं विभावनेत्याहुः तच विभावनेतिसंज्ञाया नान्वर्थतेति नैतत् सम्यक्। अत्र कार-

णान्तरस्य क्वचिच्छाब्दं, यथा, "अनायाससकृशं मध्यमशङ्कत-रले दृशौ। अभूषणमनोहारि वपुर्वयसि सुभ्रुवः"। इति, अत्र वयोरूपं कारणान्तरमुक्तं तस्य च कारणतयाऽनिर्द्देशादविभाव्यत्वं। क्वचिदार्थं, यथोदाहरिष्यते अपीतक्षीवकादम्बमित्यादि, अत्र शरत्कालरूपकारणान्तरमनुपात्तं विभावनीयं। स्वाभाविकत्वमपि क्वचिच्छाब्दं यथा, वक्त्रं निसर्गसुरभीत्यादि क्वचिदार्थं यथा, अनञ्जितासिता दृष्टिरित्यादि। प्रसिद्धकारणाभावस्य क्वचिच्छाब्दः, यथा, अपीतक्षीवेत्यादि। क्वचिचार्थः यथा वक्त्रं निसर्गेत्यादि। यत्र तु कारणविरुद्धसद्भावेन कारणाभावप्रतिपादनं तत्रापीयं भवति परन्तु न स्फुटतरा, यथा, यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः। सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते। इति, अत्रोत्कण्ठाकार्य्यस्य प्रसिद्धहेतूनां पत्यभावादीनामभावो विरुद्धेन पत्यु...दसद्भावेन प्रतिपादित इति नात्र स्फुटत्वमस्याः अत एवात्र प्रकाशकृता, अत्र स्फुटो न कश्चिदलङ्कार इत्युक्तं॥ १९९ ॥

अपीतक्षीवकादम्बमसंमृष्टामलाम्बरम्।
अप्रसादितशुद्धाम्बु जगदासीन्मनोहरम्॥ २०० ॥

तत्र कारणान्तरविभावनामुदाहरति। अपीतेति। अपीताः मधून्यपीतवन्तोऽपि क्षीवा मत्ताः कादम्बाः कलहंसा

यत्र तत्। अपीतेति, भोजनार्थत्वात् पिबतेः कर्त्तरि क्तः। तथा असंमृष्टमपि अमलमम्बरं यत्र तत्। अप्रसादितं कतकादिना प्रसादमप्रापितमपि शुद्धं स्वच्छमम्बु यत्र तत्। अत्र पानं क्षीबत्वस्य, मार्ज्जनममलत्वस्य, प्रसादनं शुद्धत्वस्य, प्रसिद्धं कारणं तदसद्भावेऽपि क्षीबत्वादिफलोत्पत्तिरिति प्रसिद्धकारणाभावः शाब्दः, तादृशफलोत्पत्तिश्च प्रसिद्धकारणाभावेऽप्युपनिबध्यमाना प्रसत्त्वद्रूपतया कारणान्तरमपेक्षत इति शरत्कालरूपं कारणान्तरं विभावयति, तदत्रार्थं कारणान्तरम्॥ १०० ॥

अनञ्जिताऽसिता दृष्टिर्भ्रूरनावर्ज्जिता नता।
अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि ॥ २०१ ॥

स्वाभाविकत्वविभावनामुदाहरति। अनञ्जितेति। अनञ्जिता अञ्जनेनालिप्तापि दृष्टिरसिता श्यामला। तथा अनावर्ज्जिता अनाकृष्टकोटिद्वयापि भ्रूर्नता वक्रा, अरञ्जितो लाक्षादिभीरागमप्रापितोऽपि अधरोऽरुणः। अत्र अञ्जितत्वमसितत्वस्य, आवर्ज्जनं नम्रतायाः, रञ्जितत्वमरुणत्वस्य प्रसिद्धं कारणं, तन्निवृत्तावप्युत्पद्यमानमसितत्वादि कार्य्यं दृष्टकारणान्तराभावाद्विधिनिर्म्मितत्वरूपस्वाभाविकत्वं विभावयति। तच्च स्वाभाविकत्वमिह गम्यं। प्रसिद्धकारणाभावश्च शाब्दः॥ ॥ २०१ ॥

यदपीतादिजन्यं स्यात् क्षीवत्वाद्यन्यहेतुजम् ।
अहेतुकञ्च तस्येह विवक्षेत्यविरुद्धता ॥ २०२ ॥

उदाहरणद्वये निरुक्तलक्षणद्वयं सङ्गमयन् कारणाभावे कथं कार्य्योत्पत्तिरिति विरोधं वारयति । यदपीतादीति । पीतं पानं भावे क्तः, आदिना उत्तरश्लोकगतानामञ्जनक्षितत्वादीनां परिग्रहः, एवं क्षीवत्वादीत्यादिना असितत्वादीनाम् । अपीतादिजन्यं पानाद्यजन्यं किन्तु अन्यहेतुजं शरत्कालरूपकारणान्तरजन्यं, तथा अहेतुकञ्च कारणमन्तरेण स्वतःसिद्धञ्च यत् क्षीवत्वादि स्याद्भवति तस्येह विवक्षा इत्यतोऽविरुद्धता व्यभिचाराभाव इत्यन्वयः, अयमर्थः, तृणारणिन्यायेन प्रत्येकपर्य्याप्तकारणतायां व्यभिचारापत्त्या कार्य्यगतं वैजात्यमवश्यमङ्गीकरणीयं, ततश्च प्रकृते पानादिजन्यं क्षीवत्वादिकमन्यत् शरत्कालजन्यमन्यदिति पानादिकारणाभावेऽपि शरज्जन्यं विजातीयमिदं क्षीवत्वादिकं तस्मान्न व्यभिचारसम्भवः, एवमञ्जनलेपादिलौकिककारणजन्यमसितत्वादिकमन्यत् स्वभावसिद्धञ्चान्यदिति नात्रापि व्यभिचारशङ्केति, वैचित्रन्तु विभिन्नानामपि क्षीवत्वादीनामेकताध्यवसानेन अहो असत्यपि कारणे कार्य्यमिति चमत्कारोदयादिति विवेचनीयम् ॥ २०२ ॥

वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम् ।
अकारणरिपुश्चन्द्रो निर्निमित्तासुहृत् स्मरः ॥ २०३ ॥

निसर्गादिपदैरत्र हेतुः साक्षान्निवर्त्तितः ।
उक्तञ्च सुरभित्वादि फलं, तत् सा विभावना ॥ २०४ ॥

॥ इति विभावनाचक्रम् ॥

आद्यं स्वाभाविकत्वमुदाहरति । वक्त्रमिति । निसर्गेण स्वभावेन, नतु केनापि कर्पूरादिगन्धवस्तुना सुरभि । अव्याजेनाकपटेन सुन्दरं, नतु वसनाभरणादिना कृत्रिमसौन्दर्य्यवत् । अकारणरिपुः विरोधादिकारणं विनैव विरहिणां तापकारी । एवं निर्निमित्ताऽसुहृदिति । अत्र सुरभित्वादीनां स्वाभाविकत्वं निसर्गादिपदबोध्यमिति आद्यमेव । नन्वत्र प्रसिद्धहेतुव्यावृत्त्यभावात् कथं लक्षणसमन्वय इत्यत आह, निसर्गादिपदैरिति । साक्षान्नञादिवाचकशब्दवत् । सुरभित्वादिफलं सुरभित्वादिफलस्य स्वाभाविकत्वम्, उक्तञ्च बोधितञ्च । निसर्गादिपदानि हेतुसद्भावं निवर्त्तयन्ति, सुरभित्वादिफलस्य च स्वाभाविकत्वं बोधयन्तीत्यर्थः । तत्तस्मात् कारणाभावफलस्वाभाविकत्वयोः प्रतीतत्वादित्यर्थः । सा निरुक्तलक्षणा विभावना अत्र वर्त्तत इत्यन्वयः । तत्सा इत्यत्र तस्मादिति क्वचित् पाठः ॥ २०३ ॥ २०४ ॥

वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ।
उक्तिः संक्षेपरूपत्वात् सा समासोक्तिरिष्यते ॥ २०५ ॥

अथ समासोक्तिं लक्षयति । वस्त्विति । किञ्चित् किमपि प्रस्तुतं

वस्तु अभिप्रेत्य चमत्कारित्वप्रतिपिपादयिषया व्यञ्जनया प्रतिपादयितुमभिलष्य तत्तुल्यस्य तदुपमानभूतस्यान्यवस्तुनः कस्यचिदप्रस्तुतस्योक्तिः शब्देन प्रतिपादनं सा समासोक्तिरित्यन्वयः। शक्त्या प्रतिपादनापेक्षया व्यञ्जनया वस्तुनः प्रतिपादनं हि चमत्कारविशेषं जनयति, यदुक्तं ध्वनिकृता 'वाच्योऽर्थो न तथा स्वदते प्रतीयमानः स एव यथेति, संज्ञाबीजमाह, संक्षेपरूपत्वादिति समासः संक्षेपः, संक्षेपश्च एकस्य प्रयोगेणोभयप्रतीतिः, प्रकृते च प्रस्तुताप्रस्तुतयोर्द्वयोरेकस्याप्रस्तुतस्य प्रयोगेण प्रस्तुतस्यापि प्रतिपत्तिरिति। एतेनोपमानाच्छब्दादतिप्रसिद्धेरुपमेयस्य प्रतीतिः समासोक्तिरित्यर्थः। तदुक्तं भोजराजेन, 'यत्रोपमानादेवैतदुपमेयं प्रतीयते। अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः। प्रतीयमाने वाच्ये वा सादृश्यं सोपजायते। आद्यां गर्हामुभे नाभे तदुपाधीन् प्रचक्षते। विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा। अस्यामपरायस्ति तुल्यातुल्यविशेषणा। संक्षेपेणोच्यते यस्मात् समासोक्तिरियं ततः। सैवान्योक्तिरन्योक्तिरुभयोक्तिश्च कथ्यते' इति। वस्तुतस्तु समासोक्तावस्यामुपमानस्यैव वाच्यत्वमुपमेयस्यैव गम्यत्वमिति न नियमः उपमेयादप्युपमानप्रतीतौ तदभ्युपगमस्यौचित्यात्। यथा, 'व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः। आलिङ्गसि प्रसभमङ्गमशेषमस्याद्धन्यस्त्वमेव मलयाचलगन्धवाह' इति। अत्र शाब्दस्य मलयानिलस्योपमेयत्वं गम्यस्य च हठकामुकस्योपमानत्वमिति।

अतएवाग्नेये उपमानमुपमेयं वानन्तर्भाव्यैव लक्षणं कृतं यथा, 'यत्रोक्ताद्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः' इति। नव्यास्तु प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिः, अप्रस्तुतात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसेत्याहुः। वाच्ये प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः समासोक्तिरिति विश्वनाथादयः। स्वमते समासोक्त्यप्रस्तुतप्रशंसयोर्भेदमप्रस्तुतप्रशंसाप्रकरणे विवेचयिष्यामः॥ २०५॥

पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम्॥ २०६॥
इति प्रौढाङ्गनाबद्धरतिलीलस्य रागिणः।
कस्याश्चिदिह बालायामिच्छावृत्तिर्विभाव्यते॥ २०७॥

अत्र वाच्याङ्गप्रतीतौ तयोः कार्य्यलिङ्गविशेषणानामन्यतमस्य साम्यं हेतुरिति प्रथमं कार्य्यसाम्ये उदाहरति। पिबन्निति। असन्नद्धसौरभ्यमसञ्जातमधुगन्धम्। लक्षणं सङ्गमयति। इतीति। इतीह इत्यस्मिन् पद्ये, बालायामनुद्भिन्नयौवनायाम्, इच्छावृत्तिः सुरताभिलाषप्रवृत्तिः, विभाव्यते कार्य्यसाम्येन व्यज्यते। अत्राप्रस्तुतस्य भ्रमरस्य कार्य्यं फुल्लपङ्कजमधुपानपूर्वकपङ्कजकोरकमधुपानेच्छा, प्रस्तुतस्य कामुकस्य च प्रौढाङ्गनारतिलीलापूर्व्वकबालासुरतेच्छा तयोश्च बिम्बानुबिम्बतास्त्येवेति साम्यमेव तेन चाप्रस्तुताद्भ्रमरात् प्रस्तुतस्य कामुकस्य प्रतीतिः॥ २०६॥ २०७॥

विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।
अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥ २०८ ॥

विशेषणसाम्यनिबन्धनां समासोक्तिं दर्शयन् विशेषणानामभिन्नत्वेन भिन्नाभिन्नत्वेन च भेदद्वयमाह । विशेष्येति । विशेष्यमात्रं विशेष्यपदमेव भिन्नं श्लेषानवष्टम्भादेकमात्रबोधकं यत्र सा । मात्रपदाद्विशेषणभिन्नत्वव्युदासः । अपिना पूर्वोक्तकार्य्यसाम्यसमासोक्तिसमुच्चयः । विशेष्यपदस्य श्लिष्टत्वे तु द्वयोः प्रस्तुतत्वे श्लेषालङ्कारः, एकस्य तथात्वे तु शब्दशक्तिमूलो ध्वनिरिति बोध्यम् । तुल्येति, तुल्याकारं श्लेषावष्टम्भेन वाच्यव्यङ्ग्योभयधर्म्मबोधकं विशेषणं यत्र सैत्येका, अत्र श्लेषवशादेकाकारशब्दप्रतिपाद्यत्वेन विशेषणधर्म्माणां साम्यम् । अपराप्यस्तीति । अत्रापि विशेष्यमात्रभिन्नेत्यनुषज्यते । भिन्नमेकमात्रगामि अभिन्नमुभयगामि च विशेषणं यत्र सा । भिन्नविशेषणस्य तु व्यङ्ग्यधर्म्मेण विम्बप्रतिविम्बतया साम्यम्, इत्यश्च श्लिष्टविशेषणा श्लिष्टाश्लिष्टविशेषणा चेति द्वौ भेदावित्यर्थः । श्लेषश्चात्र शब्दगतोऽर्थगतश्चेति द्विविधो बोध्यस्तेनापरैरङ्गीकृतं विशेषणसाधारण्यगर्भभेदान्तरं पृथङ्न वक्तव्यम् अर्थश्लेषावष्टम्भविशेषणस्यैव साधारण्यात्, यथा 'निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी । उदिते वासराधीशे स्मेराजनि सरोजिनी' । अत्र निसर्गेत्यादिविशेषणं साधारणं तेन च नायिकाप्रतीतिः । केचित्तु औपम्यगर्भत्वेन च विशेषणसाम्यं भवति, औपम्यगर्भ-

तत्र उपमारूपकतत्सङ्करगर्भत्वरूपं तेन च विशेषणसाम्ये भेदत्रयान्तरं ज्ञातव्यमित्याहुः तन्न रुचिरं तथाविधस्थले एकदेशविवर्त्त्युपमातादृशरूपकयोरेवाङ्गीकारस्यौचित्यात् अन्यथा, 'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्। प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार'। इत्यादावार्द्रनखक्षताभैन्द्रधनुर्धारणरूपविशेषणस्य नायिकाया असम्भवेन विशेषणसाम्याभावात् कथं नायिकाप्रतीतिः तस्मादेवमादावेकदेशविवर्त्तिन्युपमैव, एवं 'लावण्यमधुभिः पूर्णमास्यमस्याविकस्वरम्। लोकलोचनरोलम्बकदम्बैः कैर्न पीयते'। इत्यादावेकदेशविवर्त्तिरूपकमेव ॥ २०८ ॥

रूढमूलः, फलभरैः पुष्णन्ननिशमर्थिनः।
सान्द्रच्छायो महावृक्षः सोऽयमासादितो मया ॥२०९॥
अनल्पविटपाभोगः फलपुष्पसमृद्धिमान्।
सुच्छायः स्थैर्य्यवान् दैवादेष लब्धो मया द्रुमः ॥ २१०॥
उभयत्र पुमान् कश्चिद्वृक्षत्वेनोपवर्णितः।
सर्व्वे साधारणा धर्म्माः पूर्व्वत्रान्यत्र तु द्वयम् ॥ २११ ॥

क्रमेणोदाहरति। रूढमूल इति। रूढं प्ररूढं मूलं शिफा, अन्यत्र मूलधनं यस्य सः। फलभरैः शस्यातिशयैः, अन्यत्र धनलाभैरर्थिनः पुष्णन्। सान्द्रा बहुला छाया आतपाभावः, अन्यत्र कान्तिर्यस्य सः। सोऽयं प्रसिद्धः। अत्र मूलादिशब्दानामनेकार्थत्वेन विशेषणानामभिन्नत्वं। तथाच मेदिनी 'मूलं

श्रिफाश्चयोः, मूलविन्तेऽन्तिके वा नेति । फलं जातीफले शस्ये हेतुत्थे व्युष्टिलाभयोरिति । छाया स्यादातपाभावे प्रतिविम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति च । मद्दाद्रुमपदस्येकार्थमेवेति वाच्यव्यङ्ग्यवाक्यार्थयोर्विशेषं भिन्नमेव ॥ २०९ ॥

अनल्पेति । अनल्पो विटपस्य शाखाविस्तारस्याभोगः पूर्णता यस्य सः । फलानां शस्यानां पुष्पाणाञ्च समृद्धिः प्राचुर्य्यं विद्यते यस्य सः । अत्र पुष्पसाहचर्य्यात् फलपदस्य शस्यमात्रवाचकत्वेनैकार्थत्वमेव । सुच्छायः पल्लवैर्निविडत्वादधिकातपाभावः, अन्यत्र शोभनकान्तिः । स्थैर्य्यमविचलितमूलत्वम्, अन्यत्र सत्यपि विघ्ने व्यवसायादचलनं, तद्वान् । दैवाद्भाग्यात् ॥ ॥ २१० ॥

उभयत्रेति । उभयत्र पद्यद्वये, कश्चित् प्रस्तुतः पुमान्, वृक्षत्वेन उपमानभूतवृक्षस्योपमेयत्वेन, उपवर्णितः विशेषणसाधारण्योत्थापितया व्यञ्जनया बोधितः । पूर्व्वत्र पद्ये सर्व्वे धर्म्मा विशेषणभूताः साधारणाः श्लिष्टपदप्रतिपाद्यत्वेनैकरूपत्वादुभयान्वयित्वेनाभिन्नाः । अन्यत्र परत्र पद्ये तु इयं सुच्छायत्वस्थैर्य्यवत्त्वधर्म्मयोर्युगलं श्लिष्टपदप्रतिपाद्यत्वादभिन्नं । विटपफलपुष्पाणामेकार्थपदप्रतिपाद्यत्वाद्भिन्नत्वमेव, तेषां साधारण्यन्तु प्रतीयमानपुरुषगतैस्तत्सजातीयधर्म्मैः सह विम्बप्रतिविम्बतयेति बोध्यम् अन्यथा तेषां व्यञ्जनानुत्थापकत्वेनापुष्टत्वदोषापत्तेः । अयञ्च चरमभेदो वैचित्र्यविशेषाजनकत्वाग्रन्थकृतोपेक्षितः ॥ २११ ॥

निवृत्तव्यालसंसर्गो निसर्गमधुराशयः।
अयमम्भोनिधिः कष्टं कालेन परिशुष्यते॥ २१२॥
इत्यपूर्व्वसमासोक्तिः पूर्व्वधर्म्मनिवर्त्तनात्।
समुद्रेण समानस्य पुंसो व्यापत्तिसूचनात्॥ २१३॥
॥ इति समासोक्तिचक्रम्॥

अभिन्नविशेषणसमासोक्तौ रूढमूल इत्याद्युदाहरणप्रदर्शनेन विशेषणानां तात्त्विकत्वं प्रतिपादितं। सम्प्रति विपरीतधर्म्मारोपेण भेदान्तरं दर्शयन्नुदाहरति। निवृत्तेति। निवृत्तो व्यालानां सर्पाणाम्, अन्यत्र खलानां संसर्गो यस्मात् सः। तथा निसर्गेण मधुराशयः सुस्वादुजलाधारः, अन्यत्र सदयहृदयः, कालेन समयविशेषेण अन्यत्र यमेन, परिशुष्यते निर्जलीक्रियते अन्यत्र विनाश्यते। अत्र व्यालसंसर्गित्वलवणाशयत्वे एवाम्भोनिधेः पूर्व्वसिद्धधर्म्मौ तन्निवर्त्तनेन तद्विपरीतव्यालसंसर्गाभावनिसर्गमधुराशयत्वधर्म्मौ वाच्येऽम्भोनिधावारोपितौ, व्यङ्ग्ये च तात्त्विकावित्यभिन्नौ, ततश्च प्रस्तुतपुरुषविशेषप्रतीतिरित्यपूर्व्वसमासोक्तिरियम्, एतदेव सङ्गमयति। इत्यपूर्व्वेति। अपूर्व्वत्वे हेतुः पूर्व्वधर्म्मनिवर्त्तनादिति, पूर्व्वधर्म्मौ पूर्व्वसिद्धधर्म्मौ व्यालसंसर्गलवणाशयत्वरूपौ तयोर्निवर्त्तनादपलापात् तदपलापेन तद्विपरीतधर्म्माध्यासादित्यर्थः। समासोक्तिसद्भावे हेतुः समुद्रेणेत्यादिः। इत्थं कार्य्यविशेषणयोः साधारण्यकृतभेदा दर्शिताः। लिङ्गसाधारण्यभेदो यथा, 'असमाप्तजिगीषस्य स्त्री-

चिन्ता का मनस्विनः। समाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः'। अत्रोत्तरार्द्धे स्त्रीपुंलिङ्गसाधारण्येन नायक-नायिकाप्रतीतिः, एवमन्येऽपि समासोक्तिभेदा भोजराजादि-भिरुक्तास्तेषां प्रबन्धेषु ज्ञातव्याः ॥ २१२ ॥ २१३ ॥

विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी।
असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा ॥ २१४ ॥

अथातिशयोक्तिं लक्षयति। विवक्षेति। विशेषः प्रस्तुतवस्तुन उत्कर्षः तस्य या लोकसीमातिवर्त्तिनी लोकमर्य्यादातिरिक्ता अत्यधिकेत्यर्थः, विवक्षा उक्तिः भङ्ग्या प्रतिपादनमित्यर्थः, असावतिशयोक्तिः स्यादित्यन्वयः। विवक्षेति स्वार्थे सन् इच्छा-या अलङ्कारत्वाभावात्। विवक्षाया लोकसीमातिवर्त्तित्वञ्च परम्परया विशेषस्यैव लोकसीमातिवर्त्तित्वेन प्रतिपादितस्य चमत्कारजनकत्वात्। स्पष्टमुक्तमाग्नेये, 'लोकसीमातिवृत्तस्य वस्तुधर्म्मस्य कीर्त्तनम्। भवेदतिशयो नाम सम्भवोऽसम्भवो द्विधा' इति। वस्तुधर्म्मस्य प्रस्तुतवस्तुनो गुणाद्याधिक्यस्योत्कर्षस्येत्य-र्थः। क्वचिच्च लोकसीमातिवर्त्तिन इत्येव पाठः। इत्यञ्च प्रस्तुतवस्तुनोऽत्यधिकोत्कर्षोक्तिरतिशयोक्तिरिति लक्षणम्, अ-तिशय उत्कर्षस्तस्योक्तिरित्यन्वर्थता। एवञ्च लोकसीमाति-वर्त्तित्वञ्च विशेष एवान्वयात् प्रस्तुतवस्तुनि चामन्वयात्तत्र कान्तिगुणवत्त्वाभावशङ्का, प्रस्तुतवस्तुन एव तथात्वे कान्तिम-त्त्वायोगात् वार्त्ताभिधानादावेव वा कान्तिसद्भावनियमेनान्यत्र

तदभावे दोषाभावात्। एवमपि वक्ष्यमाणोदाहरणेनास्या न समानविषयत्वम्। अत्र प्रस्तुतोत्कर्षातिशयप्रतिपादनञ्चाप्रस्तुताभेदाध्यवसानादिना। अतिशयोक्तिं प्रशंसति। अलङ्कारोत्तमेति सर्व्वालङ्कारजीवातुभूतत्वाद्वर्णनीयार्थोत्कर्षातिशयबोधकत्वेन चमत्कारविशेषजनकत्वाच्चेत्यर्थः ॥ २१४ ॥

मल्लिकामालभारिण्यः सर्व्वाङ्गीणार्द्रचन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥२१५॥

उदाहरति। मल्लिकेति। मालाशब्दस्येष्टकादित्वात्तदन्तस्य चेति ह्रस्वः। ईदृशं सामान्यालङ्कारमिच्छन्त्यन्ये। अत्र ज्योत्स्नैव वर्णनीयत्वात् प्रस्तुता, तस्याः श्वेतिमा मल्लिकामालादिकृतनायिकाश्वेतिमाभिन्नतया वर्णनादत्यधिकत्वेन प्रतीयते, यद्वा ज्योत्स्नायां रजन्यां तादृशाभिसारिकाणामलक्ष्यत्वस्यासम्बन्धेऽपि तत्कल्पनात् प्रस्तुतज्योत्स्नायाः श्वेतिमोत्कर्षः प्रतीयते ॥ २१५ ॥

चन्द्रातपस्य बाहुल्यमुक्तमुत्कर्षवत्तया।
संशयातिशयादीनां व्यक्तौ किञ्चिन्निदर्श्यते ॥ २१६ ॥

अत्र लक्षणं सङ्गमयति। चन्द्रातपस्येति। चन्द्रातपस्य प्रस्तुतज्योत्स्नाया उत्कर्षवत्तया उत्कृष्टत्वप्रतिपादनार्थं बाहुल्यं गाढत्वमुक्तम् अभिसारिकाणां तादृशश्वेतिम्ना सहाभिन्नत्वप्रतिपादनेन सत्यपि लक्ष्यत्वेऽलक्ष्यत्वप्रतिपादनेन वा बोधितमित्यर्थः ॥

भेदान्तराणि प्रदर्शयन्नाह। संशयेत्यादि। संशयेनाति-

शयः प्रस्तुतोत्कर्षः। आदिना निर्णयादिपरिग्रहः। व्यक्तौ प्रकाशनाय, निमित्ते सप्तमी। किञ्चिद्भेदान्तरं ग्रन्थबाहुल्य-भिया नतु बहवो भेदा इत्यर्थः॥ २१६॥

स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्त्तते॥ २१७॥

स्तनयोरिति। स्तनयोरतिस्थूलयोः, एवं जघनस्यातिस्थूलस्य, अपिर्भिन्नक्रमे मध्ये वर्त्तमानमपि, अपिना सन्देहासम्भवः सूचितः। तथापि मध्यस्यातिकृशत्वेन सम्यगलक्ष्यत्वात् सन्देहावतारः। अत्र तथाविधसंशयस्यासम्बन्धेऽपि तत्सम्बन्ध-कल्पनेन मध्यस्य कृशत्वातिशयः प्रतिपादित इति संशयाति-शयोक्तिरियम्॥ २१७॥

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।
अन्यथा नोपपद्येत पयोधरभरस्थितिः॥ २१८॥

निर्णयातिशयोक्तिमुदाहरति। निर्णेतुमिति। तव मध्यम् अस्तीति निर्णेतुं शक्यम्, अन्यथा मध्यसद्भावं विना पयोधर-भरस्थितिर्नोपपद्येत, निरवलम्बनस्य गुरुवस्तुनः स्थितेरसम्भवा-दित्यन्वयः। अन्यथानुपपत्त्यैव पयोधरभरस्थितेरिति क्वचित् पाठः। अत्र निरालम्बनपयोधरभरस्थित्यनुपपत्तिकृतनाम्या-स्तित्वनिर्णयस्यासम्बन्धेऽपि तत्कल्पनेन मध्यस्य कृशत्वातिशयो-क्तिर्निर्णयातिशयोक्तिरियम्॥ २१८॥

अहो विशालं भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ २१९ ॥

आश्रयाधिक्यातिशयोक्तिमुदाहरति । अहो इति । अहो अद्भुतमत्यन्तमित्यर्थः, मातुमशक्योऽपि अपरिमितोऽपि । अत्राश्रयभूतस्य भुवनत्रितयस्याधिक्यप्रतिपादनेनाश्रितस्य यशोराशेराधिक्योक्तेराश्रयाधिक्यातिशयोक्तिरियम् । अतएवात्राधिकालङ्कारमिच्छन्ति नव्याः । एवमस्यां प्रस्तुतस्य निगरणेनाप्रस्तुताध्यवसानादुत्कर्षोक्तौ चमत्कारातिशयः, यथा 'लतामूले लीनो हरिणपरिहीनो हिमकरः स्फुरत्ताराकारा गलति जलधारा कुवलयात् । धुनीते बन्धूकं तिलकुसुमजन्मापि पवनो वहिर्द्वारे पुण्यं परिणमति कस्यापि कृतिनः' । अत्र मुखादीनां निगीर्णानां हिमकराद्यध्यवसानेनोत्कर्षातिशयः । नव्यास्तु कार्यकारणयोः पौर्वापर्यविपर्ययेऽप्यतिशयोक्तिमिच्छन्ति, यथा 'हृदयमधिष्ठितमादौ मालत्याः कुसुमचापवाणेन । चरमं रमणीवल्लभ लोचनविषयं त्वया भजता' इत्यादौ । स्वमतेऽत्र वक्ष्यमाणहेत्वलङ्कार एव ॥ २१९ ॥

अलङ्कारान्तराणामप्येकमाहुः परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥ २२० ॥

॥ इत्यतिशयोक्तिचक्रम् ॥

अस्या अलङ्कारोत्तमत्वं व्याकरोति । अलङ्कारेति । वागीशमहितां वृहस्पतिनापि प्रशंसितां वाल्मीक्यादिमहाकवि-

भिराहृतां वा इमामतिशयाक्कयामुक्तिमतिशयोक्तिम् अलङ्कारान्तराणामप्येकमद्वितीयं परायणमवलम्बनमाहुः प्राक्तननिबन्धार इति शेषः। प्रस्तुतोत्कर्षातिशयरूपाया अस्या एव वैचित्र्यरूपत्वात् सर्व्वत्राव्यभिचारित्वाच्च अलङ्कारान्तराणामुपजीव्यत्वम् एतदभावे च वैचित्र्याभावेन विद्यमानानामप्युपमादीनां नालङ्कारत्वं, यथा 'गौरिव गवय इत्यादौ' यदुक्तं। 'सैव सर्व्वत्र वक्रोक्तिरनयार्थो विभाव्यते। यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनया विना' इति। अन्यच्च, 'कस्याप्यतिशयस्योक्तिरित्यन्वर्थविचारणात्। प्रायेणामी अलङ्कारा भिन्ना नातिशयोक्तितः' इति। एवं सर्व्वत्रैवातिशयोक्तिसद्भावेऽपि वैचित्र्यान्तरेणालङ्कारान्तरव्यपदेशाः, वैचित्र्यान्तराभावे त्वतिशयोक्तिव्यपदेश इति बोध्यम्। अलङ्कारान्तराणामप्युपजीव्य उक्तोदाहरणगतालङ्काराणां समुच्चयः, तथाहि मल्लिकामालभारिण्य इत्यादौ सामान्यं, स्तनयोर्जघनस्यापीत्यादौ सन्देहः, निर्णेतुं शक्यमस्तीत्यादौ निश्चयः। संशयनिश्चययोरुपमानोपमेयविषयकत्वाभावेऽप्यलङ्कारत्वं बहुभिर्वैचित्र्यजनकत्वादङ्गीकृतम्। अहो विशालमित्यादावधिकम्। एते चालङ्कारा अन्यैरुक्ता ज्ञातव्याः ॥ २२० ॥

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥ २२१ ॥

अथोत्प्रेक्षां लक्षयति। अन्यथैवेति। चेतनस्येतरस्याचेतनस्य

वा प्रस्तुतविषयस्यान्यथा स्वाभाविकत्वेनैव स्थिता वृत्तिर्गुणक्रियादिवर्त्तनं यथावत्स्वरूपञ्च, अन्यथा प्रकारान्तरेण अप्रस्तुतस्वरूपत्वेनच यच वैचित्र्ये, यद्वैचित्र्यबोधायेत्यर्थः, उत्प्रेच्यते सम्भाव्यते तां तादृशवैचित्र्यरूपामुत्प्रेचां विदुरित्यन्वयः। अधिकरणसाधनोऽयमुत्प्रेक्षाशब्दः। यन्त्विति पाठेतु क्रियाविशेषणं तदा भावसाधनः। तदुक्तं प्रकाशकृता, 'सम्भावनमथोत्प्रेचेति'। सम्भावना चोत्कटकोटिकः संशयः, अप्रस्तुतकोटेरुत्कटत्वञ्च प्रस्तुतकोटेर्निगरणेन, निगरणञ्च क्वचिदनुपादानेन क्वचिदुपात्तस्याप्यधःकरणेन च। यदुक्तं 'विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः। अधःकरणमात्रेण निगीर्णत्वं प्रचचते' इति। उपमेये उपमानसम्भावनमेवोत्प्रेचेति नव्यैरुक्तं तत्प्राचीनानामनभिमतमित्यग्रे स्फुटीभविष्यति। अस्याश्चोत्प्रेचणीयार्थानां जातिक्रियागुणद्रव्यात्मकत्वेन तेषाञ्च भावाभावाभिमानेन जात्यादिचयस्य च स्वरूपफलहेतुरूपत्वेन द्रव्यस्य स्वरूपमात्रगत्वेन च उत्प्रेचानिमित्तस्य गुणक्रियारूपत्वेन एवं प्रकारान्तरेण च बहवो भेदा अन्यैरुक्ता ग्रन्थगौरवभियाच नोक्ताः स्वयमनुसन्धातव्याः॥ २२१॥

मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः।
मन्ये मार्त्तण्डगृह्याणि पद्मान्युद्धर्त्तुमुद्यतः॥ २२२॥
स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम्।
तद्वैरनिष्क्रयायेति कविनोत्प्रेच्य वर्ण्यते॥ २२३॥

चेतनस्येतरस्य चेत्युक्तं तत्र चेतनवृत्त्युत्प्रेक्षामुदाहरति। मध्यन्दिनार्केति। मार्त्तण्डरश्मिभिः सूर्य्यस्य पक्षात्, पक्षः परतन्त्रेषु ग्रह इति कः। उद्धर्त्तुमुन्मूलयितुम्, अत्र सूर्य्यतप्तस्य चेतनस्य गजस्य स्नानपानाद्यर्थकतया स्थिता सरस्यवगाहनक्रिया सूर्य्यपक्षपद्मोद्धरणार्थकत्वेनोत्प्रेक्षिता, तत्र च मध्यन्दिनार्कसन्तप्त इति मध्यन्दिनार्ककर्त्तृकसन्तापक्रिया निमित्तं, मन्ये इति पदमुत्प्रेक्षाद्योतकम्। उत्प्रेक्षाविषयत्वाच्च तादृशसरोऽवगाहनमुपात्तं। किञ्चात्र सन्तापकस्य सूर्य्यस्य प्रतीकाराशक्तेन गजेन सूर्य्यपक्षपद्मोद्धरणादन्येककः प्रत्यनीकालङ्कारोऽपि। यदुक्तं, 'प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि। तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः' इति। तदनयोः सङ्करः॥ २२२॥

अत्र लक्षणं सङ्गमयति। स्नातुमिति। वैरनिष्क्रयाय सन्तापकत्वाद्वैरिणः सूर्य्यस्य प्रत्यपकाराय॥ २२३॥

कर्णस्य भूषणमिदं ममायतिविरोधिनः।
इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलङ्घ्यते॥ २२४॥
अपाङ्गभागपातिन्या दृष्टेरंशुभिरुत्पलम्।
स्पृश्यते वा नवेत्येवं कविनोत्प्रेक्ष्य वर्ण्यते॥ २२५॥

अचेतनवृत्त्युत्प्रेक्षामुदाहरति। कर्णस्येति। इदमुत्पलं मम आयतिर्दीर्घता तस्या विरोधिनो निवारकस्य कर्णस्य भूषणम् इति अस्माद्धेतोः। प्राय इत्युत्प्रेक्षाद्योतकं। दृष्ट्या चक्षुषा

विलङ्घते स्वांशुसम्पर्कशोभार्थ्यत इव। अत्राचेतनायादृष्टेरंशूनां सन्निहितत्वेन कर्णोत्पले स्पर्शाख्यो गुणः कर्णोत्पलोत्सारणत्वेन सम्भावितः स चावानपाङ्गः॥ २२४॥

अपाङ्गेति। अपाङ्गभागपातिन्या आकर्णान्तविश्रान्तायाः। स्पृश्यते वा नवेत्यनेन असन्नपि विषयश्चमत्कारप्रतिपिपादयिषया विषयिणा केनचित् कविभिरुत्प्रेक्षणीयो भवतीति सूचितम्। एवमुदाहरणद्वये चेतनाचेतनयोः प्रस्तुतयोः क्रियागुणौ उत्प्रेक्षाविषयौ, प्रस्तुतस्वरूपस्य विषयत्वं यथा, ‘ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति। सपताकः कनकमयो विजयस्तम्भः स्मरस्येव’। अत्र प्रस्तुतस्योरोः स्वरूपमेव विषयः नतु गुणादिः, विषयीच विजयस्तम्भः, नचेयमुपमा स्मरसम्बन्धिविजयस्तम्भस्याप्रसिद्धत्वेनोपमानत्वाभावात् प्रसिद्धस्यैव तथात्वात् उपमाद्योतकेवशब्दस्य चोपमानोत्तरत्वनियमेनाच तदभावात् सम्भावनाया एव स्फुटं प्रतीयमानत्वेनौपम्यप्रतीतेरभावाच्च। इयञ्चोत्प्रेक्षा द्योतकाप्रयोगेऽपि क्वचिद्भवति यथा ‘तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणिने स्थानं न दत्तमिति लज्जया’। अत्र स्तनयोरचेतनतया लज्जाया असम्भवेन लज्जयेवेत्युत्प्रेक्षा, इयं प्रतीयमानोत्प्रेक्षेत्याहुर्विश्वनाथादयः॥ २२५॥

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम्॥ २२६॥

केषाञ्चिदुपमाभ्रान्तिरिवश्रुत्येह जायते ।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥ २२७ ॥

मन्ये शङ्के इत्यादिपदप्रयोगएवोत्प्रेक्षा इवप्रयोगे तु सर्व्वत्राप्युपमैवेति प्रत्ययभेदपर्य्यन्तमन्यरा ऋजुधियः, उपमेये उपमानस्यैवोत्कटः संशय उत्प्रेक्षेत्यन्ये, मतद्वयञ्चैतद्दूषयन्नाह । लिम्पतीवेति । श्लोकार्द्धमिदं मृच्छकटिकप्रकरणीयम्, अस्योत्तरार्द्धन्तु, 'असत्पुरुषसेवेव दृष्टिर्विफलतां गता' इति । इतीदमपीति प्राचीनपद्यार्द्धमपीत्यर्थः । भूयिष्ठमतितरां, तत्त्वांशिकत्वेन । उत्प्रेक्षालक्षणान्वितमिति, तथाहि अचेतनस्य तमसो व्यापनरूपो विषयो लेपनत्वेन सम्भावितः, एवं वर्षतीवाञ्जनं नभ इत्यत्र निरालोकप्रवृत्तस्तमसः सम्पातो नभःकर्त्तृकाञ्जनवर्षणत्वेनेति, उभयत्र विषयस्यानुपादानम् ॥ २२६ ॥

केषाञ्चिदिति । केषाञ्चिदृजुधियां नतु सर्व्वेषाम् उपमाभ्रान्तिरत्रोपमालङ्कार इति भ्रमः, तत्र हेतुः इवश्रुत्येति कमलमिव मुखमित्यादावित्रापीवशब्दस्योपमाद्योतकत्वादिति भावः । नन्वत्रोपमाप्रतीतिस्तात्त्विक्येवास्तां कथं भ्रान्तिरित्यत्राह । नोपमानमित्यादि । तिङन्तेन तिङन्तपदप्रतिपाद्येन कृत्वा उपमानं कस्यचित् प्रस्तुतस्योपमितिर्न भवति, तिङन्तपदप्रतिपाद्यस्य साध्यत्वात् सिद्धस्यैवोपमानत्वसम्भवादित्याप्तभाषितम्, आप्ताः प्रामाणिका भाष्यकारादयस्तेषां वचनमतिक्रम्य अनालोच्य उपमाभ्रान्तिर्जायत इत्यन्वयः । तदुक्तं ।

सिद्धमेव समानार्थमुपमानं विधीयते। तिङन्तार्थस्तु साध्यत्वादुपमानं न जायत इति। अयमाशयः, प्रकृते हि उपमानोपमेयतायामुपमेयस्य वर्णनीयत्वेन शब्दोपात्तत्वस्यावश्यकतया अनुपात्तस्य प्रस्तुतस्यापि व्यापनस्योपमेयत्वाभावेनोपात्तस्य तमस एव तथात्वस्यावश्यवक्तव्यत्वात् तस्य लिम्पतीति तिङन्तार्थ उपमानमिति यद्वक्तव्यं तत्तिङन्तार्थस्य साध्यत्वेनोपमानत्वाभावस्य प्रामाणिकवचनप्रतिपन्नत्वादविचारविजृम्भितमिति ॥ २२७ ॥

उपमानोपमेयत्वं तुल्यधर्म्मव्यपेक्षया ।
लिम्पतेस्तमसश्चासौ धर्म्मः कोऽत्र समीक्ष्यते ॥ २२८॥

इत्थमुपमाभ्युपगमे वचनप्रमाणविरोधं प्रतिपाद्य युक्तिविरोधमपि दर्शयति। उपमानोपमेयत्वमिति। तुल्यधर्म्मव्यपेक्षया प्रस्तुताप्रस्तुतयोः समानगुणादिरूपधर्म्मसापेक्षतया उपमानोपमेयत्वं भवति अन्यथातिप्रसङ्गः स्यादिति, प्रकृते तदभावं दर्शयति। लिम्पतेरिति। लिम्पतेः लिम्पतीतितिङन्तार्थस्य, पदस्यापि नामत्वानुकरणात् षष्ठी। लिम्पतेर्लिपधातोरित्यर्थस्तु न सम्यक् वर्णात्मकस्य धातोरन्धकारोपमानत्वस्यान्येनापि वक्तुमयोग्यत्वात्। कोऽत्र समीक्ष्यत इति न कोऽपीत्यर्थः। तस्मात् तमोलिम्पत्यर्थयोः साधारणधर्म्माभावात् कथमुपमेयोपमानभाव इति ॥ २२८ ॥

यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः।
स एव धर्म्मो धर्म्मी चेत्युन्मत्तोऽपि न भाषते ॥ २२९ ॥

ननु तमो लिम्पतीत्यर्थो लेपनमेव साधारणधर्म्मोऽस्तु तमसोऽप्यावरकतया गौणलेपनवत्त्वात् धर्म्मिणोर्बिम्बप्रतिबिम्बतया च साधारण्याभ्युपगमादित्याशङ्क्याह। यदीति। यदि लेपनमेव इष्टं साधारणधर्म्मतयाभ्युपगतं तर्हि लिम्पतिर्लिम्पतिपदप्रतिपाद्योऽपरो विशेष्यतामापन्नो धर्म्मिभूतोऽर्थः कः न कोऽपीत्यर्थः, वैयाकरणनये व्यापारस्यैव विशेष्यतया तिङन्तपदप्रतिपाद्यत्वात्। तदुक्तं 'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्' इति। तथाच बोधः, देवदत्ताद्याश्रयकलेपसंयोगफलकलेपनमिति। एवञ्चात्र धर्म्मान्तराप्रतीतेर्लेपनस्यैव धर्म्मित्वं नतु धर्म्मत्वमिति। अत्रापि लिम्पतिरित्यनुकरणे प्रथमा। ननु प्रामाणिकप्रयोगेऽस्मिन्निवपदप्रतिपादिताया उपमाया निर्वाहणस्यावश्यकतया एकस्यैव लेपनव्यापारस्य धर्म्मत्वं धर्म्मित्वञ्चास्तु यथाऽनन्वयोपमायामेकस्योपमानत्वमुपमेयत्वञ्चेत्यत आह। स इति। स एव लिम्पतिरेव लिम्पतिपदप्रतिपाद्यलेपनव्यापार इत्यर्थः। उन्मत्तोऽपीति उन्मत्तैरप्येकस्मिन्नेकस्य धर्म्मत्वं धर्म्मित्वञ्च नोच्यते, का कथा सहृदयानाम्, अनन्वयोपमायान्तु एकस्योपमानोपमेयत्वमनन्यसदृशत्वप्रतिपादनार्थं वैचित्र्यकम्। इदन्तु मितान्तनिर्बुद्धित्वविलसितम्। तस्मादत्र धर्म्माभावात् नैव दुरवस्था जागर्त्तीति भावः ॥ २२९ ॥

**कर्त्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।**
**स्वक्रियासाधनव्यग्रो नालमन्यदपेक्षितुम् ॥ २३० ॥**

नन्वस्तु नाम धर्म्मित्वमेव लेपनव्यापारस्य, कर्त्तुरप्याश्रयतया तिङा बोधितत्वात्तेनैवोपम्यनिर्व्वाहो जायतामित्यत्राह। कर्त्तेति। कर्त्ता तिङ्प्रतिपाद्यो व्यापाराश्रयः यदि उपमानं स्यात् तमस उपमानत्वेनोच्येत तर्हि तदपि न सम्यगिति शेषः। यतोऽसौ कर्त्ता क्रियापदे लिम्पतीतिक्रियापदेन विशेष्यतया प्रतिपाद्ये लेपनव्यापारे न्यग्भूत उपसर्जनीभूतः तिङर्थस्तु विशेषणमित्युक्तेः। लेपनव्यापारे विशेषणतयान्वितस्य कर्त्तुः कथमुपमानतया तमसा सहान्वयित्वमिति भावः। नन्वस्तु नाम कर्त्तुः स्वव्यापारे विशेषणतयान्वितत्वम् एकत्रान्वितस्याप्यन्यत्रान्वितत्वस्य बहुषु दर्शनादित्याशङ्काह। स्वक्रियेति। स्वक्रिया स्वाश्रयकलेपनव्यापारस्तस्याः साधनं सिद्धिः विशेष्यतया बोध इत्यर्थः तत्र व्यग्राव्यापृतः प्रकारतामापन्न इति यावत्, तादृशः सन् अन्यत् पदार्थान्तरम् अपेक्षितुं स्वप्रकारकान्वयबोधे विशेष्यत्वेनाकाङ्क्षितुं पदार्थान्तरविशेष्यकबोधे पुनः प्रकारो भवितुमिति यावत् नालं न समर्थः। अयम्भावः एकत्रान्वितस्यान्यत्रान्वितत्वं युज्यतएव, परन्त्वेकत्र विशेषणतयान्वितस्यान्यत्रापि विशेषणतयैवान्वयो न युज्यत इति, प्रकृते तु स्वव्यापारे विशेषणतयान्वितस्य कर्त्तुरुपमानत्वाभ्युपगमे उपमेये तमस्यपि विशेषणत्वेनैवान्वितत्वमभ्युपेयमिति नैतद्युज्यतएव। एतदेवोक्तं दीधितिकृता 'इतरविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयायोगात्' इति। तस्मान्नात्र कर्त्तुरप्युपमानत्वमिति भावः॥ २१०॥

यो लिम्पत्यमुना तुल्यं तम इत्यपि शंसतः ।
अङ्गानीति न सम्बद्धं सोऽपि मृग्यः समो गुणः ॥ २३१॥

ननु शाब्दबोधापरविशेष्यकान्वयबोधवादिवैयाकरणनये कर्त्तुरुपसर्जनतयोपमानत्वं प्रथमान्तमुख्यविशेष्यकान्वयबोधवादितार्किकनये तु कोऽदोषेत्याशङ्क्याह। य इति। यो लिम्पत्यमुना तुल्यमिति। अत्र यददःपदयोः प्रयोग उपमानोपमेयभावस्फुटीकरणाय, वस्तुतस्तु लेपनकर्त्तेव तम इत्येव बोधः, अन्यथा वाक्यभेदापत्तेः प्रकृतप्रयोगे च यददसोरनुपादानात् उपात्तशब्दार्थानामेव शाब्दबोधविषयत्वनियमात्। इत्यपि शंसत इति अत्र, मतो इत्यध्याहार्य्यम्, इति शंसतो वदतो मतेऽपीत्यर्थः, अङ्गानीति न सम्बद्धमिति अङ्गानीति कर्म्मपदं न सम्बद्धम् उपमेयतमःकर्त्तृकतदन्वयोपयोगिक्रियान्तराभावादुपमेयांशेऽन्वितं न भवति। नन्वङ्गकर्म्मकलेपनकर्त्तेव तम इत्येव बोधोऽस्तु किमङ्गानीत्यस्योपमेयतमस्यनन्वितत्वाचिन्तनेनेत्याह, सोऽपि मृग्यः समोगुण इति सोऽपि कर्म्मतापन्नाङ्गरूपो गुणो धर्म्मोऽपि समः साधारणत्वेन मृग्योऽन्वेष्टव्यः अवश्यं वक्तव्य इत्यर्थ, अन्यथा साधारणधर्म्माप्रयोगेण साधर्म्म्याप्रतीतेः कथमुपमानोपमेयभाव इति भावः। तमोगुण इति पाठे तमोगुणस्तमोधर्म्मत्वेन मृग्यः इत्यन्वयः। नचाङ्गकर्म्मकलेपनमेव द्वयोः साधारणधर्म्मोऽस्तु तस्य चोपमानांशे मुख्यत्वमुपमेयांशे तु गौणत्वं विम्बानुविम्बतयापि धर्म्मस्य सा-

धारणाभ्युपगमादिति वाच्यं, तादृशलेपनस्योपमानकर्त्रुपम-र्ज्जनत्वेनोपमेयतमस्यान्वयायोगात् । अपिच साधारणा हि गुण-क्रियादयो धर्माः प्रथममुपमेयगतत्वेनैवान्वयबोधविषयता-मापद्यन्ते पर्यालोचनया तूपमानगतत्वेन प्रतीयन्त इति तेषां साधारण्यं, प्रकृते तूपमानगतत्वेन लेपनस्यान्वयबोध इत्युप-मानतावच्छेदकतयोपमानशरीरत्वमेव नतूपमानोपमेययोः साधारणधर्मत्वमिति विवेचनीयम् ॥ २३१ ॥

यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते ।
न तथा लिम्पतौ लेपादन्यदत्र प्रतीयते ॥ २३२ ॥

ननु माभूदत्र लेपनस्य साधारणधर्मत्वं धर्माप्रयोगाल्लु-प्तोपमैवेयमस्त्वित्यत्राह । यथेन्दुरिवेति । इति अत्र । कान्तिः साधारणधर्मभूतं सौन्दर्य्यं यथा प्रतीयते वाचकाप्रयोगेऽपि सुन्दरत्वेन प्रसिद्धस्येन्दोरुपमानत्वाद्गम्यते, तथा, लिम्पतौ लिम्पतिपदघटितप्रयोगे लेपनकर्त्तर्य्युपमाने सतीति वा, लिम्पतेरिति पाठे तु लिम्पतीत्युपमानपदप्रयोगादित्यर्थः । लेपनादन्यत् उपमितिप्रयोजकसाधारणधर्मान्तरं न प्रतीयते, उपमानतावच्छेदकतया ज्ञायमानलेपनस्य तु उपमानमात्रा-न्वितत्वान्न साधारणधर्मत्वमिति पूर्व्वमेवोक्तम् । अयम्भावः साधारणधर्माप्रयोगेऽप्युपमितिरभ्युपगम्यतएव, परन्तु तत्रो-पमेयोपमानयोः स्फुटसादृश्यत्वमपेक्षणीयं यथेन्दुरिव ते वक्त्र-मित्यादौ, प्रकृते तु तमोलेपनकर्त्त्रोर्न तथात्वमिति साधारण-धर्माभावान्नात्रोपमासम्भव इति ॥ २३२ ॥

तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः।
अङ्गकर्म्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम्॥ २३३॥

इत्थं विपक्षमते दोषदानमुपसंहरन् स्वमतं द्रढयति। तदुपेति। तत्तस्मादेवमुपमाभ्युपगमस्य सदोषत्वादित्यर्थः, अङ्गकर्म्मा तथा ध्वान्तकर्तृको लिम्पतिर्लिम्पतिपदप्रतिपाद्या लेपनक्रिया पुंसा कविनिबद्धेन वक्त्रा उत्प्रेक्ष्यते सम्भाव्यते इति इष्यतामकामेनाप्यङ्गीक्रियतामित्यन्वयः, ननु विषयाभावे विषयिभूतायास्तथाविधविशिष्टलेपनक्रियायाः कथमुत्प्रेक्षणीयत्वं संशयविशेषरूपाया उत्प्रेक्षायाः कोटिद्वयविषयकत्वनियमादिति विषयं दर्शयन् विषयिभूतं लिम्पतिं विशिनष्टि उपश्लेषणार्थ इति उपश्लेषणं तमःकर्तृकव्यापनम् अर्थः स्वविषयिकोत्प्रेक्षाया विषयो यस्य सः। अयमर्थः, प्रस्तुतोऽर्थस्तावद्विषयः तत्र सम्भाव्यमानोऽध्यवसीयमानो वाऽप्रस्तुतोऽर्थो विषयी, प्रकृते तमःकर्तृकोऽङ्गव्यापनमुत्प्रेक्षायाविषयः, दृशलेपनं विषयीति ततश्च प्रस्तुतं तमोव्यापनं तादृशलेपनत्वेनोत्प्रेक्ष्यते न तूपमानेन तेनोपमीयते इति। उत्प्रेक्ष्यत इत्यत्र क्वचिदुत्प्रेक्षितुमिति क्वचिच्चोत्प्रेक्षितमिति पाठद्वयं न सम्यक्॥ २३३॥

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥ २३४॥
॥ इत्युत्प्रेक्षाचक्रम्॥

ननु माभूदत्रोपमा, इवप्रयोगे कथमुत्प्रेक्षापीत्यत आह। मन्ये इति। व्यज्यते द्योत्यते। तादृश उत्प्रेक्षाद्योतकः। द्योतकाप्रयोगे तु अन्वयबोधानुपपत्त्या सम्भावनोत्थाने प्रतीयमानोत्प्रेक्षेति पूर्व्वमुक्तम्॥ २३४॥

हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम्।
कारकज्ञापकौ हेतू तौ चानेकविधौ यथा॥ २३५॥

हेतुः सूक्ष्मोलवः क्रम इत्यनेनोद्दिष्टानां हेतुसूक्ष्मलवानामलङ्कारत्वं भामहप्रभृतयो नेच्छन्ति यथा 'हेतुश्च सूक्ष्मलेशौ च नालङ्कारतया मताः। समुदायाभिधेयस्य वक्रोक्त्यनभिधानतः' इति। तेषामयमभिप्रायः निर्हेतुताया दोषत्वाभिधानाद्धेतुहेतुमद्भावोऽन्वयोपयोगितया सुतरामपेक्षणीय इति नास्यालङ्कारत्वम्। एवमिङ्गिताकाराभ्यामभिप्रेतार्थप्रत्यायने वाच्यस्य कश्चमत्कार इति सूक्ष्मस्यापि नालङ्कारत्वं। तथा स्वयमेव प्रकाशितस्य पुनर्निगूहनेऽप्रकृतिरेव किं पृथग्लेशस्यालङ्कारत्वमिति, इदमनुभवसिद्धवैचित्रविशेषानवबोधनिबन्धनं प्राचीननिबन्धविरुद्धञ्चेति मतमेतत् कटाक्षयन् त्रयाणामेकत्र निर्द्देशपूर्व्वकं वैचित्रविशेषात्मकत्वादलङ्कारोत्तमत्वमाह। हेतुश्चेति। लेशो लवसंज्ञयोद्देशवाक्ये उक्तः। उत्तमभूषणं नतु भूषणमात्रम्। उत्तमेति विपक्षाणामसहृदयत्वप्रतिपादनाय। यस्योत्तमालङ्कारत्वं तस्यालङ्कारत्वं सिद्धमेवेति भावः। तत्र प्रथममुद्देशक्रमप्राप्तत्वान्निरूपणीयस्य

हेत्वलङ्कारस्यातिप्रसिद्धत्वाल्लक्षणमनभिधाय भेदान् दर्शयति। कारकज्ञापकाविति। लक्षणन्तूक्तमाग्नेये। 'सिषाधयिषितार्थस्य हेतुर्भवति साधकः। कारको ज्ञापक इति द्विधासोऽप्युपजायते। प्रवर्त्तते कारकाख्यः प्राक् पश्चात् कार्य्यजन्मतः। पूर्व्वः शेष इति ख्यातस्तयोरेव विशेष्यता। कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमादविनाभावदर्शनात्। ज्ञापकस्य च भेदोक्तिर्विद्या पूर्व्वोक्तिदर्शनात्' इति। एवञ्च सिषाधयिषितार्थसाधको हेतुरिति लक्षणं, सिषाधयिषितोऽर्थश्च क्रियादिरूपं वस्तु ज्ञानञ्चेति द्विविधः। तत्र पूर्व्वस्य साधकः कारकः, द्वितीयस्य ज्ञापक इति, कारकज्ञापकयोर्लक्षणमुक्तं भोजराजेन। 'यः प्रवृत्तिं निवृत्तिञ्च प्रयुक्तिञ्चान्तराविशन्। उदासीनोऽपि वा कुर्य्यात् कारकं तं प्रचक्षते। द्वितीयाच तृतीयाच चतुर्थी सप्तमीच यम्। क्रियानाविष्टमाचष्टे लक्षणं ज्ञापकस्य सः' इति। अनयोरपि प्रभेदा बहव उदाहरणेषु ज्ञातव्या इत्याह तौचानेकविधाविति। अनेनैव हेत्वलङ्कारेणान्यैरुक्तस्य काव्यलिङ्गस्य, कार्य्यकारणभावेऽर्थान्तरन्यासस्यानुमानस्य च संग्रह इति न ते पृथग् दर्शयिष्यन्ते। विश्वनाथस्तु हेतुहेतुमतोरभिन्नतयोपन्यासो हेतुरित्याह। यथा 'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह' इति, अयञ्च हेतुः स्वमतेऽतिशयोक्तिरेव॥ २३५॥

अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः।
उत्पादयति सर्व्वस्य प्रीतिं मलयमारुतः॥ २३६॥

प्रीत्युत्पादनयोग्यस्य रूपस्यात्रोपबृंहणम् ।
अलङ्कारतयोद्दिष्टं, निवृत्तावपि तत्समम् ॥ २३७ ॥

तत्र कारकहेतुमुदाहरति, अयमिति । आन्दोलिता मन्दमन्दं चालिताः प्रौढाः वसन्तर्त्तौः परिणामेन बहुलीभूताः अप्रौढेति पाठे वसन्तप्रारम्भेणाङ्कुरप्राया इत्यर्थः, चन्दनद्रुमाणां पल्लवा येन सः । अनेन मलयमारुतस्य मान्द्यं सौगन्ध्यं शैत्यञ्च प्रतिपादितम् । अत्र मलयमारुतः प्रीत्युत्पादनक्रियायाः कारकः तस्य चान्दोलितेत्यादिविलक्षणविशेषणविशिष्टतया निर्द्दिशाच्चमत्कारातिशयः सहृदयहृदयानुभवसिद्ध इत्यलङ्कारता अन्यथा न तथात्वमिति यथा गौश्चरति मृगो धावतीत्यादौ । विपचाणान्त्वत्र स्फुटमपि प्रतीयमानं वैचित्रमपश्यतां गजनिमीलिकैवेत्येतदेवाह । प्रीत्युत्पादनेति । रूपस्य कर्तुस्तथाविधविशिष्टस्वरूपस्य उपबृंहणं वैचित्रजनकतयोपन्यासः । अलङ्कारतयोद्दिष्टमिति वैचित्रस्य स्फुटं प्रतीयमानत्वादिति भावः । इदञ्चोत्पादनक्रियायाः प्रवृत्तावुदाहृतं निवृत्तावेवमुदाहर्त्तव्यमित्याह । निवृत्तावपीति । तत्समं क्रियाप्रवृत्तिसमानं । यथा 'मुग्धे तव मुखामोदलोलुपो मधुपो भ्रमन् । कर्णिकाकमलं फुल्लमपि नाभिसरत्ययम् । अत्राभिसरणक्रियाया निवृत्तिः । एवं प्रयुक्तावुदासीनतायाञ्च बोध्यम् ॥ २३६ ॥ २३७ ॥

चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान्।
पथिकानामभावाय पवनोऽयमुपस्थितः॥ २३८॥
अभावसाधनायालमेवम्भूतो हि मारुतः।
विरहज्वरसम्भूतमदनाग्न्यातुरे जने॥ २३९॥

पूर्व्वोदाहरणे प्रीत्युत्पादनक्रियायाः साधकस्य हेतुत्वं दर्शितं, तत् किं सर्व्वत्र क्रियाया एव साधको हेतुरिति शङ्कां निरस्यन्नुदाहरणान्तरं दर्शयति। चन्दनेति। चन्दनारण्यमाधूय ईषत्कम्पयित्वा, एतेन सौगन्ध्यं मान्द्यञ्च प्रतिपादितं। स्पृष्ट्वा मलयनिर्झरानित्यनेन च शैत्यम्। अभावाय ध्वंसाय॥२३८॥

अभावेति। एवम्भूतः सौगन्ध्यादिगुणयुक्तः, तेषामेवोद्दीपकतया पथिकाभावं प्रति कारणतावच्छेदकत्वात्। हि यतः विरहज्वरे सम्भूतः प्रादुर्भवन् यो मदन एवाग्निस्तेनातुरे रुग्णे जने, न तत्र करुणा हेतुरित्यादिवदत्र षष्ठ्यर्थे सप्तमी तस्याः प्रतियोगित्वमर्थः तस्य चाभावेत्यनेनान्वयः। अभावसाधनायालमिति अलं योग्यः, उपस्थितिदारेति शेषः। ततश्चाभावस्यापि साधको हेतुर्भवतीति भावाभावसाधकतया हेतोर्द्वैविध्यं बोध्यम्, एतेन क्रियायाः साधको हेतुरिति यद् भोजराजेन क्रियाया एव साध्यत्वमुक्तं तन्नादरणीयम् अभावादेरपि साध्यत्वसम्भवात् अतएवाग्नेये 'सिषाधयिषितार्थस्य हेतुर्भवति साधकः' इत्यनेन सिषाधयिषितार्थत्वेन सामान्यतः पदार्थमात्रस्यापि साध्यमानत्वं दर्शितमिति केचित्। वस्तु-

तस्तु अभावायोपस्थित इति निमित्ततयाऽभावविशिष्टाया उपस्थितिक्रियाया एव साध्यत्वम् अभावसाधनायेत्यभावस्य साध्यत्वोक्तिस्तु साध्यतावच्छेदकतया परम्परया, यत्र तु क्रियापदं नास्ति तत्र तदध्याहर्त्तव्यमेव क्रियारहितस्य वाक्यत्वाभावात् उक्तञ्च 'यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयोक्तव्यः' इति। एवञ्च सर्व्वत्र कर्म्मशून्ये प्राप्यकर्म्मणि च क्रियाया एव क्वचित् केवलायाः क्वचिद्विशिष्टायाः साध्यत्वं ज्ञेयम्॥ २३९ ॥

निर्वर्त्त्ये च विकार्य्ये च हेतुत्वं तदपेक्षया।
प्राप्ये तु कर्म्मणि प्रायः क्रियापेक्षैव हेतुता ॥ २४० ॥

एवमुदाहरणद्वये क्रियापेक्षयैव हेतुत्वं दर्शितं क्वचित्तु कर्म्मापेक्षयापि भवतीत्याह। निर्वर्त्त्ये चेति। निर्वर्त्त्ये च विकार्य्ये च कर्म्मणीति शेषः। तत्र निर्वर्त्त्यं पूर्व्वमसदेव कर्त्तुः क्रिययोत्पाद्यमानं, सदेव वाऽलक्षितं प्रकाश्यमानमिति द्विविधं, यथा कटं करोति पुत्रं प्रसूते इति। विकार्य्यं कर्त्तुः क्रियया सदेव पूर्व्वरूपस्योच्छेदेनानुच्छेदेन वा अवस्थान्तरमापाद्यमानमिति द्विविधं, यथा काष्ठं दहति कुण्डलं करोतीति। यदुक्तं 'यदसज्जायते पूर्व्वं जन्मना यत् प्रकाशते। तन्निर्वर्त्त्यं, विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादिभस्मवत्। किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्' इति। तदपेक्षया निर्वर्त्त्यविकार्य्यापेक्षया तयोरेव तत्र कार्य्यत्वात्,

निर्वृत्तिविकारापेक्षयेति केचित्। अत्र तदपेक्षयैवेति न नियमः क्रियाया अपि जन्यत्वेन हेतुतानिरूपकत्वात्। प्राप्येत्विति कर्त्तुः क्रियया व्याप्तिमात्रं यत्र प्रतीयते न निष्पत्तिर्नच विकृतिस्तत् प्राप्यं। यदुक्तं 'क्रियाकृता विशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते' इति। क्रियापेक्षैवेति क्रियाया अपेक्षा यत्र सा, क्रियापेक्ष्यैवेति सयकारपाठे क्रिया अपेक्ष्या निरूपकतया अपेक्षणीया यत्रेति विग्रहः, प्राप्यकर्म्मणो जन्यत्वाभावेन निरूपकत्वाभावात् क्रियामात्रनिरूपितेत्यर्थः। जुमरनन्दिप्रभृतयस्तु अनीप्सितमपि कर्म्मभेदमिच्छन्ति यथा पापं त्यजतीति तत्रापि क्रियापेक्षितमेव हेतुत्वं, अयञ्च निवृत्तिविषयः॥ २४० ॥

हेतुर्निर्वर्त्तनीयस्य दर्शितः, शेषयोर्द्वयोः ।
दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते ॥ २४१ ॥

हेतुरिति। दर्शित इति अयमान्दोलितेत्याद्युदाहरणे इत्यर्थः, तत्र प्रीतिरूपस्य कर्म्मणो निर्वर्त्तनीयत्वात्। शेषयोर्द्वयोर्विकार्य्यप्राप्ययोः। अत्र हेतुरित्यनुषङ्गः। उदाहरणद्वन्द्वं दत्त्वा उपन्यस्य हेतुर्दर्शयिष्यत इति शेषः, अनन्तरञ्च ज्ञापको हेतुर्वर्णयिष्यते इत्यन्वयः। यद्वा शेषयोर्द्वयोः शेषकर्म्मद्वयघटितवाक्यार्थद्वयगतहेत्वोरित्यर्थः। प्रतिज्ञा चैषा शिष्याणां तात्कालिकोत्कण्ठानिवारणायेति बोध्यम्॥ २४१ ॥

उत्प्रवालान्यरण्यानि वाप्यः संफुल्लपङ्कजाः ।
चन्द्रः पूर्णश्च कामेन पान्थदृष्टेर्विषं कृतम् ॥ २४२ ॥

तत्र विकार्य्यकर्म्महेतुमुदाहरति । उत्प्रवालानीति । अत्र प्रकृतिभूतमुत्प्रवालारण्यादित्रितयं पान्थानां दृष्टेश्चक्षुषो दाहकत्वाद्विषं कृतं विषीभावरूपविकारं नीतमित्यारोपितः प्रकृतिविकृतिभावस्तत एव चमत्कारातिशयः तात्त्विके तु तस्मिंस्तदभावात्, यथा सुवर्णं कुण्डलं करोतीति ॥ २४२ ॥

मानयोग्यां करोमीति प्रियस्थानस्थितां सखीम् ।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥ २४३ ॥

प्राप्यकर्म्महेतुमुदाहरति । मानयोग्यामिति । मानयोग्यां मानाभ्यासम् । 'अभ्यासः खुरली योग्येत्यमरमाला' प्रियस्थानस्थितां प्रियत्वेनारोपितां करोमीत्यभिप्रेत्येति शेषः । बाला अप्रगल्भा तस्या एव मानशिक्षासम्भवात् । अत्र सखीमिति प्राप्यं कर्म्म तद्विषयकदर्शनक्रियापेक्षयैव बालाया हेतुत्वं तच्च तथाविधाभिप्रायसहकृतभ्रूभङ्गेत्यादिकाल्पनिकविशेषणपुरस्कृतं सच्चमत्कारविशेषं पुष्णाति ॥ २४३ ॥

गतोऽस्तमर्कोभातीन्दुर्यान्ति वासाय पक्षिणः ।
इतीदमपि साध्वेव कान्तावस्थानिवेदने ॥ २४४ ॥

अथ ज्ञापकहेतुमुदाहरति । गत इति । वासाय वासवृक्षाय, गत्यर्थयोगे कर्म्मणि चतुर्थी, इतीदमपि अस्तमिता-

र्कादिकमपि कालस्यावस्थाविशेषः प्रकृते सायंसन्ध्येत्यर्थः तस्या निवेदने साध्वेव पर्य्याप्तमेव, अत्रास्तमितार्कादयो ज्ञापकाः सायंसन्ध्याच ज्ञाप्या, ज्ञाप्यस्यच क्वचित् प्रतीयमानत्वं क्वचिच्च शब्देनोपादानमिति द्वयी गतिः, अत्र तु प्रतीयमानत्वम्, अतएव साध्वेवेत्येवकारेणानुपात्तस्य ज्ञाप्यस्य कथं ज्ञापको भवतीति शङ्का निरस्ता। सम्प्रति सन्ध्या वर्त्तते इत्युक्तौ वैचित्राप्रतीतेर्निरुक्तज्ञापकमुखेन सन्ध्याप्रतिपादनेच तत्प्रतीतेरस्यालङ्कारता॥ १४४॥

अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम्।
देहोष्मभिः सुबोधं ते सखि कामातुरं मनः॥ २४५॥

ज्ञाप्योपादाने ज्ञापकमुदाहरति। अवध्यैरिति। अवध्यैरविनाश्यैः, असाध्यैरप्रतिकार्य्यैः, देहोष्मभिर्देहतापैः। सुबोधं सुखेनानुमेयं। कामातुरं विरहव्याकुलम्। अत्र मनसः कामातुरत्वं ज्ञाप्यमुपात्तं तस्य देहतापा ज्ञापकाः, तेषाञ्च विशेषणद्वयेनातपलङ्घनादिजन्यत्वव्यावर्त्तनेन विरहासाधारण्य-प्रतिपादनभङ्ग्या वैचित्रातिशयः॥ १४५॥

इति लक्ष्याः प्रयोगेषु रम्या ज्ञापकहेतवः।
अभावहेतवः केचिद्व्याह्रियन्ते मनोहराः॥ २४६॥

इतीति। इत्येवंरूपा रम्याश्चमत्कारजनकाः प्रयोगेषु प्राचां प्रबन्धेषु ज्ञापकरूपा हेतवो लक्ष्याः स्वयं ज्ञातव्याः। एवं कारका ज्ञापकाश्च भावरूपा एव हेतवोदर्शिताः, अनन्तरं

केचिदभावहेतवः अभावरूपा हेतवो व्याह्रियन्ते उच्यन्त इत्यन्वयः ॥ २४६ ॥

अनभ्यासेन विद्यानामसंसर्गेण धीमताम्।
अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥ २४७ ॥

अभावाश्च प्रागभावप्रध्वंसान्यान्योन्याभावात्यन्ताभावभेदेन चतुर्विधाः, क्रमेण तेषां हेतुत्वमुदाहरति। अनभ्यासेनेति। धीमतां ज्ञानिनाम्। अक्षाणामिन्द्रियाणाम्। अनिग्रहेणासंयमेन। व्यसनं स्त्रीपानमृगयाद्यासक्तिः। अत्र यावद्विद्यानामभ्यासो धीमद्भिश्च संसर्गोऽक्षाणाञ्च निग्रहो न क्रियते तावद्व्यसनं जायत इति विद्याभ्यासादीनां प्रागभावा एव व्यसनं प्रति हेतवः ॥ २४७ ॥

गतः कामकथोन्मादो गलितो यौवनज्वरः।
गतो मोहश्च्युता तृष्णा, कृतं पुण्याश्रमे मनः ॥ २४८ ॥

गत इति। पुण्याश्रमे पुण्याश्रमगमने प्रव्रज्यायामित्यर्थः। अत्र पूर्व्वमुत्पन्नानां कामकथोन्मादादीनां प्रध्वंसाः पुण्याश्रमेमनोनिधानं प्रति हेतवः ॥ २४८ ॥

वनान्यमूनि न गृहाण्येता नद्यो न योषितः।
मृगा इमे न दायादास्तन्मे नन्दति मानसम् ॥ २४९ ॥

वनान्यमूनीति। गृहाश्रमाद्विरज्य वनं गतस्यानन्दोक्तिरियम्। अमूनि वनानि यथेष्टाश्रमादिशून्यान्यपि न गृहाणि

दुःखातिशयदाहत्वमभिव्यानि तस्य मानसं मन्दतीत्यन्वयः, एव-मन्येऽपि, अत्र वनादिषु गृहादीनां भेदा वनं गतस्य मानसम-न्दने हेतवः। हेतुत्वञ्चेदं न स्वरूपसत्त्वेन किन्तु ज्ञायमानत-येति बोध्यम्। अत्र सादृश्यातिशयहेतुकाभेदप्रतीतिपूर्व्वक-भेदप्रतिपादनस्यैव चमत्कारजनकत्वाद्वनगृहादीनां सादृश्य-मस्त्येव परन्तु तदविवक्षणान्नात्र निर्णयोपमा ॥ २४९ ॥

अत्यन्तमसदार्य्याणामनालोचितचेष्टितम्।
अतस्तेषां विवर्द्धन्ते सततं सर्व्वसम्पदः ॥ २५० ॥

अत्यन्तमिति। अनालोचितचेष्टितमविमृश्यकारित्वम्, अत्य-न्तमसदविद्यमानं अनालोचितचेष्टितं नास्तीत्यर्थः। अतस्तेषा-मिति, अत्रानालोचितचेष्टितस्यात्यन्ताभावः सम्पद्वृद्धौ हेतुः॥ ॥ २५० ॥

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः ॥ २५१ ॥

पूर्व्वोदाहरणत्रये भावप्रतियोगिकानामेवाभावानां हेतुत्वं दर्शितं संप्रत्यभावप्रतियोगिकस्याप्यभावस्य हेतुत्वं दर्शयन्नु-दाहरति। उद्यानेति। मञ्जरी अनुद्भिन्ना न भवति उद्भिन्नैव भवतीत्यर्थः अतस्तस्या उद्दीपकत्वात् पथिकनारीणां सतिलः सलिलाञ्जलिर्देयः मरणमुपस्थितमित्यर्थः मृतानामेव तर्पणा-ञ्जलिदानविधानात्, अत्र सहकारमञ्जर्य्युद्भेदाभावस्याभावो विरहिणीमरणहेतुत्वेन वर्णितः, अयञ्च प्रागभावाभावः, वस्तुत

उत्पादो हि प्रागभावाभाव उच्यते तेन तद्रूपस्य सहकारमञ्जरीणामुद्भेदस्य पथिकनारीणां मरणे कारणत्वं। प्रध्वंसाभावो यथा, 'पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनं पायाद्वः परिरम्भमभ्रिद्दहितुः कान्तेन कान्तं वपुः'। स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशो यस्मै सोऽच्युतनाभिपद्मवसतिर्वेधाः शिवं शंसति। अत्र नारायणनाभिपद्मरूपावासस्थानस्योपघाताभावो ब्रह्ममनोनिर्वृतिं प्रति हेतुः, सहजं वस्तुनोऽवस्थानमेव प्रध्वंसस्याभाव उच्यते। अत्यन्ताभावाभावो यथा, अत्यन्तमसदार्य्याणामित्यादौ, अत्रालोचनचेष्टितस्यात्यन्ताभावाभावः सम्यग्दिदृक्षौ हेतुः। एवमन्योन्याभावाभावोऽपि बोध्यः। अत्राभावाभावानां प्रतियोग्यादिस्वरूपत्वानभ्युपगमान्न भावहेतुत्वं बोध्यम्॥ २५१॥

प्रागभावादिरूपस्य हेतुत्वमिह वस्तुनः।
भावाभावस्वरूपस्य कार्य्यस्योत्पादनं प्रति॥ २५२॥

एवमभावस्य भावमभावञ्च प्रति हेतुत्वेन भेदान्तरं भवतीति प्रतिपादयन्नभावहेतुमुपसंहरति। प्रागभावादीति। भावाभावस्वरूपस्य भावस्वरूपस्याभावस्वरूपस्य चेत्यर्थः, तत्र पूर्व्वश्लोकेषु भावान् प्रति हेतुत्वम्, अभावं प्रति हेतुत्वन्तूह्यम्, यदा उद्यानेत्याद्युदाहरणे तथात्वं ज्ञेयं कार्य्यभूतस्य व्यज्यमानमरणस्य प्राणवायोर्देहसंयोगनाशरूपत्वात्। एवमुक्तोदाहरणेषु भावानां कारकहेतुत्वं दर्शितं ज्ञापकहेतुत्वन्तु स्वयमूहनीयम्॥ ॥ २५२॥

दूरकार्य्यस्तत्सहजः कार्य्यानन्तरजस्तथा ।
अयुक्तयुक्तकार्य्यौ चेत्यसङ्ख्याश्चित्रहेतवः ॥ २५३ ॥
तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः ।
अत्यन्तसुन्दरादृष्टास्तदुदाहृतयो यथा ॥ २५४ ॥

एवं हेतोः कारकत्वज्ञापकत्वाभ्यामभावरूपत्वेन च त्रैविध्यमुक्तं, सम्प्रति चित्रसंज्ञकं भेदान्तरमाह । दूरकार्य्य इति । दूरं देशतः कालतश्च दूरवर्त्ति कार्य्यं यस्य सः । तत्सहजः कार्य्येण सहैव जातः । कार्य्यानन्तरजः कार्य्ये जाते पश्चाज्जातः । तथा अयुक्तमनुचितं युक्तमुचितञ्च कार्य्यं ययोस्तौ, अयुक्तकार्य्योयुक्तकार्य्यश्चेत्यर्थः । असङ्ख्या बहुविधाः । चित्रहेतव इति चित्रसंज्ञका हेतव इत्यर्थः, दूरकार्य्यत्वादिनाश्चर्य्यविषयत्वादन्वर्थता, तदुक्तं भोजराजेन । 'क्रियायाः कारणं हेतुः कारको ज्ञापकस्तथा । अभावश्चित्रहेतुश्च चतुर्विध इहेष्यते' इति ॥ ॥ २५३ ॥

तेऽमी इति । गौणवृत्तिर्गौणी लक्षणा साच सारोपात्मिका साध्यवसानायां प्रस्तुतानुपादानात्, सैव व्यपाश्रयः स्वविषयकाप्रस्तुताभेदप्रतीतिजनिका येषां ते अत्र गौणवृत्तिव्यपाश्रयत्वं क्वचित् कार्य्यस्यापि भवति यथा पश्चात् पर्य्यस्येत्यादि वक्ष्यमाणोदाहरणे रागसागर इत्यत्र, अत्र हेतोस्तथात्वञ्च परम्परयेति बोध्यम् । क्वचिदुभयोरपि यथा राज्ञां हस्तारविन्दानीत्यादौ । तस्मात् गौणवृत्तिव्यपाश्रयादिति पञ्चम्यन्त-

पाठः सम्यक्। एतच्चोपलक्षणं रूप्यरूपकभावाभावेऽप्यध्यवसायमात्रविषयत्वे हेतूनामत्यन्तचमत्कारजनकत्वं बोध्यं यथा, आविर्भवति नारीणामित्यादिवक्ष्यमाणोदाहरणे। अत्यन्तसुन्दरा दृष्टा इत्युदाहरणदर्शनायां हेतुः॥ २५४॥

त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं यदङ्गने।
मुक्तं तदन्यतस्तेन सोऽप्यहं मनसि क्षतः॥ २५५॥

क्रमेण दूरकार्य्यादीनुदाहरति। त्वदपाङ्गाह्वयमिति। हे अङ्गने प्रशस्ताङ्गवति त्वदपाङ्गाह्वयं त्वदपाङ्गरूपं तेनात्र सारोपा गौणी, अन्यतः पुरुषान्तरे, तेन त्वदपाङ्गरूपेणानङ्गास्त्रेण। स लक्ष्यभूतः पुरुषः, अपिर्भिन्नक्रमे अलक्ष्यभूतोऽहमपीत्यर्थः। अत्रास्त्ररूपकारणस्य लक्ष्यवेधरूपकार्य्यमेव निकटवर्त्ति, अलक्ष्यभेदरूपन्तु दूरवर्त्त्येवेति कार्य्यस्यात्र देशतोदूरस्थता। कालतो यथा, 'अनश्नुवानेन युगोपमानमलब्धमौर्व्वीकिणलाञ्छनेन। अस्पृष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः'। अत्र बाल्य एव यौवनकार्य्यभूमिरक्षाकरणाद्धेतोर्दूरकार्य्यता॥ २५५॥

आविर्भवति नारीणां वयः पर्य्यस्तशैशवम्।
सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः॥ २५६॥

आविर्भवतीति। पर्य्यस्तं निराकृतं शैशवं येन तद्वयो यौवनमित्यर्थः। अङ्गजोमनसिजः, अङ्गं मनस्युपाये च प्रतीके चाप्रधानके। अङ्गादेशविशेषे स्यादङ्ग सम्बोधनेऽव्ययमित्युक्तेः। तेन कृत उन्मादो मनोविकारविशेषस्तत्कृतैर्विभ्रमैर्विलासैः, सहैवा-

र्विर्भवतीति अत्र नारीणां यौवनरूपं कारणं कार्य्यभूतैः पुंसां विभ्रमैः सहैव जायत इति कारणस्याशुकार्य्यकारिता प्रतिपादनाय कार्य्यप्राक्‌चणवर्त्तित्वापह्नवोविवचितः एवञ्चात्र विभ्रमाणां पश्चादुत्पद्यमानत्वं प्रागुत्पद्यमानत्वेनाध्यवसितमित्यध्यवसायव्यपाश्रयोऽत्र हेतुश्चमत्कारातिशयजनको न तु गौणीव्यपाश्रय इति बोध्यम् ॥ २५६ ॥

पश्चात्पर्य्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णोरागसागरः ॥ २५७ ॥

पश्चादिति । किरणान् पर्य्यस्योत्क्षिप्य उत्क्षिपदित्यर्थः । पश्चादुदीर्णमुदितमित्यन्वयः । प्रागेव चन्द्रमण्डलोदयात् पूर्व्वमेव, उदीर्ण उच्छलितः, समृद्ध इति क्वचित्पाठः, रागः कामाभिलाष एव सागरः । अतएवात्र कार्य्यस्यैव गौणवृत्तिव्यपाश्रयत्वं, वस्तुतस्त्वत्र चन्द्रमण्डलोदयरूपकारणस्य चिप्रकार्य्यकारिताप्रतिपिपादयिषया रागसागरोच्छलनरूपकार्य्यं पश्चाद्भाविता पूर्व्वभावित्वेनाध्यवसिता, तेनात्राध्यवसायमूल एव चमत्कारातिशयः ॥ २५७ ॥

राज्ञां हस्तारविन्दानि कुड्मलीकुरुते कुतः ।
देव त्वच्चरणद्वन्द्वरविबालातपः स्पृशन् ॥ २५८ ॥

राज्ञामिति । त्वच्चरणद्वन्द्वमेव रवेर्बालातपः । रवौत्यत्र रागेति बहुषु पाठः तत्र त्वच्चरणद्वन्द्वस्य रागो लौहित्यं स एव बालातप उद्यदादित्यरश्मिरित्यर्थः, राज्ञां हस्ता हस्तद्वन्द्वा-

न्येवारविन्दानि तानि कुड्मलीकुरुते मुद्रितानि करोति, अत्र प्रणामार्थं हस्तयोः पुटीभावे कुड्मलीभावाध्यासस्तत एव चमत्कारातिशयः। अत्र बालातपरूपहेतोररविन्दकुड्मलीभावरूपकार्य्यमयुक्तम् ॥ २५८ ॥

पाणिपद्मानि भूपानां सङ्कोचयितुमीशते।
त्वत्पादनखचन्द्राणामर्च्चिषः कुन्दनिर्मलाः ॥ २५९ ॥

पाणिपद्मानीति। कुन्दनिर्म्मलाः कुन्दकुसुमवदुज्ज्वलाः, विशेषणमिदं नखानां चन्द्रत्वारोपे हेतुः। अत्र चन्द्रकिरणरूपहेतोः पद्मसङ्कोचनं कार्य्यं युज्यत एव ॥ २५९ ॥

इति हेतुविकल्पानां दर्शिता गतिरीदृशी।
॥ इति हेतुचक्रम् ॥
इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात् सूक्ष्म इति स्मृतः॥२६०॥

हेतुमुपसंहरति। इतीति। हेतोर्विकल्पानां प्रभेदानां। गतिर्दिक्। दर्शितेति अनया दिशा अपरेऽपि हेतुप्रभेदाः स्वयं ज्ञातव्या इत्यर्थः।

अथ सूक्ष्मं लक्षयति। इङ्गितेति। इङ्गितमभिप्रायबोधकचेष्टाविष्करणम्, इङ्गितं हृद्गतोभाव इति विश्वः, आकारो रत्यादिसूचकमुखरागादिः, स्यादाकारोऽङ्गवैकृतमिति वोपालितः। ताभ्यां लक्ष्यो लक्षयितुं योग्योऽर्थः अभिलाषाद्यभ्यन्तरविषयः रहःक्रियमाणवहिर्विषयो वा सूक्ष्मः सूक्ष्माख्यालङ्कारवान्, सूक्ष्मसंज्ञाया अन्वर्थतां प्रतिपादयितुं हेतुमुपन्य-

स्यति सौक्ष्म्यादिति अर्थस्येङ्गिताकाराभ्यामेव लक्ष्यत्वेन सूक्ष्ममतिवेद्यत्वादित्यर्थः । इत्यस्यार्थस्येङ्गिताकाराभ्यां निपुणमतिलक्ष्यत्ववर्णनं सूक्ष्मं नामालङ्कार इत्यर्थः । नव्यास्तु इङ्गितेनाकारेण वा लक्षितस्य सूक्ष्मार्थस्य निपुणमतिना केनचिद्भङ्ग्यन्तरेण यत्सूचनं तत्सूक्ष्मं नामालङ्कारः सूक्ष्मार्थसूचनस्यैव चमत्कारजनकतयालङ्कारत्वादित्याहुः । तथाचोक्तं प्रकाशकृता, 'कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते । धर्म्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते' इति । कुतोऽप्याकारादिङ्गिताद्वेत्यर्थः । दर्पणकृतापि 'संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा । कयापि सूच्यते भङ्ग्या यत्र, सूक्ष्मं तदुच्यते' इति ॥ २६० ॥

कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।
अवेक्ष्य कान्तमबला लीलापद्मं न्यमीलयत् ॥ २६१ ॥
पद्मसम्मीलनादत्र सूचितो निशि सङ्गमः ।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥ २६२ ॥

तत्रेङ्गितलक्ष्यार्थमुदाहरति । कदेति । नौ आवयोः । आकीर्णे जनबहुले देशे । लीलापद्मं क्रीडार्थकमलम् । न्यमीलयत् समकोचयत् । पद्मसम्मीलनादिति । सूचितो लक्षितः । नायिकाया अभिप्रेतो निशाभाविसङ्गमरूपः सूक्ष्मोऽर्थः पद्मनीमीलनरूपेङ्गितेन किञ्चिल्लक्षित इति स्वमते लक्षणसमन्वयः । नव्यमते तु नायकस्य जिज्ञासितः सङ्केतकालरूपः सूक्ष्मोऽर्थस्तस्य भ्रूक्षेपादिनेङ्गितेन नायिकया लक्षयित्वा निशासमय-

शंसिकमलनिमीलनलीलया प्रकाशित इति। अत्र च वैचित्र्यविशेषस्य सर्व्वालङ्कारविलक्षणतया सहृदयानुभवसिद्धत्वादलङ्कारत्वमेव ॥ २६१ ॥ २६२ ॥

मदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्द्धत।
उद्दामरागतरला छाया कापि मुखाम्बुजे ॥ २६३ ॥
इत्यनुद्भिन्नरूपत्वाद्रत्युत्सवमनोरथः।
अनुक्तश्चैव सूक्ष्मत्वमभूदत्र व्यवस्थितः ॥ २६४ ॥

॥ इति सूक्ष्मम् ॥

आकारलक्ष्यार्थमुदाहरति। मदर्पितेति। उद्दामोऽत्यधिको रागो रत्युत्सवाभिलाषस्तेन तरला मनोज्ञा उद्दामरागव्यञ्जिकेत्यर्थः, कापि विलक्षणा छाया कान्तिः। अत्र नायिकाया रत्युत्सवाभिलाषरूपार्थस्य मुखच्छायावैलक्षण्यरूपाकारेण किञ्चिल्लक्ष्यत्वं प्रतिपादितम्। नव्यमतेऽप्यत्र तादृशाकारसंलक्षितस्य तादृशसूक्ष्मार्थस्य तादृशवचनभङ्ग्या बन्धुसमीपे सूचनमिति लक्षणसमन्वयः, सूचनञ्च यस्यार्थस्तं प्रत्येवेति न नियमः तस्यान्योद्देश्यकत्वस्यापि सम्भवात् अतएव प्रकाशकृता सूक्ष्मलक्षणे अन्यस्मै इत्युक्तम्। मदर्पितेत्यत्र त्वदर्पितेति क्वचित्पाठः ॥ २६३ ॥

ननु पूर्व्वोदाहरणे पद्मनिमीलनात् प्रतीयमानस्य निशिसङ्गमस्य सूक्ष्मत्वं तावदस्तु अत्र तु तादृशमुखच्छायारूपाकारः स्फुटतरमेव रत्युत्सवमनोरथं लक्षयतीति कथमर्थस्य

सूक्ष्मत्वमित्याशङ्क्योपपादयति। इत्यनुद्भिन्नरूपत्वादिति। रत्युत्सवमनोरथोऽनुद्भिन्नरूपत्वात् आकारलक्षितत्वेन स्फुटतरप्रतीयमानरूपत्वाभावात् सूक्ष्मत्वमनुसङ्गत्वापरित्यज्यैवात्र व्यवस्थितो वर्णितोऽभूदित्यन्वयः। अत्राप्यवस्थित इति क्वचित्पाठः। अयमर्थः, उद्दामरागतरला मुखच्छाया तावद्रत्युत्सवमनोरथस्यैवानुभाव इति न नियमः विषयान्तरमनोरथादिनापि तत्सम्भवादित्यनैकान्तिकत्वान्न स्फुटतरं तादृशमनोरथं लक्षयति लक्षयिता तु स्वीयविलक्षणसहृदयतासमीचीनया तया कथञ्चिल्लक्षयतीति सूक्ष्मत्वमेव रत्युत्सवविषयस्येति ॥ २६४ ॥

लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम्।
उदाहरण एवास्य रूपमाविर्भविष्यति ॥ २६५ ॥

अथोद्देशवाक्योक्तलवेतिनामान्तरं लेशं लक्षयति। लेश इति। लेशेनाल्पतया निर्भिन्नं प्रकाशितं यत् वस्तुनो रूपं स्वरूपं तस्य निगूहनं संवरणं लेशः रोमोद्भेदाद्यङ्गविकारादिना किञ्चित् प्रकाशमानस्य गोप्यविषयस्य केनचिद्व्याजेन गोपनं लेशनिर्भिन्नवस्तुनिगूहनरूपत्वाल्लेशालङ्कार इत्यर्थः। इममेव नव्या व्याजोक्तिं वदन्ति। यथा 'व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम्' इति। वक्ष्यमाणापह्नुतौ तु न लेशनिर्भिन्नवस्तुनो व्याजेनापह्नव इत्यतोऽस्य भेदः। गोप्यनिर्भेदस्य क्वचिद्गोपयितुरनवधानवचनेनापि भवति तस्य निगूहनमपि क्वचित् श्लेषेण क्वचिदश्लेषेण च। क्रमेण यथा, 'काले वारि-

धराणामपतितया नैव शक्यते स्थातुम्। उत्कण्ठितासि तरले नहि नहि सखि पिच्छिलः पन्थाः'। अत्रापतितयेति पतिं विनेत्यर्थः स्वयमेवाभिहितः पतनाभावप्रतिपादनेन निगूहितः। 'इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता। स्मरसि किं सखि! कान्तरतोत्सवं नहि घनागमरीतिरुदाहृता'। अत्रापि स्ववचनेनैव सूचिता पतिसङ्गमेच्छा घनागमस्वभाववर्णनया निगूहिता। इयमप्यपह्नुतिरिति विश्वनाथः। ननु श्लेषनिर्भिन्ननिगूहने कश्चमत्कारो येनास्यालङ्कारत्वमित्याशङ्क्याह। उदाहरण एवास्येति। रूपं वैचित्रात्मकत्वम्॥ ॥२६५॥

राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः।
अवगच्छेयु रा ज्ञात महो शीतानिलं वनम्॥ २६६॥

निर्भिन्ननिगूहने द्वौ हेतू अनिष्टसम्भावना, लज्जा चेति तत्रानिष्टसम्भावनायामुदाहरति। राजेति। अवगच्छेयुरित्याशंसायां लिङ्। मावगच्छेयुरिति क्वचित्पाठः। अवगच्छेयुरित्यन्तमनिष्टशङ्कासूचकम्, अनन्तरं निगूहनोपायं चिन्तयन्नाह। आ ज्ञातमिति। आ इति स्मरणे, ज्ञातं निगूहनकारणं निश्चितमित्यर्थः। तदेवाह अहो इत्यादि, रोमोद्भेदस्य शीतानिलजनितत्वप्रतिपादनेनानुरागो निगूहितः॥ २६६॥

आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम्।
अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम्॥ २६७॥

लज्जायामुदाहरति। आनन्दाश्रिवति। कन्यकां विवाहाय गोष्ठ्यामानीतां कन्यां दृष्ट्वैव कथमानन्दाश्रु प्रवृत्तमिति कन्यादर्शनमात्रेणैव आनन्दाश्रुणानुरागव्यक्तिर्लज्जाकरीत्याशङ्क्य संवृणोति। अचि मे इति। अत्राश्रुणोऽचिदूषणजन्यत्वप्रतिपादनव्याजेनानुरागो निगूहितः। अत्र वस्तुनिर्भेदश्च क्वचिदाशङ्कितः क्वचित्तात्त्विकः, तत्राशङ्कायामेतदुदाहरणद्वयम्। तात्त्विकत्वे यथा, 'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः। आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवतादः शिवः'। अत्र सात्त्विकतया रोमाञ्चादीनां परिज्ञानं तत्रत्यानां जातमेव, अतएव सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्ट इत्युक्तम्॥ २६७॥

इत्येवमादिस्थानेऽयमलङ्कारोऽतिशोभते।
लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम्॥ २६८॥

अस्यालङ्कारत्वमुपपादयति। इत्येवमादीति। अतिशोभते चमत्कारविशेषजनकतया काव्यमुपस्कुरुते, तस्मादस्यालङ्कारत्वमनपलपनीयमित्यर्थः। अन्यैरुक्तो व्याजस्तुत्यलङ्कारोऽपि लेश एवेत्याह। लेशमेके इति। लेशतः स्तुतिच्छलेन कृतां निन्दां, तथा निन्दाच्छलेन कृतां स्तुतिं वा एके लेशं विदुरित्यन्वयः। यदुक्तं दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः। स लेशः स्यात्ततो नान्या व्याजस्तुतिरपीष्यत इति। यथा

श्लेषनिर्भिन्नवस्तुनिगूहने श्लेषनामालङ्कारत्वं तथा श्लेषकृत-स्तुतिनिन्दयोरपीति किं व्याजस्तुतीत्यलङ्कारान्तराभ्युपगमेन पल्लवीकरणमिति सोऽपि श्लेष एवेत्यर्थः॥ २६८॥

युवैष गुणवान्राजा योग्यस्ते पतिरूर्ज्जितः ।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि॥ २६९ ॥
वीर्य्योत्कर्षस्तुतिर्निन्देवास्मिन् भावनिवृत्तये ।
कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरम् ॥ २७० ॥

तत्र स्तुतिव्याजेन निन्दामुदाहरति। युवैष इति। स्वयं-वरगोष्ठ्यां कस्यचिद्राज्ञः समीपमुपस्थितां कन्यां प्रति सख्या उक्तिरियम्। योग्यः पतिः पतित्वेन वरीतुमुचितः, अत्र हेतुः रणोत्सवे इति, अतिवीरोऽयं व्रियतामित्यापाततो बोधितं, पर्य्यवसाने तु सर्व्वदा रणव्यग्रोऽयमनेन ते कामसुखं दुर्लभं तन्न व्रियतामिति रणोत्सवे मनः सक्तमिति स्तुतिव्याजेन नि-न्दैव प्रतिपादिता॥ २६९ ॥

एतदेवाह। वीर्य्योत्कर्षस्तुतिरिति। अस्मिन् पद्ये भोगान् सुरतोत्सवान् निरन्तरं निर्विविक्षोरुपभोक्तुमिच्छोः कन्याया भावो वरणाभिप्रायस्तस्य निवृत्तये राज्ञो वीर्य्योत्कर्षस्तुति-र्निन्दैव कल्पते निन्दारूपेणैव परिणमतीत्यन्वयः॥ २७० ॥

चपलो निर्द्दयश्चासौ जनः किन्तेन मे सखि ।
आगःप्रमार्ज्जनायैव चाटवो येन शिक्षिताः॥ २७१ ॥

दोषाभासो गुणः कोऽपि दर्शितश्चाटुकारिता ।
मानं सखीजनोद्दिष्टं कर्त्तुं रागादशक्तया ॥ २७२ ॥

॥ इति लेशचक्रम् ॥

निन्दाव्याजेन स्तुतिमुदाहरति । चपल इति । मान एव मनस्विनीनां गौरवहेतुस्तदन्तरान्तरा प्रेयसि मानो विधेय इति वदन्तीं सखीं प्रति नायिकाया उक्तिरियम् । चपलो नैकत्र स्थिरप्रेमा, निर्द्दयः परपीडानभिज्ञः । तेन युष्माभिरुपदिष्टेन मानेन । आगःप्रमार्ज्जनाय अपराधविस्मारणाय, चाटवः प्रियवादाः ॥ २७१ ॥

दोषाभास इति । सखीजनैरुद्दिष्टमुपदिष्टं मानं रागात् प्रेयस्यनुरागाधिक्यात् कर्त्तुमशक्तया नायिकया कोऽपि स्त्रीणामतीवहृद्यङ्गमश्चाटुकारितारूपो गुणः, दोषाभासः प्रथमं दोष इवाभासत इति तादृशो दर्शितः, दोषत्वेन कथित इत्यर्थः । तस्मादत्र निन्दाव्याजेन स्तुतिर्दर्शिता ॥ २७२ ॥

उद्दिष्टानां पदार्थानामनूद्देशो यथाक्रमम् ।
यथासङ्ख्यमिति प्रोक्तं सङ्ख्यानं क्रम इत्यपि ॥ २७३ ॥

अथ क्रमं लक्षयति । उद्दिष्टानामिति । उद्दिष्टानां प्रथममुक्तानां पदार्थानां यथाक्रममनूद्देशः पश्चादुद्देशः पश्चादुक्तैः पदार्थैः क्रमेणान्वय इत्यर्थः । यथासङ्ख्यमितीति ननु हेतुः सूक्ष्मो लवः क्रम इत्युद्देशवाक्ये लवानन्तरं क्रम एवोद्दिष्टस्तत्

कथं यथासङ्ख्य निरूपणमित्यत्राह। सङ्ख्यानं क्रम इत्यपीति यथासङ्ख्यं सङ्ख्यानं क्रम इति त्रयः पर्य्याया इत्यर्थः॥ २७३॥

ध्रुवन्ते चोरिता तन्वि स्मितेक्षणमुखद्युतिः।
स्नातुमम्भःप्रविष्टायाः कुमुदोत्पलपङ्कजैः॥ २७४॥

॥ इति क्रमः॥

उदाहरति। ध्रुवमिति। स्मितेक्षणमुखद्युतिरिति जात्या-श्रयत्वादेकवचनम्। चोरितेति किञ्चिदपहृतेत्यर्थः समुदाय-हरणे नायिकायां तदसत्त्वप्रतिपत्त्या वैरस्यापत्तेः। अम्भः प्रविष्टाया इति अम्भःस्थितानां कुमुदादीनां चौर्य्यक्रियाया उपपादकम्। उत्पलं कुवलयम्। अत्र स्मितद्युतिः कुमुदेन, ईक्षणद्युतिरुत्पलेन, मुखद्युतिः पङ्कजेन, चोरिता इति क्रमि-काणां क्रमिकैरन्वयः। अत्रालङ्कारान्तरविच्छित्तिमूलतया प्रौढोक्त्या च वैचित्र्यातिशयः॥ २७४॥

प्रेयः प्रियतराख्यानं, रसवद्रसपेशलम्।
ऊर्ज्जस्वि रूढाहङ्कारं, युक्तोत्कर्षञ्च तत्त्रयम्॥ २७५॥

संलक्ष्यक्रमाणां वस्त्वलङ्काररूपव्यङ्ग्यानां वाच्यार्थस्य शो-भाजनकतया समासोक्तिरूपकादिनाऽलङ्कारत्वमुक्तम् असंल-क्ष्यक्रमाणां रसादिव्यङ्ग्यानामपि तथात्वेनालङ्कारत्वमुचित-मिति सम्प्रति तद्रूपं प्रेयोरसवदूर्ज्जस्विनामकमलङ्कारत्रय-माह। प्रेय इति। त्रयाणामेवासंलक्ष्यक्रमलक्ष्यैकधर्म्मवत्त्वा-

द्रेकत्र निवेशः। तत्र प्रियतरं भावाभिव्यक्त्या बोद्धव्यस्य प्रीत्यतिशयकरं वक्तुर्वा प्रीत्याधिक्यसूचकमाख्यानं प्रेयः प्रकृष्टप्रियत्वात् प्रेयो नामालङ्कारः। भावाश्च देवादिविषया रतिः प्रधानत्वेनाभिव्यक्ता व्यभिचारिणश्च। यथा काव्यप्रकाशे, 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। भावः प्रोक्तः' इति। विभावादिभिरपरिपुष्ट उद्बुद्धमात्रः स्थायी च भाव इति विश्वनाथादयः। ग्रन्थकर्तुस्तु देवादिविषयकरतिभावव्यञ्जकमेवाख्यानं प्रेयोऽलङ्कारतयाभिमतमिति वक्ष्यमाणोदाहरणदर्शनादवगम्यते। तत्राख्यानचातुर्य्येण व्यज्यमानो देवादिविषयकरतिभावो वाच्यस्य शोभाजनकतया प्रेयोनामालङ्कार इति लक्षणम्। तथा रसपेशलं रसाभिव्यक्त्या सहृदयहृदयङ्गममाख्यानं रसवत् रसवन्नामालङ्कारः आख्यानचातुर्य्येण व्यज्यमानो रस एव वाच्यस्य शोभाजनकतया रसवदलङ्कार इत्यर्थः। रसस्वरूपञ्च ग्रन्थकृता नोक्तमिति किञ्चिदुच्यते। समुचितसन्निवेशशोभिना काव्येन तत्तदभिनयेन च समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासध्रीचीनेन भावनाविशेषमहिम्ना विगलितरामरमणीत्वादिभिरलौकिकविभावनादिव्यापारवत्तया विभावानुभावव्यभिचारिशब्दव्यपदेश्यैः सीतादिभिरालम्बनकारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादिभिः कार्य्यैश्चिन्तादिभिः सहकारिभिश्च सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिवर्त्तितानन्दांशावरणाज्ञानेनात एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्म्मेण प्रमात्रा

स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्रागविनिविष्टवासनारूपः स्थिरतया वर्त्तमानत्वात् स्थायिशब्दव्यपदेश्यो रत्यादिरेव रसः । तथा चाहुः 'व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः' इति व्यक्तो व्यक्तिविषयीकृतः, व्यक्तिश्च भग्नावरणा चित्, यथाहि शरावादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितान् पदार्थान् प्रकाशयति स्वयञ्च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन्, अन्तःकरणधर्म्माणां साक्षिभास्यत्वाभ्युपगतेः, विभावादीनामपि स्वप्नतुरगादीनामिव रङ्गरजतादीनामिव च साक्षिभास्यत्वमविरुद्धं, व्यञ्जकविभावादिचर्व्वणाया आवरणभङ्गस्य वा उत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ रसे उपचर्य्येते विभावादिचर्व्वणावधित्वादावरणभङ्गस्य, निवृत्तायां तस्यां प्रकाशस्यावृत्तत्वाद्विद्यमानोऽपि स्थायी न प्रकाशते इतीदमभिनवगुप्तादिमतस्वारस्येन । भट्टनायकप्रभृतयस्तु ताटस्थ्येन रसप्रतीतावनास्वाद्यत्वम् आत्मगतत्वेन तु प्रत्ययो दुर्घटः सीतादीनां सामाजिकान् प्रत्यविभावत्वात् विना विभावमनालम्बनस्य रत्यादेरप्रतिपत्तेः नच कान्तात्वं साधारणं विभावतावच्छेदकमत्रास्तीति वाच्यम्, अप्रामाण्यनिश्चयानास्कन्दितागम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्य विभावतावच्छेदककोटाववश्यं निवेश्यत्वात्, तस्मादभिधया निवेदिताः पदार्था भावकत्वव्यापारेणागम्यात्वादिरसविरोधिज्ञानप्रतिबन्धद्वारा कान्तात्वादिरसानु-

कुलधर्मपुरस्कारेणावस्थाप्यन्ते, एवं साधारणीकृतेषु रामसीता देशकालवयोऽवस्थादिषु पश्चात् पूर्व्वव्यापारमहिम्नि तृतीयस्य भोगकृत्त्वव्यापारस्य महिम्ना निगीर्णयोरजस्तमसोरुद्रिक्तसत्त्वजनितेन निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिः स्थायी रस इत्याहुः। नव्यास्तु काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण रामादौ सीतादिरतौ गृहीतायाम्, अनन्तरञ्च सहृदयताभासितस्य भावनाविशेषरूपदोषस्य महिम्ना कल्पितरामत्वाद्यवच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्व्वचनीयः साक्षिभास्यः सीतादिविषयकरत्यादिरेव रसः अयञ्च कार्य्यो दोषविशेषस्य नाश्यश्च तदुत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात् सुखपदव्यपदेश्यश्च भवतीति प्राहुरित्येतत् सर्व्वं पण्डितराजेन विशदीकृतम्। सीतादिविभावादिभी रामादिनिष्ठतयानुमीयमानो रत्यादिस्थायिभावो वासनासन्निकर्षेण सामाजिकैः साक्षात्क्रियमाणो रस इति श्रीशङ्कुकप्रभृतयः। वस्तुतस्तु विभावादिव्यज्यमानरत्यादिस्थायिभावजन्यचमत्कार एव रसशब्देन व्यपदिश्यते सर्व्वमन्यत् पल्लवमिति बोध्यम्। रत्यादयश्च रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयाः क्रमेण शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतरसानां स्थायिभावाः, शान्तस्य तु शमो निर्वेदो वेति कल्पद्वयं। रत्यादीनां स्वरूपञ्च दश-

रूपकादावभिव्यक्तं ज्ञेयं। शृङ्गारादीनां स्वरूपमन्यत्र विस्तर इति नोक्तं। तत्र शृङ्गारोऽपि सम्भोगविप्रलम्भभेदेन द्विविधः। वीरस्य दानधर्म्मदयायुद्धमन्त्रादिभेदेन बहुविधः॥

तथा रूढः प्रादुर्भूतः प्रधानतयाभिव्यक्त इत्यर्थः, तादृशोऽहङ्कारो गर्व्वो यत्र तादृशमाख्यानमूर्ज्जस्वि, आख्यानचातुर्य्येण प्रधानतयाभिव्यज्यमानो गर्व्वाख्यो व्यभिचारिभाव ऊर्ज्जस्विनामालङ्कार इत्यर्थः। गर्व्वश्च, गर्व्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः, इत्युक्तलक्षणः, अयञ्च प्राधान्येनाभिव्यक्तो भाव एव, व्यभिचारी तथाञ्जित इति प्रकाशकारोक्तः। एषामलङ्कारव्यपदेशे हेतुमाह। युक्तोत्कर्षश्चेति। युक्तोऽलङ्कारव्यपदेशोपयुक्त उत्कर्षो वाच्यशोभा यस्मात्तत्, सादृश्यादयो यथा वाच्यार्थशोभाजनकत्वादुपमाद्यलङ्कारतया व्यपदिश्यन्ते भावादयोऽपि तथा वाच्यशोभाजनकत्वसाम्यादित्यर्थः। मते चास्मिन् निरुक्तभावेषु मध्ये देवादिविषयकरतिभावस्य प्रेयो नामालङ्कारत्वं गर्व्वाख्यभावस्य चोर्ज्जस्विनामालङ्कारत्वम्, एतद्भिन्नानान्तु भावानां तथा रसाभासभावाभासभावशान्तिभावोदयभावशबलतानाञ्च रसपेशलमित्यत्र रसपदस्य रस्यमानपरत्वेन रसवदलङ्कारत्वम् एषामपि काव्यशोभाजनकत्वाविशेषेणालङ्कारत्वौचित्यादिति बोध्यम्, उक्तञ्चान्यत्र 'रसभावौ तदाभासौ भावस्य प्रशमोदयौ। सन्धिः शबलता चेति सर्व्वेऽपि रसनाद्रसाः' इति। एते च रसादयः अङ्गित्वेनाङ्गत्वेन वाभिव्यज्यमाना अलङ्कारतां प्राप्नुवन्ति अङ्गभूतामा-

मपि काव्यशोभाजनकत्वाविशेषात्, नचाङ्गिनो रसादेरलङ्कार्य्यत्वात् कथमलङ्कारत्वमिति वाच्यं, स्वमते शब्दार्थात्मकस्य काव्यस्यैवालङ्कार्य्यत्वेन तदुपस्कारकस्य व्यङ्ग्यमात्रस्यैवालङ्कारव्यपदेश्यत्वात्, काव्यशोभाकरान् धर्म्मानलङ्कारान् प्रचक्षते इत्यलङ्कारलक्षणे शब्दार्थशरीरस्य काव्यस्यैवालङ्कार्य्यत्वप्रतिपादनात्। ध्वनिकारप्रभृतयस्तु अङ्गिनो रसादेरलङ्कार्य्यत्वमङ्गभूतस्य तस्यालङ्कारत्वमाहुः। यथा 'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतम्' इति। तत्र रसानामङ्गत्वे रसवदलङ्कारः भावानामङ्गत्वे प्रेयोऽलङ्कारः रसाभासभावाभासयोरङ्गत्वे ऊर्ज्जस्वलङ्कारः भावशान्तेरङ्गत्वे समाहितालङ्कारः भावोदयभावसन्धिभावशवलतानामङ्गत्वे तत्तन्नामकालङ्काराः। तदुक्तं विश्वनाथेन, 'रसभावौ तदाभासौ भावस्य प्रशमस्तथा। गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा। रसवत् प्रेयऊर्ज्जस्वि समाहितमिति क्रमात्। भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः' इति। अत्र ते नव्याः प्रष्टव्याः किं प्रधानतया प्रतीयमानस्य व्यङ्ग्यमात्रस्यैवालङ्कार्य्यत्वमुत तथाभूतस्य रसादेरेवेति तत्र न तावत् प्रथमः समासोक्त्यप्रस्तुतप्रशंसापर्य्यायोक्तादौ प्रधानतयैवाभिव्यज्यमानानां वस्त्वलङ्काराणां तैरप्यलङ्कारत्वाभ्युपगमात् नच तत्र वाच्यार्थस्यैव प्रधानत्वं प्रतीयमानानां वस्त्वलङ्काराणान्त्वप्रधानत्वम् अप्रधानानान्त्वलङ्कारत्वमुचितमेवेति वाच्यं, तत्र तत्र व्यङ्ग्यानामेव प्राधान्यस्यानुभवसिद्धतयानपलपनीयत्वात्, नापि द्वितीयः

सामान्येन काव्यात्मकतयाभ्युपगतानां वस्त्वलङ्काररसादिव्यङ्ग्यानां मध्ये वस्त्वलङ्काराणामलङ्कारत्वं रसादीनामेवालङ्कार्य्यत्वमिति निर्वक्तुमयोग्यत्वात् नच रसादिव्यङ्ग्यस्यैव प्रधानस्य काव्यात्मत्वादलङ्कार्य्यत्वं न वस्त्वलङ्कारयोरिति विश्वनाथोक्तमादरणीयं, 'यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखः। सन्ध्याभ्रमं प्राप्नवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं व्यधत्त' इत्यादौ तेनाप्यङ्गभूतेन शृङ्गारेणैव काव्यव्यवहाराभ्युपगमात् संलक्ष्यक्रमव्यङ्ग्यरूपध्वनिभेदस्य सर्व्वालङ्कारिकैरभ्युपगतत्वेन रसादेरेव काव्यात्मत्वप्रतिपादनस्य वक्तुर्श्चो दूषितत्वाच्च, तस्माद्व्यङ्ग्यतयाऽविशिष्टानां वस्त्वलङ्काराणां रसादीनां वा काव्यशोभाजनकतयालङ्कारत्वं युक्त्यनुभवप्रतिपन्नमिति, प्राचां सरणिरेव साधीयसी। अथात्र रसस्यालङ्कारत्वमुक्तं, पूर्व्वञ्च 'मधुरं रसवद्वाचीत्यादिना गुणत्वमुक्तं तत्कथमेकस्य गुणत्वमलङ्कारत्वञ्चेति चोद्यस्य समाधानं स्वयमेव ग्रन्थकारोऽग्रे करिष्यतीति सर्व्वमवदातम्॥ २७५॥

अद्य या मम गोविन्द! जाता त्वयि गृहागते।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः॥ २७६॥
इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः।
भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः॥ २७७॥

तत्र प्रथमं प्रेय उदाहरति। अद्येति। विदुरस्य स्वगृहागतं श्रीकृष्णं प्रति सानुरागोक्तिरियं। हे गोविन्द अद्य त्वयि गृहागते

मदीयभवनं प्राप्ते सति मम या प्रीतिर्जाता कालेन समयान्तरेण तवैव पुनरागमनादेषा प्रीतिर्भवेत् भविष्यति न तु त्वयि गते त्वदितरसाधुसमागमादिना ईदृशी प्रीतिर्भविष्यतीत्यर्थः। इतः प्रतिनिवृत्तस्य ते यावन्न पुनरागमनं तावद्दुःखेनैव स्थास्यामीति भावः। नैषा काले भवेत् प्रीतिरिति पाठस्तु न मनोरमः। अत्र विदुरस्य वाक्यभङ्ग्याभिव्यज्यमानो भगवद्विषयरतिभावो भगवतः प्रीत्यतिशयजननेन वाच्यस्य शोभातिशयं पुष्णाति। श्लोकोऽयं 'सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयतासर्व्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात्' इति शाण्डिल्यसूत्रीयप्रीत्युदाहरणतया स्वप्नेश्वराचार्य्येणोपन्यस्तस्य,'या प्रीतिः पुण्डरीकाक्ष तवागमनकारणात्। सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम्' इति महाभारतीयोद्योगपर्व्वोक्तविदुरवचनस्य प्रतिरूपः॥ २७६ ॥

इत्याहेति। युक्तम् अव्यभिचारिभगवद्भक्तिसूचकत्वात् समीचीनं, युक्तमित्यत्र वाक्यमिति क्वचित्पाठः। युक्तत्वे हेतुः नान्यतस्तादृशी धृतिरिति यतोऽत्र विदुरस्य अन्यतो भगवद्भिन्नविषयेभ्यस्तादृशी धृतिः सन्तोषो न प्रतिपन्नेति शेषः। तवैवागमनात् पुनरित्यनेन विषयान्तरेभ्यो विदुरस्य प्रीतिर्न भवतीति सूचितमित्यर्थः। अतएव भक्तिमात्रेण अनन्यसाधारणानुरागेणैव समाराध्यो हरिः सुप्रीतश्चाभूदित्युद्देश्यस्य प्रीतिकरमाख्यानमिति प्रेयोऽलङ्कारः॥ २७७ ॥

सोमः सूर्य्यो मरुद्भूमिर्व्योम होतानलो जलम् ।
इति रूपाण्यतिक्रम्य त्वां द्रष्टुं देव ! के वयम् ॥ २७८ ॥
इति साक्षात्कृते देवे राज्ञो यद्राजवर्म्मणः ।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम् ॥ २७९ ॥

वक्तुः प्रीतावुदाहरति । सोम इति होता यजमानः । इतिरूपाणि सोमादिस्थूलरूपा अष्टौ मूर्त्तीरतिक्रम्य सूक्ष्मस्वरूपेण वर्त्तमानं सच्चिदानन्दात्मकं त्वां द्रष्टुं साक्षात्कर्त्तुं वयं के अयोग्या एव, तर्हि यद्दृष्टोऽसि तत्र भक्तानुकम्पितैव हेतुरिति भावः । अत्र निष्कलस्य परब्रह्मणो जन्यप्रीतेरभावात् वक्तुस्तद्विषयकप्रीत्यैव प्रेयस्त्वम् ॥ २७८ ॥

इतीति । देवे महादेवे । राजवर्म्मणः राजवर्म्मनामकस्य । प्रीतिप्रकाशनं महादेवविषयकरतिभावसूचनं, तच्च तदपि, प्रेय इत्यवगम्यतामिति एतेन भक्तस्य प्रीत्यभिव्यक्त्या बोद्धव्यस्य देवादेः प्रीतिः, केवला भक्तस्यैव देवादिविषयिका प्रीतिर्वा व्यज्यमाना प्रेयोऽलङ्कार इति सूचितम् । श्लोकद्वयेऽस्मिन् देवविषयकरतिभावो दर्शितः । मुनिविषयो यथा, 'हरत्यघं सम्प्रति, हेतुरेष्यतः शुभस्य, पूर्व्वाचरितैः कृतं शुभैः । शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्' । इयं हि नारदं प्रति श्रीकृष्णस्योक्तिः । 'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्य्येण मुहुर्मुहुः स्तुतिमिति

प्रस्तौमि यावद्भुवस्तावद्दिभद्दिर्मा स्ततस्तवभुजो वाचयतो मुद्रिताः' । अत्र पूर्व्वार्द्धे भूविषयः, उत्तरार्द्धे राजविषयः । 'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्द्धनि चिरस्य परिष्वजे त्वाम् । आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयन्ते' । अत्र पुत्रविषयः, अत्र वत्सलाख्यो रस इत्यन्ये, एवमन्यविषयोऽपि रतिभावः प्रेयोऽलङ्कारतया वाच्यः। कान्ताविषया तु रतिर्व्यक्ता शृङ्गारतां प्राप्नोति तत्र रसवदलङ्कार इत्यनन्तरमेव दर्श्यते ॥ २७९ ॥

मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम् ।
सैषा तन्वी मया लब्धा कथमत्रैव जन्मनि ॥ २८० ॥
प्राक् प्रीतिर्दर्शिता, सेयं रतिः शृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥ २८१ ॥

अत्र रसवदलङ्कारं दर्शयन् तत्र रसाश्च शृङ्गारादिभेदेन बहुविधा इति तेषु ब्रह्मादिकीटपर्य्यन्तानामादरणीयत्वेनाभ्यर्हितत्वात् प्रथमं शृङ्गारमुदाहरति । मृतेति । मृतां मदालसां पुनर्नागानां प्रसादेन प्रत्युज्जीवितां प्राप्य तस्याः पत्युः कुवलयाश्वस्योक्तिरियम् । मृतेति मृतेयमिति निश्चित्य यया सह प्रेत्य परलोके सङ्गन्तुं संयोगं प्राप्तुम् । मृतेऽभिप्रेत्य सङ्गन्त्विति पाठे तु इत्यनुतापे मृते मरणे सति, भावे क्तः, यया परलोकगतया सह सङ्गमभिप्रेत्याभिलष्येत्यर्थः । मे मया मरणं मतमिष्टं, सैषा तन्वी कथमत्रैव जन्मनि विना मरणं लब्धा

कथमिति विस्मये । सैषा तन्वीत्यत्र सैवावन्तीति क्वचित्पाठः, तत्र आवन्ती अवन्तिदेशोद्भवा वासवदत्तेत्यर्थः, वासवदत्ताया दाहप्रवादेन दुःखितस्य पुनस्तां प्राप्य वत्सराजस्यानन्दोक्तिरियम् । अत्र सम्भोगशृङ्गाराख्यो रसः स च ‘दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः’ इत्युक्तलक्षणः । अयञ्च विप्रलम्भानन्तरं प्रतिपाद्यमानः पुष्टिं प्राप्नोतीति विप्रलम्भानन्तर्य्येणात्र वर्णितः । तदुक्तं, ‘न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते’ इति । विप्रलम्भस्य ‘यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसावित्युक्तलक्षणः’ अयञ्च पूर्व्वरागमानप्रवासकरुणात्मकतया चतुर्विधः, विप्रलम्भस्यायं मदालसापक्षे करुणात्मकः, यदुक्तं ‘यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये । विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः’ इति ॥ १८० ॥

नन्वत्रापि नायिकाविषयिणी प्रीतिर्व्यज्यते तत् प्रेयोऽलङ्कारादस्य कोभेद इत्याशङ्कायामाह । प्रागिति । प्राक् पूर्व्वदर्शिते अद्य येति सोमः सूर्य्य इति च श्लोकद्वये प्रीतिर्दर्शिता संप्रयोगशून्यत्वाद्रतिः प्रीतिः प्रेयोऽलङ्कारतया दर्शितेत्यर्थः, प्रीतिप्रेयसोः पर्य्यायता, यदुक्तं, ‘मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं वचः । असंप्रयोगविषया सैव प्रीतिर्निगद्यते’ इति । संप्रयोगस्य विभावादिभिः परिपोषः स चात्र वर्त्तत इत्याह सेयमिति, सा तादृशी देवादिविषयकरतिसजातीयेत्यर्थः,

रतिः 'रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्' इत्युक्तलचणा प्रकृते कान्ताविषयकोऽनुराग इत्यर्थः, रूपस्य स्वरूपस्य बाहुल्यं विभावानुभावव्यभिचारिभिः परिपोषः तस्य योगेन सम्बन्धेन शृङ्गारतां गता अलौकिकचमत्कारजनकतया तत्परिणामेन वा शृङ्गाररसत्वं प्राप्ता, तत्तस्मादिदं वचो रसवत् रसवदलङ्कारवत्, एतदुक्तं भरतेन 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति। अत्र निरूक्तनायिका विभावः, सौहित्यवचनवदनस्मेरताद्योऽनुभावाः, हर्षविस्मयादयोव्यभिचारिणः, एतैरभिव्यज्यमानः पुष्टिं नीतोरत्याख्यः स्थायिभावो रसतामापद्यते। रसोद्बोधे च विभावादीनां त्रयाणां समुदितानामेव हेतुत्वं यत्र तु एकस्य द्वयोर्वा सद्भावस्तत्रान्यतमस्यौचित्यादाचेपेण समुदितत्वं बोध्यम्। यथा 'दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंशयोः संचिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव। मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दोनर्त्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः'। अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णनेऽनुभावानां नयनविस्फारादीनां व्यभिचारिणाञ्चौत्सुक्यादीनामौचित्यादेवाचेपः। एवमन्याचेपो बोध्यः, यत्र तु कष्टेनाचेपस्तत्र तु दोष एव। यथा 'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्त्तते च भूयः। इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः। अत्र रतिपरिहारादीनां करुणादावपि सम्भ-

वात् कामिनीकपोलविभावः लज्जादाक्षेप्यः । एतच्च प्रवन्धा-दुक्तम् ॥ २८१ ॥

निगृह्य केशेष्वाकृष्टा कृष्णा येनाग्रतो मम ।
सोऽयं दुःशासनः पापो लब्धः किं जीवति क्षणम् ॥२८२॥
इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ।
भीमस्य पश्यतः शत्रुमित्येतद्रसवद्वचः ॥ २८३ ॥

रौद्रमुदाहरति । निगृह्येति । केशेष्वित्यवच्छेदे सप्तमी । कृष्णा द्रौपदी ।

परां कोटीमारुह्य विभावादिभिः परिपुष्टिं प्राप्य, क्रोधः स्थायिभावः स च 'प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते' इत्युक्तलक्षणः शत्रुं प्रत्यपचिकीर्षाया उद्रेकः क्रोध इत्यर्थः, रौद्रात्मतां गतो रौद्ररसत्वं प्राप्तः । तथाह्यत्र दुःशासन आलम्बनविभावः तस्य कृष्णाकेशाकर्षणादिचेष्टित-मुद्दीपनविभावः पाप इत्यधिक्षेपवचनमनुभावः प्रतीयमाना गर्व्वादयो व्यभिचारिभावाः, एतैः पुष्टिं नीतः क्रोधस्थायिभावो रौद्ररसतां गतः । रसवत् रसवदाख्यालङ्कारवत् ॥ ॥ २८२ ॥ २८३ ॥

अजित्वा सार्णवामुर्व्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥ २८४ ॥
इत्युत्साहः प्रकृष्टात्मा तिष्ठन् वीररसात्मना ।
रसवत्त्वं गिरामासां समर्थयितुमीश्वरः ॥ २८५ ॥

वीरमुदाहरति । अजित्वेति । अजित्वा युद्धे शत्रुपराजयात् अलब्धा । अत्र क्रान्तवाक्यत्रयेण क्रमेण युद्धधर्मदानविषया उत्साहाः सूचिताः । तेनाच युद्धवीरो धर्मवीरो दानवीरश्चेति वीररसत्रयम् । दयावीरो यथा, 'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति । तृप्तिं न पश्यामि तवापि तावत्, किं भक्षणात्त्वं विरतो गरुत्मन्' । अत्र जीमूतवाहनस्य गरुडभुक्तावशिष्टनागान् प्रति दयायामुत्साहः । एवमन्येऽपि मन्त्रादिवीराः सम्भवन्ति ते च मुद्राराक्षसादौ ज्ञातव्याः ॥ २८४ ॥

इत्युत्साह इति । उत्साहः 'कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते' इत्युक्तलक्षणः । संरम्भ उद्योगः । प्रकृष्टात्मा तत्तद्विभावादिभिः परिपुष्टः, वीररसात्मना तिष्ठन् वीररसत्वं प्राप्नुवन्, रसवत्त्वं रसवदलङ्कारत्वं समर्थयितुं सम्पादयितुम्, ईश्वरः समर्थः । अत्र युद्धे विजेतव्याः, धर्मे धर्मः, दाने याचका उत्साहस्यालम्बनविभावाः, प्रतीयमानाः सहायान्वेषणादयोऽनुभावाः हर्षधृतिमत्यादयो व्यभिचारिणः एतैरभिव्यक्त उत्साहो वीररसतां भजते ॥ २८५ ॥

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
साधिशेते कथं तन्वी हुताशनवतीं चिताम् ॥ २८६ ॥
इति कारुण्यमुद्रिक्तमलङ्कारतया स्मृतम् ।
तथा परेऽपि बीभत्सहास्याद्भुतभयानकाः ॥ २८७ ॥

करुणमुदाहरति । यथा इति । तन्वीत्यत्र देवीति क्वचित् पाठः । इतीति । कारुण्यं करुणरसस्थायिभावः शोकः स च 'इष्टनाशादिभिश्चेतो वैक्लव्यं शोकशब्दभाक्' इत्युक्तलक्षणः, चेतसो वैक्लव्यं दुःखविशेष इत्यर्थः । उद्रिक्तं विभावादिभिः परिपुष्टं सत् अलङ्कारतया स्मृतं करुणरसीभूय काव्यशोभाजननाद्रसवदलङ्कारत्वेन ज्ञातमित्यर्थः । अत्र शोच्या गतप्राणा तन्वी आलम्बनविभावः कुसुमशय्यापीत्यादिना जीवन्त्यास्तस्याः सुखावस्थास्मरणमुद्दीपनविभावः करुणवचनमनुभावः कथमित्याचिप्तार्श्चिन्तादयो व्यभिचारिणः एतैः परिपुष्टः शोकाख्यः स्थायिभावः करुणरसत्वं भजते ॥

तथेति । यथा पूर्वोदाहरणचतुष्टये रतिक्रोधोत्साहशोकाः स्थायिभावास्तत्तद्विभावादिभिः परिपुष्टाः शृङ्गाररौद्रवीरकरुणरसीभूता दर्शितास्तथा वच्यमाणोदाहरणेष्वपि जुगुप्साहासविस्मयभयरूपाः स्थायिनो विभावादिभिः परिपुष्टाः सन्तो बीभत्सहास्याद्भुतभयानकाख्या रसा भवन्तीति ज्ञातव्यमित्यर्थः ॥ २८६ ॥ २८७ ॥

पायं पायं तवारीणां शोणितं पाणिसंपुटैः ।
कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः ॥ २८८ ॥

तत्र बीभत्समुदाहरति । पायं पायमिति । पायं पायं पुनःपुनः पीत्वा । कौणपा राक्षसाः । कबन्धैर्निर्मस्तकक्रियायुक्तकलेवरैः सह । अन्त्रं पुरीतत् तद्भूषणं येषां ते ।

अत्र जुगुप्सा स्थायिभावः सा च, 'दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा' इत्युक्तलक्षणा, तस्याः पाणिसंपुटैः शोणितपायिनोऽन्त्रभूषणाः कौणपा आलम्बनविभावः प्रतीयमाना निष्ठीवनास्यवलनादयोऽनुभावाः, मोहापस्मारादयो व्यभिचारिणः, एतैः परिपुष्टा जुगुप्सा बीभत्सरसत्वं भजते, बीभत्सस्यात्र राजविषयरतौ गुणीभूतः तादृशरतिश्च वर्णनीयप्रीतिकरत्वात् प्रेयोऽलङ्कार इति प्रेयोरसवतोः सङ्करोऽयम् ॥ २८८ ॥

इदमम्लानमानाया लग्नं स्तनतटे तव ।
छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥ २८९ ॥

हास्यमुदाहरति । इदमिति । सखीमसत्त्वं मानं प्रकाशयन्तीं रहस्य कान्तेन सह कृतक्रीडां नायिकां प्रति सख्या उपहासोक्तिरियम् । अम्लानोऽपर्य्युषितः अस्मदभ्यर्थनाशतेनाप्यपरिचत इत्यर्थः तादृशोमानो यस्यास्तथाविधाया अपि तव स्तनतटे नवं न तु प्राचीनं नखपदं लग्नं दृश्यते एतत्तु मानिन्यास्ते नायकसङ्गाभावेनासम्भवमित्युत्तरीयेण छाद्यतामित्यन्वयः । अत्र हासः स्थायिभावः स च 'वागादिवैकृतैश्चेतोविकाशोहास उच्यत' इत्युक्तलक्षणः, विकाश उपहसनीयत्वेन ज्ञानं । निरुक्तमानवती नायिका तस्यालम्बनविभावः नखक्षतमुद्दीपनविभावः तादृशसोत्प्रासवचनमनुभावः प्रतीयमाना अवहित्थादयो व्यभिचारिणः, एतैः परिपुष्टो निरुक्त-

हासस्थायिभावो हास्यरसतां भजते। अम्लानमानाया इत्यत्र अम्लानमालाया इतिपाठो न मनोरमः॥ २८८॥

अंशुकानि प्रवालानि पुष्पं हारादिभूषणम्।
शाखाश्च मन्दिराण्येषां चित्रं नन्दनशाखिनाम्॥२९०॥

अद्भुतमुदाहरति। अंशुकानीति। प्रवालानि किशलयाः। नन्दनशाखिनां कल्पद्रुमाणाम्। अत्र विस्मयः स्थायिभावः स च 'विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु। विस्फारश्चेतसो यस्तु स विस्मय उदाहृत' इत्युक्तलक्षणः, विस्फारो विस्तारः स च दृष्टहेतुभ्योऽसम्भविलक्षणेन हेत्वन्तरानुसन्धाने मनोव्यापाररूपः। तस्य च अलौकिकनन्दनशाखिन आलम्बनविभावः तेषामंशुकादिमत्त्वरूपगुणमहिमा उद्दीपनविभावः प्रतीयमानाः स्तम्भस्वेदादयोऽनुभावाः वितर्कादयोव्यभिचारिणः एतैः परिपुष्टो विस्मयोऽद्भुतरसत्वं भजते ॥ २८०॥

इदं मघोनः कुलिशं धारासन्निहितानलम्।
स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते॥ २९१॥

भयानकमुदाहरति। इदमिति। अत्र दैत्यस्त्रीणां भयं स्थायिभावः तच्च 'रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्' इत्युक्तलक्षणम्। रौद्रशक्त्या शात्रवादेरनिष्टजननसामर्थ्येन, चित्तवैक्लव्यदं चित्तवैक्लव्यजनकस्यानिष्टतर्कणं। तस्य मघवा

आलम्बनविभावः निरुक्तरूपं कुलिशमुद्दीपनविभावः गर्भपातोऽनुभावः प्रतीयमाना आवेगसम्मोहादयो व्यभिचारिणः एतः परिपुष्टो भयस्थायिभावो भयानकरसत्वं भजते। इत्येते शृङ्गारादयोऽष्टौ रसा दर्शिताः, रसानामष्टमात्रसंख्यकत्वञ्च नाट्याभिप्रायेण 'अष्टौ नाट्ये रसाः स्मृता इत्युक्तेः, श्रव्यकाव्ये शान्तोऽपि रसः सम्भवति यदुक्तं, 'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ नच काचिदिच्छा। रसः स शान्तः कथितो मुनीन्द्रैः सर्व्वेषु भावेषु शमप्रधान' इति, सचाप्रदर्शितोऽपि ज्ञेयः यथा, 'अहौ वा हारे वा कुसुमशयने वा दृषदि वा मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा। तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः कदा पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः। अत्र शमोनिर्वेदो वा स्थायिभावः वस्तुमात्रस्यानित्यत्वं भगवान् शिवोवा आलम्बनविभावः पुण्यारण्यमहापुरुषसङ्गादय उद्दीपनविभावाः, रोमाञ्चादयोऽनुभावाः, हर्षस्मृतिमतिभूतदयादयोव्यभिचारिणः। एवं देवादिविषयकरतिप्रधानीभूतगर्व्वभिन्नभावानां रसाभासभावाभासभावोदयभावशान्तिभावसन्धिभावशबलत्वानाञ्च रस्यमानत्वात् रसवदलङ्कारत्वमिति तेषामुदाहरणानि पल्लवनभिया नोक्तानि स्वयं ज्ञातव्यानि ॥ २८१ ॥

वाक्यस्याग्राम्यतायोनिर्माधुर्य्ये दर्शितोरसः।
इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् ॥ २८२ ॥

॥ रसवच्चक्रम् ॥

ननु माधुर्य्यगुणनिरूपणे मधुरं रसवदित्यनेन रसवत्त्वस्य माधुर्य्यगुणत्वमुक्तम् अत्र त्वलङ्कारत्वमिति कोऽनयोर्भेद इत्या-शङ्क्याह। वाक्यस्येति। अत्र वाक्यस्येति वाच्यस्यापलक्षकं 'वस्तु-न्यपि रसस्थितिरि'त्युक्तेः। अग्राम्यता ग्राम्यत्वदोषाभावसमा-नाधिकरणालङ्कारादिमत्तेत्यर्थः सैव योनिर्व्यञ्जिका यस्य सः। दर्शित इति 'कामं सर्व्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति। तथाप्यग्राम्यतैवैनं भारं वहति भूयसा' इत्यनेनेत्यर्थः। इह-त्विति गिरां विभावाद्युपस्थापकवाक्यानाम् अष्टरसायत्ता शृ-ङ्गाराद्यष्टरससङ्गावाधीना रसवत्ता रसवदलङ्कारवत्ता स्मृता. अयमर्थः रसव्यञ्जकग्राम्यत्वाभावसमानाधिकरणालङ्कारादि-मत्त्वस्य माधुर्य्यगुणत्वं पूर्व्वमुक्तम् इह तु रसानामेवालङ्कारत्व-मतो न माधुर्य्यरसवतोरभेद इति। अत्राष्टेति परिचयाय न तु प्रकृतोपयोगाय रसमात्रोपादानेनैवोपयोगसिद्धेरिति बोध्यम्॥ २८२ ॥

अपकर्त्ताहमस्मीति हृदि ते मास्म भूद्भयम्।
विमुखेषु न मे खड्गः प्रहर्त्तुं जातु वाञ्छति॥ २८३॥
एवमुक्त्वा परो युद्धे निरुद्धो दर्पशालिना।
पुंसा केनापि तज्ज्ञेयमूर्ज्जस्वीत्येवमादिकम्॥ २८४॥

॥ ऊर्ज्जस्वि॥

ऊर्ज्जस्व्युदाहरति। अपकर्त्तेति। युद्धे पलायमानं शत्रुं प्रति कस्यचिद्वीरस्योक्तिरियम्। अत्र युद्धवीररसस्य गर्व्वाख्यो

व्यभिचारिभावः स्थायिभावमुत्साहं निगीर्य्योद्रिक्ततया व्यक्त इत्यूर्ज्जस्विता ऊर्ज्जो बलप्रकाशनमस्यास्तीति व्युत्पत्तेः, एवञ्चा-यमपि भाव एव 'व्यभिचारी तथाञ्जित इति प्रकाशकृदुक्तेः, परन्तूर्ज्जःप्रकाशनादूर्ज्जस्वीति विशेषनाम्ना व्यपदिश्यते। यत्र त्वयमेव स्थायिन्युत्साहे निलीयते तत्र वीरो रसः, स च पूर्व्वो-क्तरसवन्नाम्ना व्यपदिश्यते। यथा 'क्षुद्राः सन्त्रासमेते विज-हित हरयः! क्षुण्णशक्रेभकुम्भा युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः। सौमित्रे! तिष्ठ, पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राम-मन्वेषयामि'। अत्र पादत्रयेणोद्रिक्ततया व्यज्यमानोऽपि गर्व्व-श्चतुर्थपादव्यङ्ग्यस्य रामजयोत्साहाख्यस्थायिभावस्य कुक्षौ नि-लीयते अतएवेदं प्रकाशकृता वीररसोदाहरणत्वेनोपन्यस्तं तस्मादयं रसवदलङ्कार एव। नव्यास्तु रसाभासो भावाभासो वा रसान्तरादेरङ्गत्वमापन्नः सन्नूर्ज्जस्व्यलङ्कारो भवतीत्याच-क्षते तन्न रुचिरं तथात्वे ऊर्ज्जस्विसंज्ञाया अन्वर्थतानुपपत्तेः अलङ्कारसंज्ञानां तथात्वस्यैव नियमात्। विमुखेष्विति। तथाच हन्यादित्यनुवृत्तौ मनुः 'नायुधव्यसनप्राप्तं नार्त्तं नातिपरि-क्षतम्। न भीतं न परावृत्तं सतां धर्म्ममनुस्मरन्' इति॥ ॥ २८३ ॥

एवमुक्तेति। एवमादिकमिति यथाच वीरव्यभिचारी गर्व्व ऊर्ज्जस्वित्वेनोक्तस्तथा रसान्तरव्यभिचारिगर्व्वोऽप्यूर्ज्जस्वीत्यर्थः॥ ॥ २८४ ॥

अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये।
यत् प्रकारान्तराख्यानं पर्य्यायोक्तं तदिष्यते॥ २८५॥

अथ पर्य्यायोक्तं लक्षयति। अर्थमिति। इष्टं विवक्षितमर्थं वक्तुर्वैदग्ध्यभङ्गापत्त्या साक्षाद्वाचकशब्देनानाख्यायाप्रतिपाद्य तस्यैव विवक्षितार्थस्य सिद्धये सचमत्कारप्रतिपत्तये यत् प्रकारान्तराख्यानं प्रकारान्तरेण वैदग्ध्यद्योतकवाक्यविशेषोपन्यासभङ्ग्या व्यञ्जनया प्रतिपादनं तत् पर्य्यायेण तदर्थकशब्दान्तरेण विवक्षितार्थस्योक्तत्वात् पर्य्यायोक्तमिष्यत इत्यन्वयः। पर्य्यायता च शब्दानामेकार्थप्रतिपादकता, तादृशप्रतिपादकता च एकयैव वृत्त्येति न नियमः वृत्त्यन्तरेणापि तदर्थप्रतिपादकत्वे पर्य्यायतानपायात्, विवक्षितार्थस्यात्र क्वचिद्वाच्यार्थनियतसम्बन्धित्वात् वक्त्रादिवैशिष्ट्यप्रतीतिमन्तरेणापि झटिति प्रयुक्तशब्देन व्यज्यते क्वचिच्च वाच्यएव प्रकारान्तरेण व्यज्यत इत्यस्य द्वौ भेदौ, एवमस्य व्यङ्ग्यमूलकेभ्योऽलङ्कारान्तरेभ्यो भेदो बोद्धव्यः तेषु निरुक्तरूपत्वाभावात्, नच 'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्' इत्यादौ वाच्यव्यङ्ग्ययोर्गमनागमनयोर्नियतसम्बन्धित्वात् कथमाक्षेपादस्य भेद इति वाच्यं वाच्यनियतसम्बन्धिनोऽपि गमनाभावरूपव्यङ्ग्यस्य वक्तृवैशिष्ट्यपर्य्यालोचनया त्वयि गतेऽहं मरिष्यामीति द्वितीयार्द्धव्यङ्ग्यपर्य्यालोचनया च प्रतीयमानत्वेन झटिति व्यज्यमानत्वाभावात्। तत्र प्रथमस्योदाहरणं 'दृशत्यसौ

परभृत' इत्यादि, ग्रन्थकृता दर्शयिष्यते। द्वितीयस्य यथा 'य प्रेत्य चिररूढापि निवासप्रीतिरुज्झिता। मदेनैरावणमुख मानेन हृदये हरेः,। अत्र शक्रैरावणौ मानमदमुक्ताविति व्यङ्ग्यं तदेव च प्रकारान्तरेण वाच्यमिति। केचित्तु पर्य्यायोक्तेऽस्मिन् द्वयोरेव वाच्यव्यङ्ग्ययोः प्रस्तुतत्वं समासोक्तौ वाच्यस्यैव प्रस्तुतत्वम् अप्रस्तुतप्रशंसायां व्यङ्ग्यस्यैव प्रस्तुतत्वमित्येषां मिथो-भेद इत्याहुः, तत् प्रसिद्धोदाहरणविरुद्धमित्युपेक्षितम्॥ २९५॥

दशत्यसौ परभृतः सहकारस्य मञ्जरीम्।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम्॥ २९६॥
सङ्गमय्य सखीं यूना सङ्केते तद्रतोत्सवम्।
निर्वर्त्तयितुमिच्छन्त्या कयाप्यपसृतं ततः॥ २९७॥

॥ इति पर्य्यायोक्तम्॥

तत्र वाच्यव्यङ्ग्ययोर्नियतसम्बन्धित्वे पर्य्यायोक्तमुदाहरति। दशत्यसाविति। दशति दंशनेन विनष्टां करोति, सहकारस्येति कुञ्जादहिःप्ररूढस्येत्यर्थः, तत एव वक्त्र्या वहिर्गमनसम्भवात् वारयिष्यामि निवारयेयं, स्वैरमास्यतां सविश्रम्भं स्थीयताम्। अत्र जनवत्प्रदेशे सुरतोत्सवः सप्रतिबन्ध इति कुञ्जात् स्वस्यापसरणं सख्या दृष्टं तस्य च इतोऽहं गच्छामीति वाचक-शब्देन प्रतिपादने वक्त्र्या अवैदग्ध्यं न वा चमत्कारः अतः परभृतवारणप्रकारेण तद् व्यक्तिं नीतमिति वैचित्र्यातिशयः, अत्र वाच्यं दूरस्थस्य परभृतस्य वारणं प्रतीयमानगमनं विना-

नुपपन्नमिति वाच्यव्यङ्ग्ययोर्नियतसम्बन्धित्वं ततश्चान्वयबोध-समकाल इव व्यङ्ग्यस्य गमनस्य प्रतीतिः। एवं 'स्पृष्टास्ता-नन्दने शच्याः केशसम्भोगलालिताः। सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः'। अत्र हयग्रीवेण स्वर्गो विजित इति विवक्षितोऽर्थस्तन्नियतसम्बन्धिना तत्सैनिकानां पारिजातमञ्ज-रीमावज्ञस्पर्शनरूपेण वाच्यार्थेन झटित्येव व्यक्तिं नीत इति पर्य्यायोक्तमेव॥ २८६॥

श्लोकस्यास्य प्राकरणिकार्थमप्रतिपाद्य लक्षणसमन्वयो दुर्बोध इति तं विशदयति। सङ्गमय्येति। यूना कामुकेन सह, सङ्केते सङ्केतस्थाने, तद्रतोत्सवं तयोः सुरतोत्सवं निर्व्वर्त्तयितुं स्वापसरणव्यञ्जनेन निर्ज्जनतया सविश्रम्भं सम्पादयितुम्॥ ॥ २८७॥

किञ्चिदारभमाणस्य कार्य्यं दैववशात् पुनः।
तत्साधनसमापत्तिर्या तदाहुः समाहितम्॥ २९८॥

अथ समाहितं लक्षयति। किञ्चिदारभमाणस्येति। किञ्चित् कार्य्यमारभमाणस्य किमपि स्वरूपयोग्यं कारणमवलम्ब्य कर्त्तुमुद्यतस्य कर्त्तुस्तस्य कार्य्यस्य यत् साधनं तत्कार्य्योपधायक-कारणान्तरं तस्य या दैववशादकस्मात् पुनः समापत्तिः स-म्यक् प्राप्तिः दैवात् कारणान्तरप्राप्त्या अक्लेशेनारब्धकार्य्यस्य यत् समाधानमित्यर्थः तत् कार्य्यसमाधानरूपत्वात् समाहित-माहुरित्यन्वयः। नव्यास्तु इमं समाधिनामकं, भावशान्तिन्तु

समाहितनामिकामाहुः, अत्र साधनपदं साधनान्तरपरं तत एव वैचित्र्यं बोध्यं, स्पष्टमुक्तं प्रकाशकृता 'समाधिः सुकरं कार्य्यं कारणान्तरयोगतः' इति। अलङ्कारत्वञ्चास्य वर्ण्यमानत्वेन वाच्यशोभाजनकत्वाद्बोध्यम्। अत्र दैववशादिति न नियमः बुद्धिपूर्व्वं कारणान्तरावलम्बनेन कार्य्यसमाधानेऽप्यस्य भावात्। तदुक्तं भोजराजेन 'कार्य्यारम्भे सहायाप्तिर्दैवाद्दैवकृतेह या। आकस्मिकी बुद्धिपूर्व्वोभयी वा, तत्समाहितम्' इति॥ १९८॥

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितम्॥ २९९॥
॥ समाहितम्॥

उदाहरति। मानमस्या इति। मानिन्याः पादयोः पतनमपि माननिराकरणस्य कारणं, तदुक्तं 'साम भेदश्च दानञ्च नत्युपेक्षे रसान्तरम्। तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात्' इति। परन्तु नैतदुपधायकं तेन मानभङ्गाभावे उपेक्षादेरपि कर्त्तव्यत्वेनाभ्यनुज्ञानात्, घनगर्ज्जितन्तूपधायकमेव अत्यन्तोद्दीपकत्वात् तथाचात्र पादपतनरूपकारणमवलम्ब्य मानभङ्गार्थं प्रवृत्तस्य दैवादुदीर्णेन घनगर्ज्जितरूपेण कारणान्तरेणाक्लेशेन मानभङ्गरूपकार्य्यसमाधानमिति समाहितम्॥ ॥ १९९॥

आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्।
उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः॥ ३००॥

अथोदात्तं लक्षयति। आशयस्येति। आशयो मनोव्यापारविशेषः अभिप्राय इति यावत्। आशयः स्यादभिप्राय इति मेदिनी। तस्य, तथा विभूतेः सम्पत्तेर्वा यदनुत्तमं नास्त्युत्तमं यस्मादिति लोकातीतमित्यर्थः, महत्त्वमाधिक्यं वर्ण्यत इति शेषः तमलङ्कारमुदात्तार्थवर्णनरूपत्वादुदात्तं नाम प्राहुरित्यन्वयः। वर्णनीयस्य महाशयत्ववर्णनं लोकातिशयसम्पत्तिवर्णनं वा द्विविध उदात्तालङ्कार इत्यर्थः। नव्यास्तु प्रस्तुतस्याङ्गत्वेन वर्ण्यमानं महतां चरितमप्युदात्तं वदन्ति, यदाहुः यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्' इति। यथा 'नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा। अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते'। अत्र प्रस्तुतस्य समुद्रस्याङ्गत्वेन भगवतो लोकसंहरणपूर्व्वकशयनरूपचरितं वर्णितम्, इदमपि प्रस्तुतस्य माहात्म्यातिशयव्यञ्जकत्वात् लोकातीतविभूतिवर्णनरूपमेवेति पृथक्त्वेनोपन्यासो ग्रन्थकृता न कृतः॥ ३००॥

गुरोः शासनमत्येतुं न शशाक स राघवः।
यो रावणशिरश्छेदकार्य्यभारेऽप्यविक्लवः॥ ३०१॥

तत्राशयमहत्त्वमुदाहरति। गुरोरिति। यो रावणस्य देवादिभिरजेयस्यापि निशाचरपतेः शिरश्छेदरूपं यत् कार्य्यं तद्रू-

ऽभारेणनिर्व्वाह्यं गुरुतरकर्म्म तत्राप्यविक्लवोऽव्याकुलः स राघवः गुरोः पितुः शासनं राज्यं विहाय वनं गच्छेत्याज्ञाम्, अत्येतु-मतिक्रमितुं, न शशाकेति व्याजस्तुतिगर्भोक्तिः, अत्र रा-वणवधरूपासाध्यसाधनेऽप्यचुब्धो रामो यद्राज्यच्युतिकरं पितुः शासनं नात्येतुं शशाक तेनास्य धर्म्मपरतन्त्रतया लोकातीता महाशयता प्रतीयते॥ ३०१ ॥

रत्नभित्तिषु सङ्क्रान्तैः प्रतिबिम्बशतैर्वृतः।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः॥ ३०२ ॥

विभूतिमहत्त्वमुदाहरति। रत्नभित्तिष्विति। रत्नभित्तिषु संक्रान्तैः प्रतिफलितैः, कृच्छ्रादतिकष्टेन, आञ्जनेयेन हनूमता, तत्त्वतो यथार्थतया, कृच्छ्रेण लङ्केश्वरस्य तात्त्विकत्वग्रहे प्रति-बिम्बशतवृतत्वं हेतुः। अत्र रावणस्य वासगृहभित्तीनां प्रति-बिम्बग्राहिरत्नमयत्ववर्णनेनातिमहती विभूतिः प्रतीयते॥ ३०२ ॥

पूर्व्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम्।
सुव्यञ्जितमिति प्रोक्तमुदात्तद्वयमप्यदः॥ ३०३ ॥

॥ उदात्तम् ॥

अन्ये त्वाशयाधिक्ये उदात्तं नाद्रियन्ते तन्मतं दूषयन्नस्य द्वैविध्याभ्युपगमे हेतुं दर्शयति। पूर्व्वेति। पूर्व्वत्र गुरोः शास-नमत्येतुमित्युदाहरणे, अत्र रत्नभित्तिषु संक्रान्तैरित्यादौ। अभ्युदयगौरवं विभूतिमहत्त्वं सुव्यञ्जितं स्पष्टतया व्यक्तिं नी-

तम्, इत्यस्माद्धेतोरुदाहृतस्य द्वयमपि प्रोक्तं, प्रोक्तमित्यत्र व्यक्तमिति क्वचित्पाठः स्फुटं प्रतीयमानमित्यर्थः । विषयद्वैविध्येन वैचित्र्यस्यापि द्वैविध्यादलङ्कारस्यास्य द्वैविध्यप्रतिपादनं युक्तिसिद्धमेवेति भावः ॥ ३०३ ॥

अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।
न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥ ३०४ ॥

अथापह्नुतिं लक्षयति । अपह्नुतिरिति । किञ्चित् किमपि प्रकृतस्य गुणक्रियादिरूपधर्ममपह्नुत्यापलप्य असत्यतया प्रतिपाद्येत्यर्थः, अन्यार्थस्य धर्मान्तररूपारोप्यमाणस्य दर्शनं सत्यत्वेन व्यवस्थापनमपह्नुतिरित्यन्वयः । अत्र प्रकृतधर्मनिषेधपूर्व्वको धर्मान्तरारोपः, रूपकसामान्ये तु न प्रकृतधर्मनिषेधः, तत्त्वापह्नवरूपके तु धर्मिणमेव प्रकृतं निषिध्य धर्म्यन्तरारोप इति रूपकादस्य भेदः, एवमुत्प्रेक्षातिशयोक्त्यादौ न कस्यापि निषेध इति तेभ्योऽस्य भेदो बोध्यः,यदि च 'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा । अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातप्रणकिणकलङ्काङ्किततनुम्' । अत्र प्रकृतस्य शशकाङ्कितत्वस्य प्रतिषेधेन तादृशकिणकलङ्काङ्कितत्वप्रतिपादनात् मन्येशब्दप्रयोगाच्च प्रकृतनिषेधपूर्व्विकोत्प्रेक्षाभ्युपगम्यते तदा प्रतीतिकृतोऽनयोर्भेदो बोध्यस्तथाहि उत्प्रेक्षायां प्रतीतिः सम्भावनात्मिका अत्र त्वाहार्य्यात्मिकेति, एवमाक्षेपे निषेधमात्रं न

त्वारोपः । प्रकृतनिषेधश्च नञादिवाचकशब्दवच्छलादिशब्देनापि, यथा 'उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम्' इति, तथा धूमं दधत् प्रकटलाञ्छनकैतवेनेत्यादि, क्वचिन्मयट्प्रत्ययेनापि, यथा 'ताराममयास्तत्र च फेणभङ्गा' इत्यादि, एवम् 'अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्व्वप्लुष्टः पृथुजघनभागे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखाधूमस्येयं परिणमति रोमावलिवपुः' । अत्र वपुःशब्देनापि रोमावलिनिषेधः, एवं प्रकारान्तरेण व्यञ्जनया च निषेधो बोध्यः । एतानि च नवीनाभिमतताया अपह्नुत्या उदाहरणानि, स्वमते तेषु तत्त्वापह्नवरूपकमेव धर्म्मिणं प्रकृतं निषिध्य धर्म्म्यन्तरस्यारोपात् धर्म्मारोप एवापह्नुतिविषयतायाः पूर्व्वं व्यवस्थापितत्वात् । उदाहरति । न पञ्चेषुरिति । इषुपञ्चकमात्रेणेदृशपीडाजनकत्वासम्भवादिति भावः । पत्रिणां बाणानां सहस्रं सहस्रसङ्ख्यत्वमस्तीति शेषः, अत्र स्मरस्य धर्म्मिणः पञ्चेषुताधर्म्मं प्रतिषिध्य सहस्रबाणतारूपधर्म्मान्तरारोपः ॥ ३०४ ॥

चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः ।
सेयमग्निमयी सृष्टिर्मयि, शीता परान् प्रति ॥ ३०५ ॥
शैशिर्य्यमभ्युपेत्यैव परेष्वात्मनि कामिना ।
औष्ण्यप्रकाशनात्तस्य सेयं विषयनिह्नुतिः ॥ ३०६ ॥

क्रमेण भेदान् दर्शयन् विषयापह्नुतिमाह । चन्दनमिति । परान् संयोगिनः प्रति शीता शीतला, सेयं चन्दनादिरूपा सृष्टिर्मयि विरहिणि अग्निमयी अग्निवद्दाहिकेत्यन्वयः ॥

शैत्यमिति । अत्र प्रकृतस्य चन्दनादेर्निषेध्यारोप्यधर्म्मयोः शैत्यतापकत्वयोर्व्यवस्थितविषयत्वप्रतिपादनादियं विषयनिह्नुतिर्विषयापह्नुतिः । अत्र नञाद्यप्रयोगाच्छैत्यस्य निषेधो व्यङ्ग्यः ॥ ३०५ ॥ ३०६ ॥

अमृतस्यन्दिकिरणश्चन्द्रमा नामतो मतः ।
अन्य एवायमर्थात्मा विषनिष्यन्दिदीधितिः ॥ ३०७ ॥
इति चन्द्रत्वमेवेन्दौ निवर्त्त्यार्थान्तरात्मता ।
उक्ता स्मरार्त्तेनेत्येषा स्वरूपापह्नुतिर्मता ॥ ३०८ ॥

स्वरूपापह्नुतिमाह । अमृतेति । चन्द्रमा नामतः संज्ञायां चन्द्रादिसंज्ञामात्रप्रवृत्तये इत्यर्थः, अमृतस्यन्दिकिरणो मतः अमृतस्यन्दिकिरणैराह्लादकत्वेन भ्रमविषय इत्यर्थः, न त्वर्थतः, तस्यामृतस्यन्दिकिरणैराह्लादकत्वं तत्त्वतो नास्तीत्यर्थः, अयमर्थः शब्दमात्रस्य व्युत्पत्तिसिद्धत्वमतेन चन्द्रचन्द्रमःप्रभृतिसंज्ञाशब्दानां चन्दति किरणैराह्लादयतीति चन्द्रः, चन्द्रः सन् मस्यति परिणमत इति चन्द्रमाः इत्यादिव्युत्पत्तिनिबन्धनं प्रवृत्तिमात्रं न तु तच्चैषां शक्तिः यथा गृहादिवाचकानां मण्डपादिशब्दानां मण्डपानकर्त्रादौ, तस्मादिन्दौ चन्द्रादिप्रयोगो रूढ एव न यौगिक इति, एवं चन्द्रस्यामृतस्यन्दि-

किरणैराह्लादकत्वस्वरूपं निषिध्य आरोप्यं दर्शयति । अन्य एवा-यमिति । अर्थात्मा चन्द्रादिपदस्य समुदायशक्तिप्रतिपाद्यार्थ-भूतोऽयमन्य एव तादृशाह्लादकभिन्न एव, कीदृशः स इत्याह विषनिस्यन्दिदीधितिरिति विषनिस्यन्दिकिरणत्वमत्रारोप्यं, तस्मादत्रापि धर्मस्यैव निषेधो धर्मान्तरस्यैव चारोप इति तत्त्वा-पह्नवरूपकाद्भेदः । नाम नो मत इति पाठे तु नामेति प्राका-श्ये, नो इति निषेधे, चन्द्रमसोऽमृतस्यन्दिकिरणत्वस्वरूपं प्रवा-दसिद्धमप्यनुभवाकलितत्वान्नास्त्येवेत्यर्थः । अन्य एव अन्यस्वरूप एव किं तत् स्वरूपमित्याह अर्थात्मेति । अत्रास्येत्यध्याहार्य्यम् अस्य अर्थतो वस्तुत आत्मा स्वरूपं विषनिस्यन्दिदीधितिः विषनिस्यन्दिदीधित्वमस्य तात्त्विकं स्वरूपमित्यर्थः, अर्थो वास्तविक आत्मा स्वरूपं यस्येति बहुव्रीहिणा अर्थात्मेत्यय-मित्यस्य विशेषणं वा ॥ ३०७ ॥

इतीति । चन्द्रत्वममृतस्यन्दिकिरणैराह्लादकत्वस्वरूपं चदि आह्लादे इति चदधातुना चन्द्रपदसिद्धेरिति भावः । एव-कारस्य मिवर्त्त्येत्यनेनान्वयः निषेधानन्तर्य्येणैवारोपस्य वैचि-त्र्यजनकत्वमितिप्रतिपादनायावधारणम्, एतेन क्वचिदपह्नव-पूर्व्वक आरोपः आरोपपूर्व्वकस्यापह्नव इति केषाञ्चिद्भेदक-रणं प्रत्युक्तम् । अर्थान्तरात्मता विषनिस्यन्दिकिरणत्वरूप-स्वरूपान्तरवत्ता, उक्ता आरोपिता । स्वरूपापह्नुतिरिति स्वं रूप्यतेऽनेनेति स्वरूपं नैसर्गिकगुणक्रियादिरूपो धर्मः तन्नि-षेधपूर्व्विकेयमपह्नुतिरित्यन्वर्थता, कश्चित्तु अर्थान्तरात्मतेत्यत्र

अर्थान्तरात्मनेति उक्तेत्यत्र च उक्तमिति पाठः तत्र उक्तमिति भावप्रयोगः॥ ३०८॥

उपमापह्नुतिः पूर्व्वमुपमास्वेव दर्शिता।
इत्यपह्नुतिभेदानां लक्ष्यो लक्ष्येषु विस्तरः॥ ३०९॥

॥ अपह्नुतिचक्रम्॥

उपमापह्नुतिरिति। उपमायाः सादृश्यस्यापह्नुतिरुपमापह्नुतिः सादृश्यापह्नवपूर्व्वकसादृश्यातिशयस्थापनरूपेत्यर्थः, उपमास्वेव दर्शितेति 'न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्ज्जितुम्। कलङ्किनो जडस्येति प्रतिषेधोपमैव सा' इत्युपमाभेदेषु मध्ये प्रतिषेधोपमायामित्यर्थः, अत्र हि इन्दुप्रतियोगिकस्य यत्किञ्चित्सादृश्यस्य प्रतिषेधेन सादृश्यातिशयस्य स्थापनम्। तच्चापह्नवरूपकत्वपह्नुतितो भिन्नविषयमिति तत्रैव प्रतिपादितम्। इतीति अनया दिशा अपह्नुतिभेदानां विस्तरो लक्ष्येषु लक्ष्यः स्वयं ज्ञेय इत्यन्वयः। उपमापह्नुतिवदलङ्कारान्तरप्रतिभोत्पत्तिहेतवोऽपरेऽप्यपह्नुतिभेदा बोद्धव्या इत्यर्थः, तत्र उत्प्रेक्षापह्नुतिर्यथा 'अमृच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः। अप्राप्य मानमङ्गे विगलति लावण्यपूर इव' इति, एवमन्येऽपि बोध्याः॥ ३०९॥

श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः।
तदभिन्नपदं भिन्नपदप्रायमिति द्विधा॥ ३१०॥

अथ शब्दार्थगतत्वेन द्विविधं श्लेषमेकेनैव लक्षणेन लक्षयति। श्लिष्टमिति। अनेकार्थमभिधया वृत्त्या युगपदनेकार्थप्रतिपादकपदवत् तथा एकरूपान्वितम् अर्थभेदेन भिन्नत्वेऽपि युगपदुच्चारणविषयतामापन्नेनैकेन स्वरूपेण युक्तं वचो वाक्यं श्लिष्टं श्लेषालङ्कारवदित्यन्वयः, इष्टमिति वक्रोक्तिरूपेषु प्रायः सर्व्वेष्वप्यलङ्कारेषु शोभातिशयजनकतया कविभिरभिलषितमित्यर्थः, यथा वक्ष्यति 'श्लेषः सर्व्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्। भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्' इति। श्लेषश्च एकतावभासहेतुर्निरन्तरसम्बन्धविशेषः स च प्रकृते शब्दयोरेकप्रयत्नोच्चार्य्यत्वरूपः, अर्थयोश्चैकप्रयत्नोच्चार्य्यमाणशब्देनैककालबोध्यत्वरूपः, शब्दयोर्जतुकाष्ठन्यायेनार्थयोश्चैकवृन्तगतफलद्वयन्यायेन श्लेष इत्यन्ये। श्लेषद्वयञ्चैतदेकत्रैव सम्भवति तथा हि यत्र शब्दस्य नानार्थत्वं तत्रार्थयोः श्लिष्टत्वं विद्यतएव शब्दस्याप्यर्थभेदेन शब्दभेद इति नयेन विभिन्नत्वाच्छब्दयोरपि श्लिष्टत्वम्, अतएव शब्दश्लेषस्यास्य शब्दालङ्कारतया शब्दालङ्कारमध्ये लक्षयितुमौचित्येऽप्यर्थश्लेषाविनाभावित्वेनार्थालङ्कारमध्ये निरूपणं कृतम्। न च नानार्थकशब्दश्लेषे शब्दस्यैव वैचित्र्यबोधोपायत्वेन मुख्यत्वाच्छब्दालङ्कारमध्ये निरूपणमुचितमिति वाच्यं शब्दस्यार्थद्वयप्रतीतिमाधायैव वैचित्र्यजनकत्वेनार्थमपेक्षतया स्वतो वैचित्र्याजनकत्वेन मुख्यत्वाभावात्। शब्दस्यानेकार्थत्वञ्चाभिधया वृत्त्या युगपदनेकार्थप्रतिपादकत्वं तच्च यत्रानेकार्थसङ्केतितस्यापि शब्दस्य शक्तिसङ्कोचकानां

संयोगविप्रयोगादीनामभावस्तत्रैव सम्भवति यत्र तु तेषां सद्भावस्तत्र तैरभिधायाः सङ्कोचितत्वेन युगपदर्थद्वयप्रतीतेरभावान्न श्लेषः, उक्तञ्च 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः'। इति यत्र च संयोगादिप्रतिरोधितयाभिधया एकस्यैवार्थस्य प्रतीतौ जातायां पश्चाद्व्यञ्जनयार्थान्तरप्रतीतिस्तत्रापि न श्लेषः अभिधया युगपदर्थद्वयप्रतीतेरभावेन वैचित्राभावात्, तथाविधस्थले तु ध्वनित्वमेव यथा 'भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्'। अत्र प्रकरणसङ्कोचितया शक्त्या केवलं वर्णनीयः पुरुषः प्रत्याय्यते पश्चाद् व्यञ्जनया तु हस्तीति नात्र श्लेषः। तादृशार्थस्यानेकत्वञ्च क्वचिद्वस्तुतः क्वचिदेकरूपत्वेऽप्यनेकसम्बन्धित्वाच्च तत्राद्ये शब्दश्लेषः, द्वितीयेऽर्थश्लेष इति नव्याः, अर्थश्लेषो यथा 'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्। अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च' इति, अत्रोन्नतिरधोगतिश्चैकैव परन्तु सम्बन्धिभेदाद्भिन्नत्वेन प्रतीयते, अत्रापि सम्बन्धिभेदेनोन्नत्यधोगत्योरनेकत्वात्तद्वाचकपदयोरप्यनेकत्वमिति स्वमते लक्षणसमन्वयः। अस्याभङ्गसभङ्गत्वेन प्रथमं भेदद्वयमाह। तदभिन्नपदमिति। तद्वचः अभिन्नपदं शक्यतावच्छेदकस्यैकत्वे नानात्वे वा अभिन्नप्रकृतिप्रत्ययसमासघटितत्वेनाभिन्नपदवत् तथा भिन्न-

पदानां विभिन्नप्रकृत्यादिवत्पदानां प्रायो बाहुल्यं यत्र तत्। तत्राभिन्नपदके वाक्येऽभङ्गश्लेषः भिन्नपदके सभङ्गश्लेषः सभङ्गश्लेष एवाधिकचमत्काराधायकत्वात् कविभिर्बाहुल्येन प्रयुज्यत इति प्रायपदोपन्यासः। अन्ये तु वर्णप्रत्ययादिगतत्वेनास्याष्टविधत्वमाहुर्यथा 'वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि। श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः' इति। तत्र वर्णश्लेषो यथा 'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता। अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि'। अत्र विधाविति विधिविधुशब्दयोरिकारोकारयोः श्लेषः, एवं प्रत्ययादिश्लेषा बोध्याः॥ ३१०॥

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति लोकस्य हृदयं मृदुभिः करैः॥ ३११॥

अत्राभिन्नपदमुदाहरति। असाविति। उदयमुन्नतिमुदयाचलञ्च, कान्तिमान् कमनीयः रश्मिमांश्च, रक्तमण्डलोऽनुरक्तप्रकृतिकः आलोहितबिम्बश्च, राजा नृपश्चन्द्रश्च, मृदुभिरनुद्वेगकरैः शीतलैश्च, करैः राजग्राह्यभागैः किरणैश्च। अत्र प्रकरणादिनियामकाभावात् द्वावपि नृपचन्द्रौ वाच्यौ, उदयादिपदानि च प्रकृतिप्रत्ययादीनामभिन्नत्वादभिन्नान्येवेत्यभङ्गश्लेषः॥ ३११॥

दोषाकरेण सम्बध्नन्नक्षत्रपथवर्त्तिना।
राज्ञा, प्रदोषो मामित्थमप्रियं किं न बाधते॥ ३१२॥

भिन्नपदमुदाहरति । दोषाकरेणेति । प्रदोषो रजनीमुखं प्रकृष्टदोषवांश्च कश्चित्याकरणिकः, अप्रियं प्रियाविरहिणं द्वेष्यश्च, मामित्थमेवं किं कस्मान्न बाधते यतो दोषाकरेण निशायाः प्रवर्त्तकेन दोषस्याकरेण च, तथा नक्षत्रपथवर्त्तिना आकाशस्थितेन क्षत्रियपथे अपक्षपातव्यवहारे न वर्त्तमानेन च, राज्ञा चन्द्रेण अथ च नृपेण सम्बभ्रन् सम्बन्धं प्राप्नुवन् । अत्र दोषाकरेणेत्यादिपदानि दोषां रात्रिं करोतीति दोषस्याकर इत्यादिव्युत्पत्त्या प्रकृतिप्रत्ययसमासानां भिन्नत्वाद्भिन्नान्येवेति सभङ्गश्लेषः राज्ञेत्यत्र त्वभङ्ग एव तदयं सभङ्गाभङ्गात्मकः, अयमपि तृतीयभेदो नवीनैरङ्गीक्रियते, यदुक्तं 'पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः' इति । शुद्धसभङ्गोदाहरणन्तु 'पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव । विलसत्करेणुगहनं संप्रति सममावयोः सदनम्' इति । अत्र पृथूनां कार्त्तस्वराणां स्वर्णानां, पृथुकानां शिशूनामार्त्तस्वरस्य च पात्रं । भूषिता अलङ्कृताः, भुवि उषिताश्च निःशेषपरिजना यत्र तत्, विलसद्भिः करेणुभिर्हस्तिभिः, विले सीदन्तीति विलसत्का मूषिकास्तेषां रेणुभिश्च गहनमिति सर्व्वेषामेव श्लिष्टपदानां विभिन्नप्रकृत्यादिघटितत्वाद्भिन्नत्वमेव ॥ ११२ ॥

उपमारूपकाक्षेपव्यतिरेकादिगोचराः ।
प्रागेव दर्शिताः श्लेषा दर्श्यन्ते केचनापरे ॥ ३१३ ॥

इत्यमुदाहरणद्वये प्राधान्येन व्यपदेशयोग्यः श्लेषो दर्शितः

संप्रत्यलङ्कारान्तराणामप्ययं चारुतासम्पादक इत्यङ्गभूतं तं दर्शयन्नाह। उपमेति। उपमा चात्र साधारणधर्मप्रयोगवती, तत्र साधारणधर्मस्याभिन्नत्वे अम्भोरुहमिवाताम्रमित्यादिधर्मोपमाश्लेषोपमादावर्थश्लेषः, बालेवोद्यानमालेयं सालकाननशोभिनीति समानोपमायान्तु शब्दश्लेषः। रूपकमपि साधारणधर्मप्रयोगवत् श्लिष्टरूपकादिकम्। आक्षेपश्च 'अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके। मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना' इत्यादि श्लिष्टाक्षेपः। व्यतिरेकोऽपि साधारणधर्मप्रयोगवान्, न च 'त्वं समुद्रश्च दुर्व्वाराविव्यादिसश्लेषव्यतिरेक एव व्यतिरेकपदेनोच्यत इति वाच्यम् एकव्यतिरेकादावपि साधारणधर्मसद्भावेन श्लेषस्यानपायात्। आदिना अर्थान्तरन्याससमासोक्त्यादीनां परिग्रहः, दर्शिता इति उपमादीनां निर्व्वाहकतया अङ्गत्वेन दर्शिता इत्यर्थः। केचनेति अलङ्कारान्तरेष्वङ्गतामापन्ना अङ्गिभूतावेत्यर्थः॥ ३१३॥

अस्त्यभिन्नक्रियः कश्चिदविरुद्धक्रियोऽपरः।
विरुद्धकर्म्मा चास्त्यन्यः श्लेषो नियमवानपि॥ ३१४॥
नियमाक्षेपरूपोक्तिरविरोधी विरोध्यपि।
तेषां निदर्शनेष्वेव रूपमाविर्भविष्यति॥ ३१५॥

तान् क्रमेणोद्दिशति। अस्त्यभिन्नक्रिय इति। तेषामभिन्नक्रियादिश्लेषाणां, निदर्शनेषु वक्ष्यमाणोदाहरणेषु, रूपं स्वरूपम्॥ ३१४॥ ३१५॥

वक्राः स्वभावमधुराः शंसन्त्यो रागमुल्वणम्।
दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान्॥३१६॥

तत्राभिन्नक्रियश्लेषमुदाहरति। वक्रा इति। वक्रास्तिर्य्यक् चालिताः कुटिलभाषिण्यश्च, स्वभावेन मधुराः स्पृहणीयाः अरुचवादिन्यश्च, उल्वणमत्यधिकं रागं नायिकाया अनुरागं शंसन्त्यः सूचयन्त्यः कथयन्त्यश्च, कान्ताभिः प्रेषिताः चिप्ताः आनयनार्थं प्रयुक्ताश्च, दृशश्चक्षूंषि, दूत्यः सखीप्रभृतयः 'दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी। बाला प्रव्रजिका कारुः शिल्पिन्याद्याः स्वयं तथा' इत्युक्तेः। कर्षन्ति आवर्जयन्ति, अत्र वक्रादिविशेषणानां श्लिष्टता, विशेष्यभूतानां दृशां दूतीनाञ्च कर्षणक्रिया एकैवेत्यभिन्नक्रियत्वं, श्लेषस्य तथात्वञ्च परम्परया स्वाश्रयविशेषणानां विशेष्ययोर्दृग्दूत्योरेककर्षणक्रियावत्त्वात्, अत्र च वक्ष्यमाणस्वरूपायास्तुल्ययोगितायाः सद्भावात् श्लेषोऽयं तस्या निर्व्वाहकत्वादङ्गम्, एकया क्रियया वाक्यद्वयदीपनाद्विद्यमानस्य दीपकस्याङ्गमित्यन्ये॥ ३१६॥

मधुरा रागवर्द्धिन्यः कोमलाः कोकिलागिरः।
आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः॥ ३१७॥

अविरुद्धक्रियश्लेषमुदाहरति। मधुरा इति। मधुराः स्वरमाधुर्य्यवत्यः माधुर्य्याख्यनायिकालङ्कारवत्यश्च, माधुर्यञ्च 'सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता' इत्युक्तलक्षणं, रागवर्द्धिन्यः उद्दीपकत्वात् प्रणयप्रकाशनाच्च अनुरागं वर्द्धयन्त्यः, कोमलाः

सुश्राव्याः मृदङ्गश्च, मदकलाः वसन्तप्रारम्भेण मदोन्मत्ताः सौभाग्याद्यवलेपजविकारोन्मत्ताश्च, मदश्च 'मदो विकारः सौभाग्ययौवनाद्यवलेपज' इत्युक्तरूपः । अत्र कोकिलागिर आकर्ण्यन्ते असितेक्षणाश्च क्षिप्यन्त इत्याकर्णनक्षेपणक्रिययोरेककालीनत्वसम्भवेनाविरोधः, श्लेषस्य तादृशक्रियासम्बन्धस्यात्रापि परम्परया, स्वाश्रयविशेषणविशेष्ययोः कोकिलालापासितेक्षणयोः कर्म्मत्वेनाविरुद्धक्रियाद्वयसम्बन्धात् । अत्रापि श्लेषस्य तुल्ययोगितायाः अङ्गत्वम् । केचित्तु कोकिलागिर इत्यसितेक्षणाविशेषणम्, असितेक्षणा इति च असिते अनष्टे विरहिजनेक्षणं यत्रेति व्युत्पत्त्या कोकिलागिर इत्यस्य विशेषणमित्याहुः ॥ ३१७ ॥

रागमादर्शयन्नेष वारुणीयोगवर्द्धितम ।
तिरोभवति घर्म्मांशुरङ्गजस्तु विजृम्भते ॥ ३१८ ॥

विरुद्धक्रियाद्वयश्लेषमुदाहरति । रागमिति । वा णी पश्चिमदिक् मदिरा च, तस्या योगेन सम्बन्धेन उपयोगेन च वर्द्धितं, रागं लौहित्यम् अनुरागञ्च, आदर्शयन् प्रकाशयन् वर्द्धयंश्च, घर्म्मांशुः सूर्य्यस्तिरोभवत्यस्तं गच्छति, अङ्गजः कामस्तु विजृम्भते उद्रेकं गच्छति । अङ्गजपक्षे आदर्शयन्निति हेतौ शतृः आदर्शयितुमित्यर्थः । अत्र तिरोभवनविजृम्भणक्रिययोर्विरोधः, श्लेषे च पूर्व्ववत् परम्परया तत्सम्बन्धः । तुल्ययोगितैवात्र प्रधानम् ॥ ३१८ ॥

निस्त्रिंशत्वमसावेव धनुष्येवास्य वक्रता ।
शरेष्वेव नरेन्द्रस्य मार्गणत्वञ्च वर्त्तते ॥ ३१८ ॥

अनियमश्लेषमाह । निस्त्रिंशत्वमिति । निस्त्रिंशत्वं त्रिंशदङ्गुल्यधिकपरिमाणवत्खड्गत्वं निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति व्युत्पत्तेः, निर्दयत्वञ्च 'अथ निस्त्रिंशः खड्गे ना निर्दये त्रिषु' इति मेदिनी । असावेव न तु हृदये । वक्रता आकर्षणेनाशरलता वामता च धनुष्येव न तु व्यवहारे, मार्गणत्वं बाणत्वं याचकत्वञ्च शरेष्वेव न त्वात्मनि, अत्रैवकारैर्निस्त्रिंशतादिपदानां द्वितीयार्था व्यवच्छेद्येषु निषिद्धतया प्रतीयन्त इति श्लेषसङ्कारः, अत्रैवकारेण नियमद्योतनान्नियमवान्, नियमस्य क्वचिद्द्योतकाभावेऽपि सामर्थ्यादवगीयते, यथा 'यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्म्मसु वर्णसङ्कराश्चापेषु गुणच्छेदा' इत्यादि, अत्र न प्रजास्वित्यादिव्यवच्छेद्यानां स्फुटं प्रतीयमानत्वादेवकाराभावेऽपि चित्रकर्म्मस्वेवेत्यादिनियमः प्रतीयत इत्ययमपि श्लेषो नियमवानेव, अत्र च परिसङ्ख्यालङ्कारः प्रधानं स च ग्रन्थकृतानुक्तोऽपि स्फुटवैचित्र्योऽन्यैरुक्तोऽभ्युपगन्तव्यः, यदुक्तं 'प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् । तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा । परिसङ्ख्या' इति । श्लेषश्चायं तदङ्गतया प्रतीयते । न च 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयत' इत्यनेन नियमपरिसङ्ख्ययोर्भेदावगतेः परिसङ्ख्याभ्युपगमे कथमस्य अनि-

यमत्वमिति वाच्यं, मतेऽस्मिन्नन्यव्यपोहप्रतीतेरेव परिसङ्ख्यात्वा-भ्युपगमात् व्यपोहस्य चात्र स्फुटं प्रतीयमानत्वात्॥ ३१९॥

पद्मानामेव दण्डेषु कण्टकस्त्वयि रक्षति।
अथवा दृश्यते रागिमिथुनालिङ्गनेष्वपि॥ ३२०॥

नियमाक्षेपरूपोक्तिश्लेषमुदाहरति। पद्मानामेवेति। पद्मानामेव दण्डेषु न तु तव दण्डाख्योपायेषु, कण्टकस्तीक्ष्णाग्रावयवविशेषः क्षुद्रशत्रूरोमाञ्चश्च, 'रोमाञ्चे क्षुद्रशत्रौ च तरोरङ्गे च कण्टकः' इत्युक्तेः। त्वयि रक्षति महीं पालयति सति। अथवेति रागिमिथुनस्यानुरक्तस्त्रीपुंसयोरालिङ्गनेष्वपि कण्टको दृश्यत इत्यन्वयः। अत्र पद्मानामेवेति नियमस्याथवेत्यादिना निषेधस्तद्बोधकोक्तियुक्तोऽयमिति नियमाक्षेपरूपोक्तिश्लेषः। अत्र पूर्व्वार्द्धे परिसङ्ख्यैव प्रधानम्, अर्द्धद्वये च एकत्र निहितस्य कण्टकस्य वाक्यद्वयोद्दीपनाद्दीपकं प्रधानमिति श्लेषस्य तदङ्गता॥ ॥ ३२०॥

महीभृद्भूरिकटकस्तेजस्वी नियतोदयः।
दक्षः प्रजापतिश्चासीत् स्वामी शक्तिधरश्च सः॥ ३२१॥

अविरोधिश्लेषमुदाहरति। महीभृदिति। महीभृद्राजा पर्व्वतश्च, भूरिकटको बहुस्कन्धावारः विस्तीर्णनितम्बश्च। तेजस्वी प्रतापवान् किरणवांश्च, नियतोदयोऽव्याहतसम्पत्तिः प्रतिदिवसं जायमानोद्गमश्च। दक्षः कुशलो मुनिविशेषश्च, प्रजा-

पतिः प्रजापालकः सृष्टिकर्त्ता च । स्वामी प्रभुर्विशाखश्च, स्वामी प्रभुविशाखयोरिति मेदिनी, शक्तिधरः प्रभावोत्साहमन्त्रजसामर्थ्यवान् अस्त्रविशेषधारी च । अत्र महीभृदादिश्लिष्टपदार्थद्वयस्य भूरिकटकादिश्लिष्टपदार्थद्वयेन सह सम्बन्धे विरोधाभावादविरोध्ययं श्लेषः स चात्र प्रधानम् ॥ ३२१ ॥

अच्युतोऽप्यवृषच्छेदो राजाऽप्यविदितक्षयः ।
देवोऽप्यविबुधो जज्ञे शङ्करोऽप्यभुजङ्गवान् ॥ ३२२ ॥

॥ श्लेषचक्रम् ॥

विरोधिश्लेषमुदाहरति । अच्युत इति । अच्युतः सत्पथाच्युतिरहितो विष्णुश्च, वृषो धर्मो वृषभासुरश्च । राजा नराधिपश्चन्द्रश्च, क्षयः सम्पत्तिक्षीणता यक्ष्मरोगश्च । देवो राजा सुरश्च, विबुधो विगतपण्डितः देवश्च । शङ्करो मङ्गलकृत् शिवश्च, भुजङ्गः षिङ्गः सर्पश्च । अत्राच्युतादिपदद्वितीयार्थे विष्ण्वादौ वृषच्छेद्यादिपदद्वितीयार्थस्याभावो विरुद्ध इति विरोधसहितोऽयं श्लेषः स च विरोधाभासस्याङ्गम् ॥ ३२२ ॥

गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम् ॥
विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ ३२३ ॥

अथ विशेषोक्तिं लक्षयति । गुणेति । विशेषो वर्णनीयस्य वीर्याद्युत्कर्षस्तस्य दर्शनाय प्रतिपादनायैव गुणजातिक्रियादीनां वर्णनीयस्य प्रारिप्सितकर्मसाधने उपकरणभूतानामित्यर्थः

'आदिना द्रव्यादिपरिग्रहः' यद्वैकल्यदर्शनं कार्य्यसिद्धावनुपयोगित्वेनानपेक्षणीयत्वप्रतिपादनं वैफल्येति पाठे स एवार्थः सा विशेषाय गुणादिवैकल्योक्तिरूपत्वाद्विशेषोक्तिरिष्यत इत्यन्वयः। गुणादीनामिति भेदकथनाय नतु स्वरूपनिर्व्वाहाय, पदार्थमात्रगतवैकल्योक्तेरेवास्याः स्वरूपत्वात्। पूर्व्वोक्तातिशयोक्तिरपि वर्णनीयोत्कर्षोक्तिरूपैव परन्तु न तत्र गुणादीनां वैकल्यप्रतिपादनमित्यनयोर्भेदः। विभावनातोऽस्याभेदस्तूदाहरणव्याख्यानावसरे दर्शयिष्यते। अत्र गुणजातिक्रियाः क्वचिद्वर्णनीयगताः क्वचित्तदीयोपकरणगताश्च बोध्याः, गुणादिवैकल्यञ्च क्वचिच्छाब्दं क्वचिद्गम्यं, विशेषदर्शनायैवेत्यवधारणं कथमपि विशेषदर्शनाभावे सत्यपि गुणादिवैकल्ये नास्याः सम्भव इति सूचनाय। नव्यास्तु सत्यपि कारणे कार्य्याभावो विशेषोक्तिरित्याहुः तत्रालङ्कारसंज्ञानामन्वर्थतयैव प्राचीनैः प्रयुक्तत्वेन हेतुसमानाधिकरणकार्य्याभाववर्णने विशेषप्रतीतेरभावाद्विशेषोक्तीति संज्ञाभ्युपगमे हेतुः प्रष्टव्यः, नच विशेषोवैचित्र्यं तच्च सत्यपि कारणे कार्य्याभावोपनिबन्धे विद्यत एवेति विशेषोक्तिसंज्ञाया अन्वर्थतैवेति वाच्यम्, अलङ्कारमात्रस्यैव वैचित्र्यात्मकत्वेनोपमादावपि विशेषोक्तिसंज्ञायाः प्रसङ्गात्, अथ सति हेतौ कार्य्याभावप्रतिपादनजन्यं स्फुटं प्रतीयमानमपि वैचित्र्यं त्वयापि कथं संज्ञान्तरेणालङ्कारतया न संगृहीतमिति चेन्नैवं तत्रास्माकमतिशयोक्तेरभ्युपगमात् कार्य्यकारणपौर्व्वापर्य्यविपर्य्ययवद्यात्यतिशयोक्त्यभ्युपगमस्यौचित्यात्। तस्माद्गुणादिवैकल्य-

वर्णनेन वर्णनीयस्य विशेषकथनमेव विशेषोक्तिरिति युक्ततरं। यत्त्विहत्र यत्रेति क्वचित्पाठः यत्र वैचित्रे इत्यर्थः ॥ ३२३ ॥

न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः।
तथापि जितमेवासीदमुना भुवनत्रयम् ॥ ३२४ ॥

तत्र गुणवैकल्यविशेषोक्तिमुदाहरति। न कठोरमिति। न कठोरं न वा तीक्ष्णमिति आयुधस्य पुष्पमयत्वादिति भावः, अत्रायुधस्य कठोरत्वं तीक्ष्णत्वञ्च गुणमनपेक्ष्यैव कामेन भुवनत्रयं जितमिति जेतुः कामस्य वीर्य्योत्कर्षः प्रतीयते। अत्रायुधगतकठोरत्वादिगुणस्य भुवनजयं प्रति प्रसिद्धहेतुत्वाभ्युपगमे तद्व्यावृत्त्या तादृशकार्य्यवर्णने उपधायककारणान्तरस्य कार्य्यस्वाभाविकत्वस्य वा विभावनीयत्वे तात्पर्य्याभावान्न विभावनायाः सम्भवः, विनोपकरणं क्रियानिष्पादकतया कर्तुरुत्कर्षप्रतिपादनस्यैवात्र तात्पर्य्यविषयत्वादित्यनयोर्भेदो बोध्यः। अत्रोपकरणगतगुणस्य वैकल्यम् ॥ ३२४ ॥

न देवकन्यका नापि गन्धर्व्वकुलसम्भवा।
तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ ३२५ ॥

जातिवैकल्यविशेषोक्तिमुदाहरति। न देवेति। अत्र देवत्वं गन्धर्व्वत्वञ्च जातिविशेषः तन्निरपेक्षेण तपोभङ्गसामर्थ्यवर्णनाद्वर्णनीयनायिकायाः सौन्दर्य्यादिविशेषः प्रतिपादितः, देव्यो गन्धर्व्व्यश्च तपोभङ्गं कुर्व्वन्तीति पुराणप्रसिद्धिः। अत्र वर्णनीयगताया जातेर्वैकल्यम् ॥ ३२५ ॥

न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः ।
न च रक्ताभवद्दृष्टिर्जितञ्च द्विषतां बलम् ॥ ३२६ ॥

क्रियावैकल्यविशेषोक्तिमुदाहरति । न बद्धेति । अत्र प्राकरणिकः कश्चिद्वीरो वर्णनीयः, बन्धनं स्फुरणञ्च क्रिया, रक्तत्वन्तु गुण एव, तदत्र क्रियागुणवैकल्यप्रयुक्तयोर्विशेषोक्त्योः सङ्करः । शुद्धक्रियावैकल्योदाहरणन्तु 'नोपभोगो न वा दानं बन्धूनां भरणं न वा । तथापि गुरुतां धत्ते नृणां संचितं धनम्' इति । अत्रोपभोगादिक्रियामात्रवैकल्यम् । प्रकृते च द्विषज्जये क्रोधकार्य्याणां भ्रुकुटिबन्धनादीनामनपेक्षणीयत्वप्रतिपादनेन वर्णनीयस्य क्रोधशून्यत्वव्यक्त्या महावीरत्वरूपविशेषः सूच्यते, अतएवोक्तं रौद्रप्रस्तावे 'रक्तास्यनेत्रता चास्य भेदिनी युद्धवीरत' इति ॥ ३२६ ॥

न रथा न च मातङ्गा न हया न च पत्तयः ।
स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ ३२७ ॥

द्रव्यवैकल्यविशेषोक्तिमुदाहरति । न रथा इति । स्त्रीणां रथादीनि जयसाधनानि न सन्ति तथापि ताभिरपाङ्गदृष्ट्यैव केवलेन कटाक्षेणैव जगत्त्रयं जीयते इत्यन्वयः, अत्र रथादिद्रव्याणां वैकल्यं, लक्षणे आदिपदगृहीतद्रव्यञ्च वैशेषिकमतोक्तद्रव्यं न तु वैयाकरणमतोक्तद्रव्यं रथादिशब्दानामेकव्यक्तिवाचित्वाभावात् । एवमभावादिवैकल्योदाहरणं बोध्यम् । एतानि गुणादिवैकल्यस्य शब्दतो उदाहरणानि ॥ ३२७ ॥

एकचक्रो रथो, यन्ता विकलो, विषमा हयाः ।
आक्रामत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ ३२८ ॥
सैषा हेतुविशेषोक्तिस्तेजस्वीति विशेषणात् ।
अयमेव क्रमोऽन्येषां भेदानामपि कल्पने ॥ ३२९ ॥

॥ विशेषोक्तिचक्रम् ॥

इत्थं गुणादिवैकल्येन विशेषोक्तेर्भेदान् दर्शयित्वा प्रकारा-न्तरेणान्येऽपि भेदाः सम्भवन्तीति प्रतिपादयन् तेषां दिग्-दर्शनार्थं हेतुविशेषोक्तिमुदाहरति । एकचक्र इति । यन्ता सारथिररुणः विकलोऽङ्गविकलः अनूरुत्वादिति भावः । वि-षमाः सप्तसङ्ख्याः अशिक्षितत्वादुद्धताश्च । नभस्तलमतिविस्तो-र्णमाकाशमार्गम् । अत्र जगत्त्रयमिति क्वचित्पाठस्तु न सम्यक् पातालादौ सूर्य्यप्रयाणस्याप्रसिद्धेः । अन्येषामतिविस्तीर्णमा-र्गप्रयाणे बहुचक्ररथोऽविकलाङ्गो यन्ता अविषमाश्च हयाश्चापे-क्ष्यन्ते सूर्य्यस्य तु तन्निरपेक्षेणापि चिकीर्षितसिद्धिरित्युत्कर्षा-तिशयः तत्र च हेतुस्तेजस्वीति न हि तेजस्विनः स्वार्थसाधन उपकरणमपेक्षन्ते, अत्र तेजस्वीति हेतुगर्भविशेषणोपन्यासेन वर्णनीयसूर्य्यस्य विशेषप्रतिपादनाद्धेतुविशेषोक्तिरियम् । अत्र च रथादिगतबहुचक्रत्वादिधर्माणां वैकल्यं गम्यम् ॥ ३२८ ॥

सैषेति । तेजस्वीतिविशेषणात् तेजस्वीति हेतुगर्भविशेषणा-दित्यर्थः । हेतुविशेषोक्तिरिति हेतूपन्यासेन वर्णनीयगतवि-शेषप्रतिपादनादन्वर्थता ॥

2 e 2

अयमेवेति। अयमेव क्रम ईदृश्येव दिक्। तथाचास्मिन्नुदाहरणे यथा हेत्वलङ्कारसम्बन्धेन विशेषोक्तिभेदस्तथा अलङ्कारान्तरसम्बन्धेनापरेऽपि भेदा बोद्धव्या इत्यर्थः, तथाच अतैलपूराः सुरतप्रदीपाः, द्यूतं हि नाम असिंहासनं राज्यमित्यादि अत्र च रूपकयोगः, पूर्व्वत्र परिणाम इति विश्वनाथः ॥ ३२९ ॥

विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित्।
कीर्त्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ ३३० ॥

अथ तुल्ययोगितां लक्षयति। विवक्षितेति। विवक्षिताः प्रस्तुतनिष्ठत्वेन प्रतिपादयितुमिष्टा ये गुणाः स्तुतिहेतवो निन्दाहेतवो वा धर्म्मास्तैरुत्कृष्टा विख्यातास्तैः समीकृत्य समकक्षीकृत्य स्तुतिनिन्दार्थं स्तुत्यर्थं निन्दार्थं वा कस्यचित् प्रस्तुतस्य यत्कीर्त्तनं सा प्रस्तुताप्रस्तुतयोस्तुल्यगुणयोगित्वप्रतिपादनरूपत्वात्तुल्ययोगितेत्यन्वयः। विवक्षितगुणोत्कर्षैरिति पाठे विवक्षितगुणैरुत्कर्षः ख्यातिर्येषामिति बहुव्रीहिः। अत्र बहुवचनमविवक्षितं द्वाभ्यामेकेन वा समीकरणेऽस्याः सद्भावात्। एवं विवक्षितगुणोत्कृष्टैरप्रस्तुतैरेवेति न नियमः प्रस्तुतेन समीकरणेऽप्यस्याः सम्भवात् यथा, 'कटाक्षा मधुरालापा विलासास्ते च ते शुभे। जगज्जये प्रवृत्तस्य कन्दर्पस्य महद्बलम्' अत्र कटाक्षादयः सर्वेऽपि प्रस्तुताः, एतेन प्रस्तुतयोरेवाप्रस्तुतयोरेव वा एकधर्म्माभिसम्बन्धस्तुल्ययोगितेति केषाञ्चिन्मतं प्रत्युक्तम्, ता-

दृश नियमाभ्युपगमे प्रयोजनानुपलम्भेः वैचित्र्यस्य च सर्वत्र समानत्वात्, नच प्रस्तुताप्रस्तुतयोरप्येकधर्म्मसम्बन्धेन तुल्ययोगिताभ्युपगमे दीपकस्य विषयापहारः स्यादिति वाच्यं स्वमते वाक्यान्तरीयपदस्यानुषङ्गादिना स्वार्थद्वारा वाक्यान्तरार्थोद्दीपकत्वस्यैव दीपकालङ्कारत्वात् तत एव च दीपकसंज्ञाया अन्वर्थत्वात्। अथोपमालङ्कारेऽपि स्तुत्यर्थं निन्दार्थं वा विवक्षितगुणोत्कृष्टेन प्रस्तुतस्य समीकरणं साम्यस्य च व्यङ्ग्यतायामुपमाङ्गीकृता तद्-नयोः समानविषयतापत्तिरिति चेन्नैवं प्रतीतिभेदेनैवानयोर्भेदात् तथा ह्युपमायां वाच्यस्य व्यङ्ग्यस्य वा सादृश्यस्य प्रतीतिः शाब्दी 'दिवाजागर्त्ति रक्षायै पुलोमारिर्भुवो भवान्। असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः' इत्यादितुल्ययोगोपमादावपि व्यञ्जनयोपस्थितस्यापि सादृश्यस्य वृत्तिवेद्यत्वेन शाब्दबोधाभ्युपगमात्, व्यञ्जनाया वृत्तित्वस्य चालङ्कारिकसिद्धान्तसिद्धत्वात् प्रकृते तु न तथा, सर्वेषां समकक्षतया विवक्षितगुणान्वयित्वेनैव शाब्दबोधविषयत्वात् पर्य्यवसाने तु सादृश्यप्रतीतिरिति, इत्थञ्च विवक्षितगुणवत्तया प्रसिद्धैः सहाप्रसिद्धस्य वर्णनीयस्य समकक्षतया तादृशगुणान्वयित्वकीर्तनेन प्रशंसनं निन्दनं वा तुल्ययोगितेति निर्गलितोलक्षणार्थः। अन्ये तु स्तुतिनिन्दयोरेवात्र प्राधान्येन प्रतिपाद्यत्वं सादृश्यन्तूपसर्ज्जनीभूतमित्यतस्तुल्ययोगोपमातोऽस्य भेद इत्याहुः॥ १३०॥

यमः कुवेरो वरुणः सहस्राक्षो भवानपि।
बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम्॥ १३१॥

तत्र स्तुतावुदाहरति। यम इति। अत्र लोकपालत्वरूपो गुणो वर्णनीये राज्ञि वस्तुमिष्टः तेनोत्कृष्टैर्यमादिभिः सह सम-कक्षतया तद्गुणभागित्वकीर्त्तनेन राजा स्तुतः॥ ३३१॥

सङ्गतानि मृगाक्षीणां तडिद्विलसितानि च।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम्॥ ३३२॥
॥ तुल्ययोगिता॥

निन्दायामुदाहरति। सङ्गतानीति। सङ्गतानि सङ्गमाः। क्षणद्वयं न तिष्ठन्ति क्षणमात्रं तिष्ठन्तीत्यर्थः। स्वयं स्वस्यानु-रागेणैव नतु परानुरोधेन घनं निविडं नतु सञ्चयं यथा तथा आरब्धान्यपि, लोकनया स्तनाभ्यामित्यादिवत् क्वचिदन्यथा-पीति तत्पुरुषः ‘अथच घनैर्मेघैः स्वयमारब्धान्यपि। रूपमूल-कलनाच्च चारुतातिशय इतिप्रतिपादनाय श्लिष्टविशेषणोप-न्यासः। अत्राचिरावस्थायित्वगुणो वर्णनीये मृगाक्षीसङ्गमे विव-क्षितः तद्वत्त्वेन प्रसिद्धैस्तडिद्विलसितैः सह तुल्यतया तद्गु-णसम्बन्धवर्णनात् स च सङ्गमो निन्दितः॥ ३३२॥

विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्।
विशेषदर्शनायैव स विरोधः स्मृतो यथा॥ ३३३॥

अथ विरोधं लक्षयति। विरुद्धानामिति। विशेषो वर्ण-नीयस्योत्कर्षस्तस्य दर्शनायैव, विरुद्धानां विरोधवतां, विरो-धानैसर्गिकासामानाधिकरण्यं परस्परसामानाधिकरण्यशून्या-

नामित्यर्थः पदार्थानां यत्र वैचित्र्ये संसर्गदर्शनं सामानाधिकरण्यप्रतिपादनं स विरोधप्रयोजकत्वाद्विरोधः स्मृत इत्यन्वयः। विरुद्धानां संसर्गस्तत्त्वतो न सम्भवतीति विरुद्धानां वस्तुतोविरोधाभावेऽप्यापाततो विरुद्धत्वेन प्रतिभासमानानामित्यर्थः, स्पष्टमुक्तं प्रकाशकृता 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वच' इति। पदार्थानामिति जातिगुणक्रियाद्रव्याणामित्यर्थः तत्र जातेर्जात्यादिभिश्चतुर्भिर्विरोधः, गुणस्य गुणादिभिस्त्रिभिः, क्रियायाः क्रियाद्रव्याभ्यां द्वाभ्यां, द्रव्यस्य द्रव्येणैकेनेति विरोधस्य दश भेदा अन्येरुक्ता ज्ञातव्याः। अयमेव शब्दश्लेषनिबन्धनश्चेद्विरोधाभास उच्यते यथा 'पूर्व्वोदाहृते अच्युतोऽप्यवृषच्छेदी-त्यादौ, एष च अपिप्रयोगे वाच्यस्तदप्रयोगे व्यङ्ग्यः॥ २३३ ॥

कूजितं राजहंसानां वर्द्धते मदमञ्जुलम्।
चीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम्॥ २३४॥

कूजितमिति। अत्रैकस्मिन् शब्दरूपे कर्त्तरि विरुद्धयोरपि वृद्धिचयक्रिययोः संसर्गदर्शनं, सम्बन्धिभेदेन शब्दयोर्भिन्नत्वाद्विरोधप्रशमनम्, अनेन च वर्णनीये शरत्काले एकजातीययोरपि बलाबलकारितया विशेषः प्रतीयत इत्यस्यालङ्कारता॥ २३४॥

प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते।
रागेण पुनराक्रान्तं जायते जगतां मनः॥ २३५॥

प्रावृषेण्यैरिति। दुर्द्दिनायते श्यामलं भवति। रागेण

नुरागेण लौहित्येन च, आक्रान्तमित्यत्र उत्क्षिप्तमिति क्वचित्पाठः। अत्रानुरागस्य लौहित्येनाभेदाध्यवसायाच्छ्यामत्वलौहित्यगुणयोरेकजलधरनिष्पाद्यत्वरूपससर्गवर्णनेन विरोधः तस्य च श्लेषवशात् प्रशमनम्। अनेन च वर्णनीये प्रावृट्काले कश्चिद्विशेषः प्रतीयते॥ ३३५॥

तनुमध्यं पृथुश्रोणि रक्तौष्ठमसितेक्षणम्।
नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम्॥ ३३६॥

पुनरप्येकत्र बहूनां गुणयुग्मानां विरोधोपन्यासे वैचित्र्यातिशय इति ज्ञापनाय तादृशं गुणविरोधमुदाहरति। तनुमध्यमिति। कं न हन्ति न व्याकुलयति। अत्र तनुत्वपृथुत्वयोः, रक्तत्वासितत्वयोः, नतत्वोन्नतत्वयोर्गुणयोर्विरोधः, तेषाञ्चाश्रयभेदात् तत्परिहारः। अनेन च वर्णनीयानां स्त्रीणां विशेषः प्रतीयते। तनुत्वपृथुत्वयोः नतत्वोन्नतत्वयोश्च परिमाणरूपत्वाद्गुणत्वम्॥
॥ ३३६॥

मृणालबाहु रम्भोरु पद्मोत्पलमुखेक्षणम्।
अपि ते रूपमस्माकं तन्वि तापाय कल्पते॥ ३३७॥

मृणालेति। अपीति पूर्व्वार्द्धगतविशेषणत्रयेऽन्वेति। रूपं वपुः। अत्र मृणालवच्छीतलौ बाहू यत्रेत्याद्युपमितिगर्भबहुव्रीहौ शीतलत्वगुणतापक्रिययोर्विरोधः, मृणाले एव बाहू यत्रेत्यादिरूपकगर्भबहुव्रीहौ तु मृणालादिभिर्बाह्वादीनामभे-

दाध्यवसायात् मृणालवलयाचादिजातिभिस्तापक्रियाया वि-
रोधः, वसुविरहित्वाच प्रशमनम् ॥ ३३७ ॥

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।
उदश्रयन्ति पान्थानामस्पृशन्तोऽपि लोचने ॥ ३३८ ॥

एषु भावाभिमाने क्रियादिविरोधा दर्शिताः, संप्रत्य-भावाभिमाने क्रियाविरोधमुदाहरति । उद्यानेति । उद-श्रयन्ति उद्गतवाष्पे कुर्व्वन्ति । अत्रास्पृशन्तोऽपीति स्पर्शनाभा-वेन उदश्रयणक्रियाया विरोधः, स्पर्शनाभावस्य स्पर्शनक्रियाप्र-तियोगिकत्वात्क्रियात्मक एव मतेऽस्मिन्नभावानां प्रतियोगि-धर्म्मित्वात् । विरोधप्रशमनञ्चात्र कुसुमरेणूनामुद्दीपकत्वात् ॥
॥ ३३८ ॥

कृष्णार्ज्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि ! ॥ ३३९ ॥

कृष्णेति । ते दृष्टिरर्ज्जुने पार्थेऽनुरक्ता कृष्णा द्रौपद्यपि तद्रूपापीत्यर्थः कर्णावलम्बिनी राधेयाश्रया इति कृष्णारूप-द्रव्यस्य राधेयावलम्बनक्रियया विरोधः, तत्प्रशमनन्तु श्लेषवशात् यथा कृष्णा असिता अर्ज्जुना शुक्ला अनु पश्चात् प्रान्तभाग इत्यर्थः रक्ता च श्रवणपर्य्यन्तगामिनी चेति ॥ ३३९ ॥

इत्यनेकप्रकारोऽयमलङ्कारः प्रतीयते ।

॥ विरोधचक्रम् ॥

अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः ॥ ३४० ॥

उपसंहरति । इत्यनेकेति । अनेकप्रकारः पूर्व्वोक्तयुक्त्या दशविधः । प्रतीयत इत्यत्र अतिशोभत इति क्वचित्पाठः ॥

अथाप्रस्तुतप्रशंसां लक्षयति । अप्रस्तुतेति । अप्रक्रान्तेषु अप्रस्तुतेषु, षष्ठ्यर्थे सप्तमी, बहुवचनमविवक्षितं, या स्तुतिरिति प्रस्तुतस्य निन्दार्थमिति शेषः ततएव वैचित्र्योदयः । ततश्चाप्रस्तुतस्य स्तुत्या प्रस्तुतस्य निन्दनीयत्वसूचनमप्रस्तुतप्रशंसेत्यर्थः । अप्रक्रान्तेप्सितस्तुतिरिति क्वचित्पाठः तत्र अप्रस्तुतस्य ईप्सिता प्रस्तुतद्वेषादभिमता स्तुतिरप्रस्तुतप्रशंसेति स एवार्थः, कश्चित्तु इममेव पाठं धृत्वा अप्रक्रान्तेनाप्रक्रान्तवर्णनेन ईप्सितस्य प्रस्तुतस्य स्तुतिर्वर्णनं वाच्यस्याप्रस्तुतस्य वर्णनद्वारा प्रस्तुतस्येद् गम्यते तदा अप्रस्तुतप्रशंसा स्यादिति व्याचष्टे तदेतद्ग्रन्थस्यास्य पौर्व्वापर्य्यमनालोचयतो नवीनमतानुशीलनविमुग्धबुद्धेर्विलसितं, नवीनाहि अप्रस्तुताद्वाच्यात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा, प्रस्तुताद्वाच्यादप्रस्तुतप्रतीतौ समासोक्तिरिति विषयविभागेनालङ्कारद्वयमाहुः, एतच्च प्रकृतविरुद्धं प्रकृते हि अप्रस्तुतवर्णनेन प्रस्तुतस्य प्रतीतौ समासोक्तिरभ्युपगता ग्रन्थकृता, यथा 'वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः । उक्तिः संक्षेपरूपत्वात् सा समासोक्तिरिष्यते, इति तस्मादलङ्कारयोरनयोरापद्यमानमप्यभिन्नविषयत्वं व्याख्यातुरस्य दृक्पथं नावतीर्णमिति सम्भाव्यते । अतः प्राचीननिरूपिताया अप्रस्तुतप्रशंसेतिसंज्ञाया

अन्वर्थतारक्षणस्यावश्यकतया प्रस्तुतनिनिन्दिषयाऽप्रस्तुतस्य प्रशंसनमेवास्यालङ्कारस्य विषयः, अप्रस्तुतात् प्रस्तुतप्रतीतिस्तु समासोक्तेर्विषयः, अन्यथैकस्य विषयापहारापत्तेरिति युक्तमुत्पश्यामः। नच वाच्यव्यङ्ग्ययोरुपमानोपमेयत्व एव समासोक्तिः अन्यत्राप्रस्तुतप्रशंसेत्ययमेव विषयविभाग इति वाच्यं सुखं जीवन्तीत्याद्यप्रस्तुतप्रशंसोदाहरणेऽपि हरिणाः सुखेन जीवन्तीति वयं दुःखेन जीवाम इति च वाच्यव्यङ्ग्ययोर्व्यतिरेकगर्भौपम्यस्य स्फुटं प्रतीयमानतया ग्रन्थकर्त्तुः प्रमादापत्तेः, सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यत इत्युदाहरणव्याकारेण संज्ञाया अन्वर्थत्वाङ्गीकारे ग्रन्थकर्त्तुः स्वरसस्य स्फुटं प्रतीयते तस्मादप्रस्तुतस्य प्रशंसायामेवाप्रस्तुतप्रशंसा नतूक्तिमात्रे इति निष्कर्षः। किञ्चाप्रस्तुतात् प्रस्तुतप्रतीतिवत् प्रस्तुतादप्रस्तुतप्रतीतिरपि समासोक्तिविषयोबोध्यः एतत्सङ्ग्रहायालङ्कारान्तरानिरूपणात् वैचित्रस्य च तुल्यतयोपलम्भादेतच्च 'व्याभूय यदमनमम्बुजलोचनाया इत्युदाहरणमुद्धरद्भिः पूर्व्वमेवोक्तमस्माभिः॥ ३४०॥

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः।
अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः॥ ३४१॥
सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते।
राजानुवर्त्तनक्लेशनिर्व्विसेन मनस्विना॥ ३४२॥

॥ अप्रस्तुतप्रशंसा॥

उदाहरति । सुखमिति । प्रभुसेवाविरक्तस्योक्तिरियम् । अपरसेविनो जीवनार्थं परसेवाजन्यदुःखानभिज्ञाः । अन्नैरिति गौणप्रयोगः ओदन एवान्नपदस्य शक्तत्वात् ॥ ३४१ ॥

सेयमिति । अप्रस्तुतैवेत्येवकारेण प्रस्तुताप्रस्तुतयोर्द्वयोः प्रशंसायां नायमलङ्कार इति सूचितं यथा, 'याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां गन्ता कं प्रति पान्थसन्ततिरसौ सन्तापमालाकुला । इत्थं यस्य निरन्तराधिपटलैर्नित्यं वपुः चीयते धन्यं जीवनमस्य मार्गसरसोधिग्वारिधीनां जनुः'। अत्राप्रस्तुतस्य मार्गसरसः प्रस्तुतस्य च दातुः प्रशंसेति नाप्रस्तुतप्रशंसा किन्तु समासोक्तिरेव। राजानुवर्त्तनेति अनुवर्त्तनवृत्तेः श्ववृत्तिरूपतया निन्द्यत्वादिति भावः । उक्तञ्च मनुना 'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इति । मनस्विना प्रशस्तमनस्केन ॥ ३४२ ॥

यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता ।
दोषाभासा गुणा एव लभन्ते ह्यत्र सन्निधिम् ॥ ३४३ ॥

अथ व्याजस्तुतिं लक्षयति । यदीति । यदीति यदित्यर्थे क्रियाविशेषणं, निन्दन्निव यत् स्तौति असौ व्याजेन निन्दाच्छलेन स्तुतिव्यञ्जनरूपत्वाद्व्याजस्तुतिः स्मृतेत्यन्वयः । निन्दन्निवेति इवपदेनापातत एव निन्देति निन्दायाः प्रसक्तरूपतया प्रतिपादनं सूचितं । ननु निन्दा हि निकृष्टत्वख्यापनं तच्च दोषोद्घाषणमन्तरेण न सम्भवति सति च दोषे कथं स्तु-

तिपर्य्यवसानमित्याशङ्क्योपपादयति दोषाभासा इति दोषा इवाभासन्ते वस्तुतो गुणा एव ईदृशा धर्मा अत्र सन्निधिं लभन्ते निवेशनीया भवन्ति। निन्दन्निव स्तौतीत्यत्र च प्रत्ययव्यत्ययेन स्तुवन्निव निन्दतीत्यन्वयोऽपि बोद्धव्यः तेन स्तुतिच्छलेन निन्दोक्तिरपि व्याजस्तुतिरेव वैचित्रसाम्यात्, तत्र च व्याजरूपा स्तुतिर्व्याजस्तुतिरिति संज्ञार्थः। स्पष्टमुक्तं प्रकाशकृता 'व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा' इति। स्तुत्या निन्दाया गम्यत्वे तदुक्तमुदाहरणं यथा 'हे हेलाजित बोधिसत्त्व वचसां किं विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः। तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः, इति। अत्र समुद्रस्य स्तुतिव्याजेन निन्दाप्रतिपादनाच्चमत्कारातिशयः स्फुट एव॥ ३४३॥

तापसेनापि रामेण जितेयं भूतधारिणी।
त्वया राज्ञापि सैवेयं जिता, माभून्मदस्तव॥ ३४४॥

उदाहरति। तापसेनापीति। तापसेनापि तापसत्वात् करितुरगादिजयसाधनरहितेनापि रामेण परशुरामेण, भूतधारिणी पृथिवी। राज्ञापि राजत्वात् प्रभूतकरितुरगादिजयसाधनवतापि। सैव तापसजितैव नत्वतिरिक्ता। अत्र वर्णनीयस्य राज्ञो तापसजिताजयित्वप्रतिपादनेनापाततोनिन्दा, तथा च साक्षाद्भगवदवतारेण महादेवदत्तपरशुना परशुरामेण

यावती भूमिर्जिता तावती त्वया मनुष्येणापि जितेत्यतिमहती-स्तुतिर्वर्णनीयस्य प्रतीयते ॥३४४॥

पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते।
राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते ॥ ३४५ ॥

इयञ्चालङ्कारान्तरसंसर्गेणातिचमत्कृतिभूमिरिति प्रतिपादनाय तत्र श्लेषमूलां व्याजस्तुतिं दर्शयन् श्लेषस्य च शब्दार्थगतत्वेन द्वैविध्यात् प्रथममर्थश्लेषमूलामुदाहरति। पुंस इति। इक्ष्वाकुवंशीयं कञ्चिद्राजानं प्रति चाटुकारस्योक्तिरियं। पुराणादाद्याद्वृद्धाच्च, श्रीर्लक्ष्मीः सम्पत्तिश्च। इक्ष्वाकुवंशस्येति तवेत्यस्य विशेषणम् इक्ष्वाकुर्वंशो वंशप्रवर्त्तकपुरुषो यस्य स तथा तस्य। वंश्यस्येति सयकारपाठः सम्यक्। अत्राद्यपुरुषादाच्छिन्नाया लक्ष्म्याः परिभोग इक्ष्वाकुवंशीयस्य तेन योग्य इति निन्दा, तया चातिप्रभूता ते सम्पत्तिरिति स्तुतिः प्रतीयते। अत्र पुराणपदे श्रीपदे च श्लेषः सचार्थयोराद्यवृद्धयोर्लक्ष्मीसम्पत्त्योश्च वस्तुत एकत्वादर्थगतः। किञ्च परिभोगसाम्यात् श्रियां स्त्रीत्वप्रतीतिरिति समासोक्तिरपि ॥ ३४५ ॥

भुजङ्गभोगसंसक्ता कलत्रं तव मेदिनी।
अहङ्कारः परां कोटिमारोहति कुतस्तव ॥ ३४६ ॥

शब्दश्लेषमूलामुदाहरति। भुजङ्गेति। भुजङ्गभोगसंसक्ता-विट्नानामुपभोगेऽनुरक्ता सर्पशरीरैरावृता च, कलत्रं भार्या

पाल्यात्, अत्र भुजङ्गादिशब्दानामनेकार्थमङ्केतितत्वाच्छब्दश्लेषमूलेयम्॥ ३४६॥

इति श्लेषानुविद्धानामन्येषाञ्चोपलक्ष्यताम्।
व्याजस्तुतिप्रकाराणामपर्य्यन्तस्तु विस्तरः॥ ३४७॥
॥ व्याजस्तुतिः॥

उपसंहरति। इतीति। इति पूर्व्वोक्तप्रकारेण श्लेषानुविद्धानां तथान्येषाञ्चालङ्कारान्तरानुविद्धानां व्याजस्तुतेः प्रकाराणां प्रभेदानामपर्य्यन्तोऽसीमोविस्तर उपलक्ष्यतां स्वबुद्ध्या ज्ञायतामित्यन्वयः॥ ३४७॥

अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम्।
सदसद्वा निदर्श्येत यदि तत्स्यान्निदर्शनम्॥ ३४८॥

अथ निदर्शनं लक्षयति। अर्थान्तरेति। अर्थान्तरे निदर्शनीयादन्यस्मिन् कार्य्यविशेषे प्रवृत्तेन केनचित् यदि तस्यार्थान्तरस्य सदृशं सदुत्कृष्टम्, असदपकृष्टम्वा फलं निदर्श्येत प्रतिपाद्येत तन्निदर्शनं नामालङ्कारः स्यादित्यन्वयः, यदीत्यत्र यत्त्विति तत्स्यान्निदर्शनमित्यत्र सा स्यान्निदर्शनेति क्वचित्पाठः, निदर्शनेति संज्ञायाः स्त्रीलत्वञ्च बहुभिरङ्गीक्रियते। प्रकृतार्थप्रवृत्तस्य तत्सदृशाप्रकृतार्थान्तरज्ञापनं निदर्शनालङ्कार इति लक्षणार्थः। इयं सम्भवद्वस्तुसम्बन्धनिबन्धना निदर्शनेति नव्याः, एतदुपलक्षणम्, असम्भवन्नपि वस्तुसम्बन्धो यत्र सादृश्यं निद-

र्शयति तत्रापि निदर्शनासम्भवः वैचित्र्यस्य स्फुटं प्रतीयमानत्वात् स्पष्टमुक्तं प्रकाशकृता 'अभवन् वस्तुसम्बन्ध उपमापरिकल्पक' इति । अस्योदाहरणमनन्तरं दर्शयिष्यामः, अन्ये त्वयं द्वितीयोनिदर्शनाप्रकार उपमायामन्तर्भवतीति ग्रन्थकृता नोक्त इत्याहुः ॥ ३४८ ॥

उदयन्नेष सविता पद्मेष्वर्पयति श्रियम् ।
विभावयितुमृद्धीनां फलं सुहृदनुग्रहम् ॥ ३४९ ॥

तत्र सत्फलनिदर्शनमुदाहरति । उदयन्निति । उदयन्नुद्गच्छन् ऋद्धिं प्राप्नुवंश्च, श्रियं शोभां सम्पत्तिञ्च । सुहृदनुग्रहं बन्धुष्वानुकूल्यरूपम् ऋद्धीनां सम्पत्तीनां फलं विभावयितुं सत्यामृद्धौ बन्धूनामानुकूल्यं कर्त्तव्यमिति ज्ञापयितुं पद्मेषु श्रियमर्पयतीत्यन्वयः । अत्र पद्मेषु श्रीवितरणप्रवृत्तेनोदयभाजा सवित्रा सुहृदुपकाररूपमुदयफलं निदर्श्यते फलश्चैतदुत्कृष्टमेव ॥ ३४९ ॥

याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम् ।
सद्योराजविरुद्धानां सूचयन्ती दुरन्तताम् ॥ ३५० ॥
॥ निदर्शनम् ॥

असत्फलनिदर्शनमुदाहरति । यातीति । पराभवं नाशं । राजविरुद्धानां नृपतिप्रतिकूलानां चन्द्रप्रतिकूलानाञ्च । दुरन्ततां निन्दितावसानत्वम् । अत्र चन्द्रांशुभिः पराभूयमाणा-

ध्वान्तराजी राजविरोधिनां परिणामदुःखरूपं फलं निदर्शयति तच्च फलमसदेव। एवम्, 'उन्नतं पदमवाप्य योलघुर्हेलयैव स पतेदिति ब्रुवन्। शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः'। अत्र शैलशेखरादधःपतनप्रवृत्तो दृषत्कणोलघोरुन्नतपदप्राप्तस्य ततोझटितिपतनरूपमसत्फलं निदर्शयति। एषु च तथाविधसविचादीनां तत्तदर्थज्ञापनसम्बन्धः सम्भवत्येव। लक्षणस्योपलक्षकतया प्राप्तायास्त्वसम्भवद्वस्तुसम्बन्धनिबन्धननिदर्शनाया उदाहरणं यथा, 'क्व सूर्य्यप्रभवोवंशः क्व चाल्पविषया मतिः। तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्'। अत्र सूर्य्यवंशवर्णनप्रवृत्ते कवौ उडुपकरणकदुस्तरसागरतरणेच्छायाः सम्बन्धोऽसम्भवन् मनाग्या सूर्य्यवंशवर्णनेच्छा उडुपेन सागरतरणेच्छेवेत्युपमां निदर्शयति, यथा वा 'उदयति विततोर्द्धरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्। वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्। अत्रान्यस्य लीलां कथमन्योवहलिति तत्सदृशीमित्युपमायां पर्य्यवसानम्। मालारूपाप्येषा चारुतातिशयं पुष्णाति यथा 'दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गमादातुमिच्छति करे हरिणाङ्कविम्बम्। मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान् गदितुमुद्यममादधाति'। अत्रेच्छाचयस्य सम्बन्धोगुणवर्णनोद्यतेऽसम्भवन् पूर्ववदुपमाचयं निदर्शयति॥ ३५० ॥

**सहोक्तिः सहभावेन कथनं गुणकर्म्मणाम्।**
**अर्थानां यो विनिमयः परिवृत्तिस्तु सा स्मृता।। ३५१ ।।**

अथ सहोक्तिं लक्षयति। सहोक्तिरिति। गुणकर्म्मणा-मिति अत्र कर्म्मशब्दः क्रियावाची, बहुवचनेन द्रव्यादिपरिग्रहः। गुणादीनां सहभावेन साहित्येन यत्कथनं सा सहोक्तिः, सहभावस्येति क्वचित् षष्ठ्यन्तः पाठः। सम्बन्धिभेदेन भिन्नयोरपि गुणयोः क्रिययोरपरयोर्वा सहार्थस्य बलादेकेन वाचकेन यदेककालीनतया प्रतिपादनं सा सहोक्तिरिति निष्कृष्टोऽर्थः। एतदेवोक्तं दर्पणकृता 'सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः'। सा सहोक्तिरिति। अत्र प्रौढोक्तिमन्तरेण वैचित्राभावात् तन्मूलकत्वमस्य बोध्यं तेन 'लक्ष्मणेन समं रामो गहनं काननं ययौ' इत्यादौ ययावित्येकेन पदेन रामलक्ष्मण-योर्गमनक्रिययोः प्रतिपादनेऽपि प्रौढोक्त्यभावेन वैचित्राभा-वान्नायमलङ्कारः। अत्र धर्म्मिणां गुणादिभिर्युगपदन्वय इति तुल्ययोगितातोभेदः॥

इत्थं पद्यार्द्धेनैव सहोक्तिलक्षणं पर्य्याप्तमिति पद्यपूरणस्या-वश्यकतया सहोक्त्युदाहरणान्यदर्शयित्वैवोत्तरार्द्धेन परि[illegible]त्त्य-लङ्कारं लक्षयति। अर्थानामिति। विनिमयः प्रतिदानं ति-लान् दत्त्वा माषग्रहणमित्यादिरूपं। विनिमयश्च समेन समस्य अधिकेन न्यूनस्य न्यूनेनाधिकस्य च ग्रहणमिति त्रिविधः, अय-मपि प्रौढोक्त्यैव प्रयुज्यमानश्चारुतामावहति। भोजदेवस्तु व्य-त्ययमपि परिवृत्तिमाह 'व्यत्ययोवस्तुनोर्यस्तु योवा विनि-मयोमिथ' इत्यादिना, व्यत्ययश्च कस्यचिदेकस्थानादन्यत्र स्थापनं यथा, कुमुदवनमपश्रि श्रीमदम्भोजषण्डमित्यादौ॥ २५१॥

सह दीर्घा मम श्वासैरिमाः संप्रति रात्रयः।
पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः॥ ३५२॥

तत्र प्रथमोद्दिष्टां सहोक्तिमुदाहरन् प्रथमं गुणसहभावरूपामुदाहरति। सह दीर्घा इति। विरहिण्या उक्तिरियं। सम्प्रति प्रियविरहसमये नतु पूर्व्वं, रात्रयोदीर्घा इति दुःखबहुलतया दुःक्षेपणीयत्वादिति भावः। ता रात्रयः, पाण्डुरत्वे हेतुश्चन्द्रभूषणा इति ज्योत्स्न्य इत्यर्थः, अत्र दीर्घत्वं पाण्डुरत्वञ्च गुणौ तौ च सम्बन्धिभेदेन वस्तुतोभिन्नावपि सहार्थबला-दीर्घा इति पाण्डुरा इति चैकेनैव पदेनैककालीनतया कथितौ। ननु 'आविर्भवति नारीणां वयः पर्य्यस्तशैशवम्। सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः' इति पूर्व्वदर्शितकार्य्यसहजचित्रहेतूदाहरणेऽपि क्रिययोः सहभावो दृश्यते तदनयोरभेदापात इति चेन्नैवं सहभावसाधारण्येऽपि कार्य्यकारणभावस्यैव चित्रनियामकत्वात् प्रकृते तु दीर्घश्वासदीर्घरात्योर्न कार्य्यकारणभावः द्वयोरेव विरहजन्यत्वात्, एवमग्रेऽपि बोध्यम्॥ ॥ ३५२॥

वर्द्धते सह पान्थानां मूर्च्छया चूतमञ्जरी।
पतन्ति च समं तेषामसुभिर्मलयानिलाः॥ ३५३॥

क्रियासहभावरूपां सहोक्तिमुदाहरति। वर्द्धत इति। पतन्ति गच्छन्ति, असुभिः प्राणवायुभिः क्वचिदश्रुभिरिति पाठः। अत्र वर्द्धनं पतनञ्च क्रिये। अत्रापि मूर्च्छावृद्धि-

चूतमञ्जरीवृद्ध्योः, असुपतनमलयानिलपतनयोश्च वसन्तज-न्यत्वान्न मिथः कार्य्यकारणभाव इति न चित्रहेतुना साङ्कर्य्यं। यदि च चूतमञ्जरीवृद्ध्या मूर्च्छावृद्धिः मलयानिलपतनेन चा-सुपतनमित्यभिप्रायस्तदा शुद्धोदाहरणं 'सह मणिवलयैर्हि बाष्पधारा गलन्ति, अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानीत्यादिकं बोध्यम्. अत्र न सहभूतयोर्हेतु-हेतुमद्भावः ॥ ३५३ ॥

कोकिलालापसुभगाः सुगन्धिवनवायवः ।
यान्ति सार्द्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥ ३५४ ॥

कोकिलालापेति। सहोक्तिनिर्भंशाग्रवणात् सहशब्दप्र-योग एवायमलङ्कार इति भ्रमनिरासाय सहार्थकसार्द्धपद-घटितमिदमुदाहरणमुपन्यस्तम्, एवं सहार्थकशब्दान्तरोपा-दानेऽपि तदनुपादानेऽपि 'गम्यमानेश्च सहार्थैरित्यनेन विहितायां तृतीयायामपि सहोक्तिर्बोध्या। अन्ये तु वृद्धिं यान्तीत्यत्र या-नक्रियायाः सहभाववत् गुणात्मिकाया वृद्धेरपि सहभावः प्रतीयत इति गुणक्रिययोरेकत्र सहभावदर्शनार्थमुदाहरण-मिदं दर्शितमित्याहुः तत्र वृद्धेर्गुणत्वे आनन्दस्यापि तथात्वे. गुणस्य गुणवृत्तित्वापात्तेः प्रतीकारश्चिन्त्यः ॥ ३५४॥

इत्युदाहृतयोदत्ताः सहोक्तेरत्र काश्चन।
॥ सहोक्तिः ॥
क्रियते परिवृत्तेश्च किञ्चिद्रूपनिदर्शनम् ॥ ३५५ ॥

इत्युदाहृतय इति। कानेति गुणक्रियासद्भावविषया दर्शिताः, अनया रीत्या अन्यविषयापि सहोक्तिर्बोद्धव्येत्यर्थः॥ क्रियत इति। किञ्चिद्रूपनिदर्शनम् ग्रन्थबाहुल्यभिया एकमात्रोदाहरणेन किञ्चित् स्वरूपप्रकाशनम्॥ ३५५॥

शस्त्रप्रहारं ददता भुजेन तव भूभुजाम्।
चिरार्ज्जितं हृतं तेषां यशः कुमुदपाण्डुरम्॥ ३५६॥
॥ परिवृत्तिः॥

शस्त्रप्रहारमिति। अत्र न्यूनेनाधिकस्य ग्रहणरूपो विनिमयः। एवं 'दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम। मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः'। अत्र पूर्व्वार्द्धे समेन समस्य, उत्तरार्द्धे अधिकेन न्यूनस्य विनिमयः॥ ३५६॥

आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा।
पातु वः परमं ज्योतिरवाङ्मनसगोचरम्॥ ३५७॥
॥ आशीः॥

अथाशीःसंज्ञकमलङ्कारं लक्षयति। आशीर्नामेति। अभिलषिते इष्टे वस्तुनि आशंसनं प्राप्तीच्छाप्रकाशनं यद्वा अभिलषिते प्रिये वस्तुनि जने सुहृज्जने इत्यर्थः आशंसनं शुभाभ्यर्थनमाशीर्नामालङ्कार इत्यन्वयः। अयमलङ्कारो वैचित्र्यविशेषात्मकत्वाभावान्न बहुभिरङ्गीक्रियते, केचित्तु सोऽहृद्याख्या-

पनेन वैचित्र्यं विद्यत एवेत्यङ्गीक्रियते, यदुक्तं 'आशीरिति च केषाञ्चिदलङ्कारतया मता। सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृशः' इति। अन्यैस्तु नाट्य एवास्याश्चमत्कारजनकत्वमिति नाट्यालङ्कारत्वेनोच्यते यथा 'आशीराक्रन्दकपटाक्षमागर्व्वोद्यमाश्रया' इत्यारभ्य, 'इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः' इति, तल्लक्षणमस्या लक्षणञ्च 'आशीरिष्टजनाशंसेति, यथा शाकुन्तले। 'ययातेरिव शर्म्मिष्ठा पत्युर्बहुमता भव। पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि' इति। अपरे तु प्रेयोऽलङ्कारस्यैवायं भेद इत्याहुः। उदाहरति पात्विति। अवाङ्मनसगोचरमिति वाक् च मनश्च ते गोचरौ प्रतिपादके यस्य तत्तथा तद्भिन्नं 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति श्रुतेः'। वाचोमनस इत्यत्समासान्तः॥ ३५७॥

अनन्वयससन्देहावुपमास्वेव दर्शितौ।
उपमारूपकञ्चापि रूपकेष्वेव दर्शितम्॥ ३५८॥

इत्थं स्वभावाख्यानाद्याशीःपर्य्यन्तानलङ्कारानुद्देशक्रमेण लक्षयित्वा संप्रति शास्त्रान्तरतया सङ्कीर्णं लक्षयितव्येऽपि अन्योक्तानां कतिपयालङ्काराणामनिरूपणेन स्वस्य न्यूनत्वमाशङ्क्य तेषां स्वोक्तेष्वन्तर्भावनेन तत्परिहरति। अनन्वयेति। अनन्वयः 'उपमानोपमेयत्वे एकस्यैवैकवाक्यगे'। अनन्वयः, इत्युक्तलक्षणः। ससन्देहश्च 'ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशय' इत्युक्तरूपः। उपमास्वेव दर्शिताविति तथाहि अनन्वयस्य 'चन्द्रार-

विन्द्वोः कान्तिमतिक्रम्य मुखं तव । आत्मनैवाभवत्तुल्य-मित्यसाधारणोपमा' इत्यसाधारणोपमायामन्तर्भावः । सस-न्देहस्य च 'किं पद्ममन्तर्भ्रान्तालि किन्ते लोलेक्षणं मुखम् । मम दोलायते चित्तमितीयं संशयोपमेति संशयोपमायाम् । उपमारूपकञ्चापीति उपमारूपकाख्यं रूपकान्तरं वामने-नोक्तं यथा, 'उपमाजन्यं रूपकमुपमारूपकमिति' उदाहृतञ्च 'जयति चतुर्दशलोकवल्लिकन्द इति' अत्र चतुर्दशलोकस्य वल्लिसाम्येन कूर्म्मदेवे कन्दलरूपणम्, अपरे चेदं परम्परितरूप-कमाचक्षते । अन्ये तु उपमासहितं रूपकमुपमारूपकं, यदुक्तम्, 'उपमानेन तद्भावमुपमेयस्य रूपयन् । यद्वदत्युपमाभेदमुप-मारूपकं यथा' इति । अस्योदाहरणं यथा, 'दिवाकरकर-स्पर्शादुदयाद्रेः पयोधरात् । नीलांशुकमिव प्राच्यास्तमोग-लति सम्प्रति' । अत्र नीलांशुकमिवेत्युपमया सहितमुदयाद्रेः पयोधरादिति रूपकमित्याहुः । रूपकस्यैव दर्शितमिति 'इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः । उपमाव्यतिरेकाख्यं रूपक-द्वितयं यथा' इत्यनेन गृहीतमित्यर्थः ॥ ३५८ ॥

उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च ।
नानालङ्कारसंसृष्टिः सङ्कीर्णन्तु निगद्यते ॥ ३५९ ॥

उत्प्रेक्षेति । असावन्यैरङ्गीकृत उत्प्रेक्षावयवोऽपि स्वमते उत्प्रेक्षाभेद एवेत्यन्वयः, उत्प्रेक्षावयवश्च उत्प्रेक्षाया आरम्भ-कमलङ्कारान्तरं तच्च श्लेषादिकं, यदुक्तं 'श्लिष्टेनार्थेन संसृष्टः

किञ्चिल्लोपमयान्वितः। रूपकार्थेन वा युक्त उत्प्रेक्षावयवो यथा,' इति। तत्र श्लिष्टार्थसंस्पृष्टो यथा 'मुक्तोत्करः सङ्कटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः। जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद्गुणवत्त्वमाप'। अत्र गुणवत्त्वे श्लेषः' उपमयान्वितो यथा कुमारसम्भवे, 'अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः। 'कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी'। अत्राङ्गुलीभिरिव मरीचिभिरित्यत्र कुड्मलीकृतसरोजलोचनमित्यत्र चोपमा चुम्बतीवेत्युत्प्रेक्षामारभते। एवं रूपकार्थसंयुक्तोत्प्रेक्षापि। एवंविधोत्प्रेक्षावयवोऽपि स्वमते श्लेषादिसङ्कीर्णोत्प्रेक्षैवेति नात्रापि न्यूनता। केचित्तु यत्रावयवक्रियैवोत्प्रेक्ष्यते नावयविक्रिया स उत्प्रेक्षावयवः यथा 'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च' इत्यादीत्याहुः। एवं निपुणस्योदात्ते दृष्टान्तस्योपमायाम् उभयपरिणामयोः कार्य-कारणमालायां हेतौ अपरेषाञ्चापरैरङ्गीकृतानामलङ्कारा-ल्ङ्काराणां, यथायथं निरुक्तेष्वन्तर्भावोबोध्यः॥

अथ सङ्कीर्णं लक्षयति। नानालङ्कारेति। नानालङ्काराणां सजातीयानां विजातीयानाम्वा निरुक्तलक्षणानामलङ्काराणां संसृष्टिरेकत्र संसर्गः सङ्कीर्णं सङ्कीर्णाख्यमलङ्कारान्तरं निगद्यते पृथग्वैचित्र्यविशेषोपलब्ध्या प्राचीनैरुच्यते, युक्तञ्चैतत् यथा लौकिकहाराद्यलङ्काराणां मिथः संसर्गेण पृथक्चारुतातिशयजनकतया गुच्छगुच्छार्द्धगोस्तनादिसंज्ञया पृथगलङ्कारत्वेन व्यपदेशस्तथा सङ्कीर्णानां काव्यालङ्कारा-

तामपि पृथक्चारुताप्रत्यायकतया पृथगलङ्कारत्वेन संसृ-ष्टिसंज्ञया व्यपदेश इति ॥ १५८ ॥

अङ्गाङ्गिभावावस्थानं सर्व्वेषां समकक्षता ।
इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥ ३६० ॥

संकीर्णस्य भेदौ दर्शयति । अङ्गाङ्गीति । अङ्गाङ्गिभावेन निर्व्वाह्यनिर्व्वाहकत्वेनावस्थानमित्येका, तथा सर्व्वेषां समकक्षता अनुग्राह्यानुग्राहकत्वमन्तरेण निरपेक्षतयावस्थानमित्यपरा, इत्यलङ्कारसंसृष्टेः संकीर्णालङ्कारस्य द्वयी गतिर्भेदद्वयम् । तत्र समकक्षतयावस्थानस्य क्वचिदेकाश्रयगतं क्वचिद्भिन्नाश्रयगतमिति द्विविधं, तत्र प्रथममेकाश्रयानुप्रवेशसंज्ञया कथितमन्यैः, तथा सन्देहसङ्करस्यान्यैरुक्तस्य तु सन्दिह्यमानालङ्कारयोः संसर्गाभ्युपगमे समकक्षतेत्यनेनैव संग्रहः सन्दिह्यमानयोरप्यनुग्राह्यानुग्राहकत्वाभावात्, तस्मादेतन्मतेऽपि संकीर्णस्य चतुर्विधत्वं सिद्धं, परन्त्वेकाश्रयानुप्रवेशसन्दिग्धत्वेऽङ्गाङ्गित्वे च सङ्करसंज्ञा, समकक्षतायान्तु संसृष्टिसंज्ञान्येषामित्येव विशेषः ॥ १६० ॥

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ ३६१ ॥

तत्राङ्गाङ्गिभावसंकीर्णमुदाहरति । आक्षिपन्तीति । आक्षिपन्ति जिगीषन्ति सदृशीकुर्व्वन्तीति तु प्रतीयमानोऽर्थः तेना-

श्चोपमालङ्कारः स चाच निर्व्वाहकत्वादङ्गी, कोषो धनराशिः कुशलस्य दण्ड उपायभेदः शास्त्रमित्यर्थः तावत्स्य ताभ्यां समग्राणां सम्पूर्णानामितिश्लेषाविद्धोऽर्थान्तरन्यासोऽयमस्याङ्गं निर्व्वाहकत्वादित्यन्ये तथात्वे एषामिति लोकानामित्यर्थः, तत एवार्थान्तरस्योपन्यासमसम्भवः अरविन्दानामित्यर्थकत्वे तु न तथा एकस्य समर्थसमर्थकत्वाभावात्, अपरे तु कोषदण्डसमग्राणामिति हेतुतयोपन्यासादुत्प्रेक्षालङ्कारोऽत्राङ्गमित्याहुः । वस्तुतस्तु न किञ्चिदिह दुष्करमिति चतुर्थपादः सम्यक् । एषामिति सम्बन्धविवक्षया षष्ठी ॥ ३६१ ॥

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ३६२ ॥

॥ सङ्कीर्णम् ॥

समकक्षतासङ्कीर्णमुदाहरति । लिम्पतीवेति । अत्र पूर्व्वार्द्धे उत्प्रेक्षा उत्तरार्द्धे चोपमा अनयोश्च निरपेक्षतयावस्थानं, सति समकक्षता । सङ्कीर्णत्वमिदं विभिन्नाश्रयगतम्, एकाश्रयगतं यथा 'कुरवकारवकारणतां ययुरित्यत्र रवका रवका इति वकार वकार इति च यमकयोः, संसारध्वान्तविध्वंसहंसः कंसनिसूदनः, इत्यत्र रूपकानुप्रासयोरेकत्र समकक्षतयावस्थानम्, अर्थालङ्कारयोरेकाश्रयानुप्रवेशस्तु बहुभिर्नाद्रियते अङ्गाङ्गित्वेनैव द्वयोरेकत्र सद्भावात् । अन्ये तु समकक्षतयापि द्वयोरेकत्र सद्भावः सम्भवत्येव यथा 'अहिणअपओअरसिए पहिअसामाइएसु दि-

ऋएसु। मइइ पसारिअगोआणं अहिअं मोरविन्दाणं। अत्र पथिकश्यामितेष्वित्युपमा पथिकसामाजिकेष्विति रूपकम्, द्वयोरप्यनयोरत्र तात्पर्य्ये समकक्षतया चावस्थानमित्याहुः। मुखचन्द्रः शोभते इत्यत्र मुखमेव चन्द्र इति रूपकस्य मुखं चन्द्र इवेत्युपमाया वात्र सद्भाव इति साधकबाधकाभावात् सन्दिह्यमानयोरनयोः समकक्षतयैवात्रावस्थानमिति ॥ ३६२ ॥

श्लेषः सर्व्वासु पुष्णाति प्रायोवक्रोक्तिषु श्रियम्।
भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥ ३६३ ॥

पूर्व्वं प्रदर्शितेषु तत्तदलङ्कारानामोदाहरणेषु बहुषु श्लेषसद्भावो दृष्टस्तस्य श्लेषेण बहूनां सङ्कीर्णत्वमिति सूचयन्नाह। श्लेष इति। वक्रोक्तिषु भणितिभङ्गीरूपालङ्कारवत्काव्येषु। वक्रोक्तिष्वित्युक्त्या तद्भिन्नमपि काव्यमस्तीत्यायातं ततश्चालङ्कारकृतं काव्यस्य भेदद्वयमाह। भिन्नमिति। स्वभावोक्तिर्ज्जातिगुणक्रियाद्रव्याणां यथावत्स्वरूपवर्णनरूपा, वाङ्मयं काव्यं, स्वभावाख्यानाद्यलङ्कारवत् भणितिभङ्गीरूपोपमाद्यलङ्कारवच्चेति तत् द्विविधमित्यर्थः ॥ ३६३ ॥

तद्भाविकमिति प्राहुः प्रबन्धविषयं गुणम।
भावः कवेरभिप्रायः काव्येष्वासिद्धि संस्थितः ॥ ३६४ ॥
परस्परोपकारित्वं सर्व्वेषां वस्तुपर्व्वणाम्।
विशेषणानां व्यर्थानामक्रिया स्थानवर्ण्णना ॥ ३६५ ॥

व्यक्तिरुक्तिक्रमबलाद्गम्भीरस्यापि वस्तुनः ।
भावायत्तमिदं सर्व्वमिति तद्भाविकं विदुः ॥ ३६६ ॥

इत्थं केषाञ्चिद्वैचित्राणां स्वभावाख्यानाद्यलङ्कारत्वमुक्तम् अपराणि चानन्तानि वैचित्राणि सम्भवन्ति तानि च प्रत्येकं तत्तन्नाम्ना दुर्व्वचानीति सर्व्वेषामेव तेषां संग्राहकमेकमेव भाविकाख्यमलङ्कारमाह । तद्भाविकमिति । प्रबन्धा महाकाव्यनाटकाख्यायिकादयस्तद्विषयं तद्गतं प्रबन्धेषु चमत्कारजनकतया निवेशनीयमित्यर्थः गुणं शोभाजनकं धर्मं, तत् अलङ्कारेषु प्रसिद्धं भाविकमिति भाविकाख्यमलङ्कारमाहुरित्यन्वयः। अस्यान्वर्थतां दर्शयति भाव इति कवेरभिप्रायो भावस्तमर्हतीति व्युत्पत्त्या भाविकसंज्ञाप्रवृत्तिरित्यर्थः, स चाभिप्रायः काव्यासिद्धि आरम्भावधिसमाप्तिपर्य्यन्तं संस्थितः, एतेनायमलङ्कारोऽलङ्कारान्तरवन्न पदवाक्यमात्रगतः किन्तु महावाक्यरूपप्रबन्धगतोऽपि भवतीति सूचितम् । भूतभाविनोः प्रत्यक्षायमाणत्वेन वर्णनं भाविकमिति प्रकाशकारः, अद्भुतपदार्थस्यापि प्रत्यक्षायमाणत्वमिति दर्पणकारः, तत्र संज्ञायाः सम्यगन्वर्थता न सम्भवतीति विवेचनीयम् ॥ ३६४ ॥

कवेरभिप्रायविषयान् कतिचित् प्रबन्धधर्म्मान् दर्शयति । परस्परोपकारित्वमिति । वस्तुनि आधिकारिकेतिवृत्तानि पर्व्वाणि तदुपकारकाणि प्रासङ्गिकेतिवृत्तानि, यदाह सखकृत: 'इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते। आधिकारिकमेकं

स्यात् प्रासङ्गिकमथापरम्' इति । सर्व्वेषां तेषां परस्परोपका-
रित्वं कवेरभिप्रेतं, यथा रामायणे रामचरितमाधिकारिकं
सुग्रीवादिचरितं प्रासङ्गिकं तयोरङ्गाङ्गितया परस्परोपका-
रोविद्यत एव । महाकाव्यादौ करितुरगपुरगिरिप्रभृतिव-
र्णनमपि साक्षात् परम्परया वा प्रधानोपकारे पर्य्यवस्यतीति
बोध्यम् । तथा व्यर्थानां प्रकृतस्यापरिपोषकाणां विशेष-
णानामक्रिया अनुपन्यासः अभिप्रेतार्थबोधकविशेषणोपन्यास
इत्यर्थः, अयमेव परिकरालङ्कार इति प्रकाशकारादयः यथा
'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति । अपरे तु
अपुष्टत्वदोषाभाव एवायं नालङ्कार इत्याहुः । तथा स्थानानां
प्रकृतरसोपयोगिविषयविशेषाणां वर्णना ॥ ३६५ ॥

व्यक्तिरिति । उक्तिक्रमः पदरचनापरिपाटी तद्बलात्तदीय-
प्रतिपादकतासामर्थ्यात् गम्भीरस्यापि गूढतरस्यापि वस्तुनो-
ऽर्थस्य व्यक्तिः प्रस्फुटत्वम्, तदिदं सर्व्वं भावायत्तं कवेरभि-
प्रायाधीनमिति भावायत्तत्वाद्भाविकमिदं विदुरिति ॥ ३६६ ॥

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे ।
व्यावर्णितमिदञ्चेष्टमलङ्कारतयैव नः ॥ ३६७ ॥

॥ भाविकम् ॥

किञ्च यच्चेति । सन्धयोमुखप्रतिमुखगर्भविमर्शनिर्व्वहणा-
ख्याः पञ्च, तेषामङ्गानि उपक्षेपपरिकरादीनि चतुःषष्टि-
सङ्ख्यकानि, वृत्तयः कौशिकीसात्त्वत्यारभटीभारत्यश्चतस्रः,

तासामङ्गानि नर्म्मनर्म्मस्फूर्ज्जादीनि षोडश, लक्षणानि भूषणाक्षरसङ्घातादीनि षट्त्रिंशत्, आदिपदेन नाट्यालङ्कारवीथ्यङ्गलास्याङ्गानां ग्रहणं, तत्र नाट्यालङ्कारा आशीराक्रन्दकपटादयस्त्रयस्त्रिंशत्, वीथ्यङ्गानि उद्घात्यकावलगितादीनि त्रयोदश, लास्याङ्गानि गेयपदस्थितिपाठ्यादीनि दश। एतेषां प्रपञ्चोदशरूपकादौ द्रष्टव्यः बाहुल्यभियात्र न दर्शितः। एतत् सर्व्वमागमान्तरे भरतादिप्रणीतनाट्यशास्त्रे व्यावर्णितं नाट्यशोभाजनकतया निरूपितम्, इदञ्च सर्व्वमस्माकमलङ्कारतयेष्टमित्यन्वयः। तत्र केषाञ्चित् स्वभावाख्यानादावन्तर्भावः अपरेषां भाविकत्वमिति दशरूपकादिग्रन्थदत्तोदाहरणदर्शनेन स्वबुद्ध्या विवेचनीयम्॥ ३६७॥

पन्थाः स एष विवृतः परिमाणवृत्त्या
संहृत्य विस्तरमनन्तमलङ्क्रियाणाम्।
वाचामतीत्य विषयं परिवर्त्तमाना-
नभ्यास एव विवरीतुमलं विशेषान्॥ ३६८॥

इत्याचार्य्यदण्डिनः कृतौ काव्यादर्शेऽर्थालङ्कारविभागो नाम द्वितीयः परिच्छेदः॥ २॥

ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यतीत्याद्युक्तं पुनरपि स्मारयन् परिच्छेदमिममुपसंहरति। पन्था इति। अलङ्क्रियाणां पूर्व्वनिरूपितस्वभावाख्यानाद्यलङ्काराणामनन्त-

मसीमं विस्तरं सम्भवन्तं प्रभेदसमूहं संहृत्य कार्त्स्न्येन वक्तुम-शक्यतया शीर्षग्रहणन्यायेन प्रकटतरं तं संगृह्य परिमाणवृत्त्या परिमितत्वेन स एषः पन्था विवृतः मार्गमात्रं प्रदर्शितम्। एष इत्यत्र एवेति क्वचित्पाठः पन्था एवेत्यर्थः। अनेन पथा सञ्चर-माणैरपरेऽपि भेदाः स्वयं ज्ञातव्या इत्याह वाचामिति वाचां विषयमतीत्य परिवर्त्तमानानतिप्रभूतानित्यर्थः। विशेषान् प्रभे-दान् विवरीतुं प्रकाशयितुम् अभ्यास एव अस्य विवृतमार्गस्य पुनःपुनःपरिशीलनमेव अलं समर्थः संक्षिप्तोऽप्यस्मन्निरूपण-प्रकारः पुनःपुनरालोच्यतां तेनैवापरेऽपि प्रभेदा ज्ञातव्या इत्यर्थः॥ ३६८॥

इति श्रीप्रेमचन्द्रतर्कवागीश-भट्टाचार्य्य-विरचितायां मा-लिन्यप्रोञ्छनीसमाख्यायां काव्यादर्शटीकायां द्वितीयः परि-च्छेदः॥ २॥

# काव्यादर्शः ।

## तृतीयः परिच्छेदः ।

अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः ।
यमकं, तच्च पादानामादिमध्यान्तगोचरम् ॥ १ ॥

द्वितीयपरिच्छेदे 'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते इत्यनेन शब्दार्थसाधारणमलङ्कारसामान्यलक्षणमभिधाय शब्दस्य प्रथमबुद्धिविषयतया प्रथमं निरूपयितुमुचितानपि तदीयालङ्कारानतिचमत्कारजनकत्वाभावादनिरूप्य चमत्कारविशेषभूमयोऽर्थालङ्कारा एव विनेयानां प्रवृत्तये पूर्व्वं निरूपिताः, संप्रत्युपादेयधर्म्मेषु प्राप्तावसरान् पूर्व्वनिरूपितानप्यसभिन्नान् शब्दालङ्कारान्, तदनन्तरं हेयधर्मान् .. षांश्च निरूपयितुं तृतीयपरिच्छेदमारभमाणेन प्रथमं मार्गविभागप्रसङ्गेनोक्तलक्षणमपि यमकमनूद्य तत्प्रभेदाः प्रदर्श्यन्ते। अव्यपेतेति। अव्यपेतोऽव्यवहितः व्यपेतो व्यवहितश्च आत्मा स्वरूपं यस्यास्तादृशी वर्णसंहतेः स्वरव्यञ्जनवर्णसङ्घस्य व्यावृत्तिर्विशेषेणावृत्तिः पुनरुच्चारणं यमकमित्यन्वयः। अस्य विशेषाः पूर्व्वमेवोक्ता इति नोच्यन्ते। अव्यपेतव्यपेतात्मेति भेदकथनाय, तथाहि कचित् पूर्व्वोच्चरितवर्णसङ्घस्याव्यवधानेन पुन-

रुच्चारणं क्वचिद्व्यवधानेनेति प्रथममिदं भेदद्वयम्। अस्य स्थानं नियमयति तच्चेति। पादानामादिमध्यान्तभागा अस्य स्थानानीत्यर्थः। अत्रादिमध्यान्तेत्यनेन पादानां खण्डत्रयगतत्वमेव यमकस्येति नाशङ्कनीयं मध्यपदेन सम्भवत्खण्डमात्रलाभात् चतुरादिखण्डेष्वप्यस्य स्थितिर्ज्ञातव्या यदाह प्रकाशकृत्। त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशदिति। एतदुपलक्षणं पादा अपि अस्य स्थानानीति ज्ञेयम्। यदुक्तं वामनेन 'पादः पादस्यादिमध्यान्तभागाः स्थानानीति। अत्र पादपदेन च पादद्वयात्मकस्य पद्यार्द्धस्य पादचतुष्टयात्मकस्य सम्पूर्णपद्यस्य च ग्रहणं तेन पादखण्डाः पादाः पद्यार्द्धं सम्पूर्णपद्यञ्च यमकस्य स्थानानीति निष्कर्षः॥ १॥

एकद्वित्रिचतुष्पादयमकानां विकल्पनाः।
आदिमध्यान्त मध्यान्त मध्याद्याद्यन्त सर्व्वतः॥ २॥
अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः।
सुकरा दुष्कराश्चैव, दर्श्यन्ते तेऽत्र केचन॥ ३॥

तत्राविमिश्रविमिश्रतया द्विविधानामादिमध्यान्तयमकानां भेदान् क्रमेण दर्शयन् प्रथममविमिश्रं विभजते। एकेति। एकद्वित्रिचतुष्पादयमकानामविमिश्राणामित्यर्थः विकल्पनाभेदाः, पद्यस्य चतुष्पादात्मकत्वात् प्रतिखण्डं चत्वारस्त्वारो-

भेदा ज्ञातव्या इत्यर्थः, यथा अविमिश्रितमादिभागयमकं प्रथमपाद एव, द्वितीयपाद एव, तृतीयपाद एव, चतुर्थपाद एवेति चतुर्विधम्, तथा मध्यादिभागयमकमपि प्रत्येकं चतुर्विधमिति अयञ्चाविमिश्रभेदप्रकारोऽव्यपेतव्यपेतसाधारणः। अथ विमिश्रयमकं विभजते आदीति। सम्भेदयोनयः सजातीययमकान्तरसंमिश्रणजन्याः आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वेतोवर्त्तमानानां तेषां यमकानां भेदा अत्यन्तबहवोऽतिविस्तरा ज्ञातव्या इत्यन्वयः। सर्व्वत इति। सप्तमीबहुवचनान्तं, पदच्छेदश्च 'आदिमध्यान्तेषु, मध्यान्तेषु, मध्याद्येषु आद्यन्तेषु, सर्व्वेषु चेति। मध्यपदानि च सर्व्वाणि द्वितीयतृतीयपादबोधकानि, चरममादिपदञ्च प्रथमद्वितीयतृतीयपादबोधकम्, अन्तपादस्यादौ त्रयाणां पूर्व्वपादानां स्थितत्वात्। मध्याद्येति आद्यञ्च मध्यौ चेति विग्रहः धर्म्मार्थादिपाठादाद्यस्य परभावः, तत्र आदिमध्यान्तेत्यस्य प्रथमे द्वितीये, प्रथमे तृतीये, प्रथमे चतुर्थे, इति त्रयः प्रकाराः। मध्यान्तेत्यस्य द्वितीये तृतीये द्वितीये चतुर्थे, तृतीये चतुर्थे, इति त्रयः प्रकाराः। मध्याद्येत्यस्य प्रथमे द्वितीये तृतीये चेत्येकः प्रकारः। आद्यन्तेत्यस्य प्रथमे द्वितीये चतुर्थे, प्रथमे तृतीये चतुर्थे, द्वितीये तृतीये चतुर्थे चेति त्रयः प्रकाराः। सर्व्वेत्यस्य प्रथमे द्वितीये तृतीये चतुर्थे चेत्येकः प्रकारः। मिलित्वा एकादश प्रकाराः। एते चादिभागविषयाः मध्यादिभागविषयाश्च बोध्याः। सुकरा दुष्कराश्चेति सुबोधा दुर्ब्बोधाश्चेत्यपि बोध्यं तदेते कवीनां

बोद्धृणाञ्च क्लेशकरा इति केवल दृश्यन्ते ननु सम्भविनः सर्वे ऽपीत्यर्थः ॥ २ ॥ ३ ॥

मानेन मानेन सखि प्रणयोऽभूत्प्रिये जने।
खण्डिता कण्ठमाश्लिष्य तमेव कुरु सत्रपम् ॥ ४ ॥

तत्र प्रथमपादगतमव्यपेतमविमिश्रमादिभागयमकमुदाहरति। मानेनेति। मामप्रयोगेणाध्यत्यक्तमानां नायिकां प्रति नायकभेदितानां सखीनामुक्तिरियं। हे सखि। प्रिये जने प्रणयिजनं प्रति अनेनदृशेनास्माकमपि क्लेशकरेणेत्यर्थः मानेनेर्ष्याकोपेन सह तव प्रणयः प्रेम माभूत् प्रियजनं प्रति ईदृशं मानं माकार्षीरित्यर्थः। ननु मान एव कृतापराधनायकस्य शासनं तं परित्यज्य किं करोमीत्याह खण्डितेति खण्डिता 'पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः। सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता' इत्युक्तलक्षणा, अत्रापिकारो बोध्यः खण्डितापि त्वं कण्ठमाश्लिष्य स्वयं तस्य कण्ठमालिङ्ग्य तमेव सत्रपं सलज्जं कुरु, कृतापराधमपि मामियमौदार्य्यात् स्वयमालिङ्गतीति मत्वा लज्जितो भविष्यतीत्येतदेवास्य शासनमित्यर्थः। अत्र मानेनमानेनेत्यव्यपेतमादिपादगतमादिभागयमकम् ॥ ४ ॥

मेघनादेन हंसानां मदनोमदनोदिना।
नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥ ५ ॥

तदेव द्वितीयपादगतमुदाहरति । मेघनादेनेति । हंसानां मदनोदिना गर्व्वमपनयता वर्षासु हंसानां निर्मदत्वादिति भावः । मेघस्य नादेन गर्ज्जितेन नुन्नः उद्दीपकत्वात् खण्डितोमानो यस्य तत्तथा तादृशं स्त्रीणां मनः कर्म्म मदनः कामो रत्या अनुरक्तिरूपया स्वभार्य्यया सह विगाहते विलोडयति, वर्षासु कामिनीनां मनो मानं विहाय सकामं सानुरागञ्च भवतीत्यर्थः ॥ ५ ॥

राजन्वत्यः प्रजा जाता भवन्तं प्राप्य सत्पतिम् ।
चतुरं चतुरम्भोधिरसनोर्व्वीकरग्रहे ॥ ६ ॥

तदेव तृतीयपादगतमुदाहरति । राजन्वत्य इति । भवन्तं सत्पतिं सुपालकं प्राप्य प्रजाः राजन्वत्यः सुराजयुक्ता जाताः । सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवानित्यमरः, 'राज्ञो मतौ सौराज्ये' इति नलोपाभावः । किम्भूतं चत्वारोऽम्भोधय एव रसना काञ्ची यस्यास्तादृशी उर्व्वी तस्याः करग्रहे ..अंशग्राह्यभागग्रहणे अथच पाणिग्रहणे चतुरं निपुणम् ॥ ६ ॥

अरण्यं कैश्चिदाक्रान्तं कैश्चित् सद्म दिवौकसाम् ।
पदातिरथनागाश्वरहितैरहितैस्तव ॥ ७ ॥

तदेव चतुर्थपादगतमुदाहरति । अरण्यमिति । कैश्चित् पलाय्य जीवद्भिस्तव अहितैः शत्रुभिररण्यमाक्रान्तं प्रविष्टं, तथा कैश्चित् सम्मुखयुद्धेन मृतैरहितैर्दिवौकसां सद्म स्वर्ग

आक्रान्तं, किम्भूतैः पदातिरथनागाश्वरहितैः पदात्यादिसेनाङ्गशून्यैः। एवमव्यपेताविमिश्रयमकस्यादिभागविषयाश्चत्वारो भेदा दर्शिताः, द्वितीयभागादिविषया अप्येवंप्रकारा बोध्याः ॥ ७ ॥

मधुरं मधुरम्भोजवदने वद नेत्रयोः।
विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किं नु ते ॥ ८ ॥

अथ सम्भेदयोनीनव्यपेतयमकभेदान् दर्शयन् प्रथमं तावदादिमध्यान्तेत्यनेन प्रतिपादितं भेदत्रयं क्रमेणोदाहरति। मधुरमिति। नु भोः प्रिये मधुर्वसन्तस्ते तव अम्भोजसदृशं यद्वदनं तत्र वर्त्तमानयोर्नेत्रयोः 'सम्भ्यन्तमिदं' भ्रमरभ्रान्त्या भ्रमरमिथुनमिदमितिभ्रमेण, अम्भोजे भ्रमरमिथुनवर्त्तनस्य सम्भवायुज्यत एव भ्रान्तिः। किं मधुरं विभ्रमं विलासं विडम्बयति विशेषेण प्रेरयति अर्पयतीत्यर्थः। डम्ब प्रेरणे इत्यस्य चौरादिकस्य रूपं। वद कथय, तव नेत्रयोरयं विभ्रमो भ्रमरभ्रमवता वसन्तेनैव किं जनितः भ्रमरमिथुनस्य वसन्तोदयेन समुत्पन्नेऽम्भोजे सविलासं वर्त्तत इति युज्यतेऽयं वितर्कः। अम्भोजवदने इति सम्बोधनपदमिति कश्चित्। नु इत्यत्र नेतिपाठे किं न विडम्बयति अपि तु विडम्बयत्येवेत्यर्थः, अत्र मधुरं मधुरमिति वदने वदने इति प्रथमद्वितीयपादविषयमादिभागयमकम् ॥ ८ ॥

वारणो वा रणोद्दामो हयो वा स्मर दुर्द्धरः।
न यतो नयतोऽन्तं नस्तदहो विक्रमस्तव ॥ ९ ॥

प्रथमतृतीयपादगतं तदेवोदाहरति। वारण इति। हे स्मर यतस्तव रणोद्दामो युद्धदुर्म्मदो वारणो वा हस्ती च नास्ति तथा दुर्द्धरो रणदुर्द्धर्षो हयो वा घोटकश्च नास्ति 'वाद्वयमुभयप्राधान्यद्योतकं' तथापि नोऽस्मान् विरहिणोऽन्तं नाशं मृतप्रायत्वं नयतः प्रापयतस्तव विक्रमस्तत्तस्मादहो आश्चर्य्य इत्यन्वयः। दुर्द्धर इति विक्रमस्य विशेषणमिति केचित् ॥ ९ ॥

राजितैराजितैक्ष्ण्येन जीयते त्वादृशैर्नृपैः।
नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥ १० ॥

तदेव प्रथमचतुर्थपादगतमुदाहरति। राजितैरिति। आजिर्युद्धं तत्र तैक्ष्ण्यं तीक्ष्णता प्रचण्डत्वमित्यर्थः तेन राजितैः शोभितैस्त्वादृशैर्नृपैर्वसुधा पृथिवी तत्स्थलोक इत्यर्थः जीयते जयेन प्रथमं चीणीक्रियते, पुनर्जयानन्तरं वसूनां धनानां धारया धारावृष्ट्या निरन्तरदानेनेत्यर्थः तृप्तिं नीयते च। इत्यमादिमध्यान्तेत्यनेन प्रतिपादितास्त्रयोविभागा उदाहृताः ॥
॥ १० ॥

करोति सहकारस्य कलिकोत्कलिकोत्तरम्।
मन्मनोमन्मनोऽप्येष मत्तकोकिलनिस्वनः ॥ ११ ॥

अथ मध्यान्तेत्यनेन प्रतिपादितं तस्य प्रकारत्रयं क्रमेण दर्शयन् प्रथमं द्वितीयतृतीयपादगतमुदाहरति। करोतीति।

सहकारस्यास्य कलिका मन्मनः प्रियाविरहिणो मम मानसम् उत्कलिकोत्तरमुत्कण्ठाप्रधानं करोति वसन्तागमसूचकतयोद्दीपकत्वादिति भावः । न केवलमेकैवेयं किन्तु मन्मनः कर्णमूले गुप्तालाप इव, गौणप्रयोगोऽयम्, एष मत्तानां वसन्तप्रारम्भेणोन्मदानां कोकिलानां निस्वनोऽपि, सोऽपि मम मानसमुत्कलिकोत्तरं करोति। मन्मनश्च 'सुरते कर्णमूले तु निजदेशीयभाषया। दम्पत्योः कथनं यत्तु मन्मनं तं विदुर्बुधाः' इत्युक्तलक्षणः। मां मनुते उद्दिशति पचादित्वादजिति केचित्। मनसि मनुते प्रवुध्यतीति मन्मनः कामः मत्तकोकिलनिस्वनशब्दस्यपरे। अत्र कलिकोत्कलिकोत्तरमित्यत्र तकारस्य स्वरशून्यत्वात् तद्व्यवधानेऽपि यमकस्य नाव्यपेतत्वहानिः पर्यायवर्णसङ्ख्यापूरकतया स्वरयुक्तस्यैव वर्णस्य व्यवधायकत्वाभ्युपगमात् एवमन्यत्रापि बोध्यम्॥ ॥ ११ ॥

कथं त्वदुपलम्भाशाविहताविह तादृशी।
अवस्था नालमारोढुमङ्गनामङ्गनाशिनी॥ १२॥

तदेव द्वितीयचतुर्थपादगतमुदाहरति। कथमिति। प्रोषितं नायकं प्रति दूतीं प्रेरयन्त्या नायिकाया वाचिकमिदं। इह वसन्ते त्वदुपलम्भाशायास्तव प्राप्तिप्रत्याशाया विहतौ विघाते सति तादृशी अनुभूयमाना अङ्गनाशिनी अङ्गक्षयकरी क्षशलरूपेत्यर्थः अवस्था कामदशाविशेषः अङ्गनां स्त्रियं मामा-

रोढुमाक्रमितुं कथं नालं न समर्था अपि तु समर्थैव, पुरुषा हि कथञ्चित् धैर्य्यमवलम्ब्य कामदशया नाभिभूयन्ते अङ्गनास्तु स्वभावतोऽधीराः सुतरामभिभूयन्त एवेत्यङ्गना पदस्य सार्थक्यं, तव विरहे अतिकृशा मरणोन्मुखी जातास्मीति ज्ञातव्यमित्यर्थः ॥ १२ ॥

निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना ।
तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः ॥ १३ ॥

तदेव तृतीयचतुर्थपादगतमुदाहरति । निगृह्येति । नलिनोन्मुखाः पद्मेषु पतनोद्युक्ता अलिनो भ्रमराः बालैः कोमलैः पल्लवैः शोभिना तरुणा वृक्षेण कर्त्रा कृष्टान् प्रथममाकृष्टान् तरुणान् यूनो नेत्रे निगृह्य तरुशोभादर्शनोत्सुके चक्षुषी बलेन गृहीत्वा कर्षन्ति स्वशोभादर्शनपरान् कुर्व्वन्तीत्यर्थः । इत्थं मध्यान्तेत्यनेन प्रतिपादितं प्रकारत्रयमुदाहृतम् ॥ १३ ॥

विशदा विशदामत्तसारसे सारसे जले ।
कुरुते कुरुतेनेयं हंसी मामन्तकामिषम् ॥ १४ ॥

अथ मध्याद्येत्यनेन प्रतिपादितमेकप्रकारं दर्शयति । विशदेति । विशन्तः प्रविशन्त आमत्ताश्च सारसाः पक्षिविशेषा यत्र तादृशे सारसे सरःसम्बन्धिनि जले वर्त्तमाना विशदा शुभ्रा इयं हंसी राजहंसीत्यर्थः कुरुतेन कुत्सितकूजितेन कृत्वा उद्दीपकत्वेन विरहिणामसह्यत्वाद्रुतस्य कुत्सितत्वं, माम् अन्तकस्य

यमस्य आमिषं भोग्यं कुरुते, मां मारयितुं चेष्टत इत्यर्थः । आमिषं पुंनपुंसकम् । भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि चेति मेदिनी । अत्र मध्ययोर्द्वितीयतृतीयपादयोराद्यपादे च यमकमित्येक एव प्रकारः ॥ १४ ॥

विषमं विषमन्वेति मदनं मदनन्दनः ।
सहेन्दुकलयापोढमलया मलयानिलः ॥ १५ ॥

अथाद्यन्तेत्यनेन प्रतिपादितं प्रकारत्रयं क्रमेण दर्शयन् प्रथमं प्रथमद्वितीयचतुर्थपादगतमुदाहरति । विषममिति । अपोढमलया परित्यक्तहिमानीजनितमालिन्यया इन्दुकलया सह वर्त्तमानः तथा मदनन्दनः मम विरहिणोऽनन्दनोऽसन्तोषकः मदं मदनस्य गर्व्वं नन्दयति वर्द्धयतीति स तथेति वा, तादृशो मलयानिलः विषममप्रतिविधेयं विषं गरलं तथाविधगरलरूपमित्यर्थः, मदनं काममन्वेति अनुगच्छति उद्दीपयतीत्यर्थः । इन्दुकला मलयानिलश्च काममुद्दीपयतीत्यर्थः । विषमं विषमन्वेतीत्यत्र यम्यमानपदयोरेकस्य सानुस्वारत्वेनासन्तोषश्चेत् विषमं विषमं वृणोतीति प्रथमपादः पठनीयः । द्वितीयविषममित्यस्य विषेण सा उपमा यस्येति व्युत्पत्त्या विषसदृशमित्यर्थः, वृणोति तोदनं करोति ॥ १५ ॥

मानिनी मानिनीपुस्ते निषङ्गत्वमनङ्ग ! मे ।
हारिणी हारिणी शर्म्म तनुतां तनुतां यतः ॥ १६ ॥

प्रथमतृतीयचतुर्थपादगतं तदेवोदाहरति । मामि-नीति । हे अनङ्ग मा मां ते तव निषङ्गत्वं निरन्तरशरनिकर-पतनेन तूणप्रायत्वं निनीषुः प्रापयितुमिच्छुः तथा हारिणी हारवती अतएव हारिणी मनोहारिणी हाराद्यलङ्कारेण मनोहररूपवत्त्वात् द्विगुणतरं विरहदुःखं वर्द्धयन्तीत्यर्थः इयं मानिनी तनुतां यतः दुस्त्यजं मानं दृष्ट्वा चिन्तया क्षीणतां प्राप्नुवती मे मम शर्म्म मङ्गलं तनुतां करोतु मानत्यागेन यथेयं मे सुखजनिका स्यात् तथा भवदनुग्रहो भवत्वित्यर्थः । यत इति इणगतावित्यस्य शत्रन्तस्य षष्ठीरूपम् ॥ १६ ॥

जयता त्वन्मुखेनास्मानकथं न कथं जितम् ।
कमलं कमलंकुर्व्वदलिमदलि मत्प्रिये ॥ १७ ॥

तदेव द्वितीयतृतीयचतुर्थपादगतमुदाहरति । जयतेति । हे मत्प्रिये मम प्राणप्रतिमे अस्मान् जयता वशीकुर्व्वता त्वन्मु-खेन अकथं कथारहितं निर्व्विवादमित्यर्थः यथा तथा कमलं पद्मं कथं न जितम् अपि तु जितमेव, किम्भूतं कं जलमलंकु-र्व्वत्, तथा अलिमन्ति भ्रमरविशिष्टानि यानि दलानि तान्यस्य सन्तीति अलिमदलि । एवमाद्यन्तत्यनेन प्रतिपादितास्त्रयः प्रकाराः उदाहृताः ॥ १७ ॥

रमणी रमणीया मे पाटलापाटलांशुका ।
वारुणीवारुणीभूतसौरभा सौरभास्पदम् ॥ १८ ॥

अथ सर्व्वत इत्यनेन प्रतिपादितं पादचतुष्टयगतमव्यपेत-मादिभागयमकमुदाहरति। रमणीति। ईदृशी रमणी स्त्री मे मम रमणीया रतिस्थानं, कीदृशी पाटला पाटलाख्यवृक्षकुसुमं हरीतक्यादिषु पाठात् स्त्रीलं। तद्वत् पाटलं श्वेतरक्तवर्णं अंशुकं वस्त्रं यस्याः सा, अतएव अरुणीभूता सौरी सूर्य्यसम्बन्धिनी भा दीप्तिर्यत्र तादृशी वारुणीव पश्चिमदिगिव,तथा सौरभस्य सौगन्ध्यस्यास्पदं स्थानम्। इत्यमादिमध्यान्तेत्यादिकारिकया प्रतिपादिता अव्यपेतादिभागयमकस्यैकादश प्रकारा उदाहृताः॥ ॥ १८ ॥

इति पादादियमकमव्यपेतं विकल्पितम्।
व्यपेतस्यापि वर्ण्यन्ते विकल्पास्तस्य केचन ॥ १९ ॥

इतीति। पादादियमकं पादस्यादिभागगतयमकं। विकल्पितं सप्रभेदं दर्शितं। विकल्पा भेदाः। तस्य यमकस्य। केचन नतु सर्व्वे ॥ १९ ॥

मधुरेणदृशां मानं मधुरेण सुगन्धिना।
सहकारोद्गमेनैव शब्दशेषं करिष्यति ॥ २० ॥

तत्र व्यपेतमादिभागयमकमेकस्मिन् पादे न सम्भवतीति प्रथमं प्रथमद्वितीयपादगतं तदुदाहरति। मधुरिति। मधुर्वसन्तः एणदृशां हरिणाक्षीणां मानं प्रणयेर्ष्याकोपं सहकारोद्गमेनैव, छदभिहितभावत्वादुद्गतसहकारमुकुलेनैवेत्यर्थः

शब्दशेषं मानेतिनाममात्रावशिष्टं करिष्यति गलयंतोमानं रचयिष्यतीत्यर्थः, किम्भूतेन यतोमधुरेण मधुयुक्तेन मधुविन्दून् चरतेत्यर्थः तथा सुगन्धिना, इत एवाद्दोद्दीपकत्वम्। तत्र मधुरेण मधुरेणेतिवर्णसङ्घातावृत्तेर्दृश्यां मानमितिवर्णचतुष्टय-व्यवहितत्वाद्व्यपेतयमकत्वम्। एवमग्रेऽपि बोध्यम्॥ १०॥

करोऽतिताम्रो रामाणां तन्त्रीताडनविभ्रमम्।
करोति सेर्ष्यं कान्ते च श्रवणोत्पलताडनम्॥ २१॥

तदेव प्रथमतृतीयपादगतमुदाहरति। कर इति। रामाणां रमणीनामतिताम्रोऽतिलोहितः करः पाणिः तन्त्रीताडनविभ्रमं वीणागततन्त्र्यास्फालनरूपं सविलासं कर्म्म करोति, तथा कान्ते च कृतापराधे नायके च सेर्ष्यं यथा तथा श्रवणोत्पलेन यत्ताडनं तदपि करोति॥ २१॥

सकलापोल्लसनया कलापिन्यानु नृत्यते।
मेघाली नर्त्तिता वातैः सकलापे विमुञ्चति॥ २२॥

तदेव प्रथमचतुर्थपादगतमुदाहरति। सकलापोल्लसन-येति। वातैर्नर्त्तिता सकला मेघाली अपोजलानि विमुञ्चति वर्षति, अनु पश्चाच्च कलापस्य पिच्छस्य यदुल्लसनमुल्लसनं तेन सह वर्त्तमानया कलापिन्या मयूर्य्या नृत्यते। वर्षास्वभावो-ऽयम्॥ २२॥

**स्वयमेव गलन्मानकलि कामिनि! ते मनः।**
**कलिकामिव नीपस्य दृष्ट्वा कां न स्पृशेद्दशाम्॥ २३॥**

तदेव द्वितीयतृतीयपादगतमुदाहरति। स्वयमेवेति। हे कामिनि स्वयमेव नायककृतानुनयमन्तरेणैव गलन् मानरूपः कलिः कलहः मानजनकः कलिर्व्वा यस्मात् तादृशं ते तव मनः कर्तृ अतिकोमलत्वाद्धैर्य्यशून्यमित्यर्थः, इह प्रावृट्प्रारम्भे उद्गतां नीपस्य कदम्बस्य कलिकां कोरकं दृष्ट्वा कां दशां न स्पृशेत् अपि तु सर्व्वा अपि कामदशाः प्राप्स्यतीत्यर्थः॥ २१॥

**आरुह्याक्रीडशैलस्य चन्द्रकान्तस्थलीमिमाम्।**
**नृत्यत्येष लसच्चारुचन्द्रकान्तः शिखावलः॥ २४॥**

तदेव द्वितीयचतुर्थपादगतमुदाहरति। आरुह्येति। आक्रीड उद्यानं तत्र यः शैलः क्रीडापर्व्वतस्तस्य इमां, चन्द्रकान्तो-मणिविशेषस्तस्य स्थलीमारुह्य एष शिखावलो मयूरः लसन् चन्द्रकाणां मेचकानामन्तः प्रान्तभागो यस्य तादृशः सन् नृत्यति॥ २४॥

**उद्धृत्य राजकादुर्व्वीं ध्रियतेऽद्य भुजेन ते।**
**वराहेणोद्धृता यासौ वराहेरुपरि स्थिता॥ २५॥**

तदेव तृतीयचतुर्थपादगतमुदाहरति। उद्धृत्येति। हे राजन् यासौ वराहेण शूकरमूर्त्तिना भगवता विष्णुना उद्धृता

पातालादुत्तोलिता सती वराहैः श्रेष्ठनागस्यानन्तस्योपरि स्थिता सा उर्वी अद्य तव भुजेन राजकाद्राजवृन्दादुद्धृत्य ध्रियते ॥ २५ ॥

करेण ते रणेष्वन्तकरेण द्विषतां हताः ।
करेणवः क्षरद्रक्ता भान्ति सन्ध्याघना इव ॥ २६ ॥

तदेव प्रथमद्वितीयतृतीयपादगतमुदाहरति । करेणेति । हे राजन् रणेषु द्विषतां रिपूणामन्तकरेण विनाशकारिणा ते तव करेण हस्तेन हताः करेणवो गजाः क्षरद्रक्ता गलद्रुधिराः सन्तः सन्ध्याघना इव सन्ध्याकालीना मेघा इव भान्ति । 'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी ॥ २६ ॥

परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः ।
परागतमिव क्वापि परागततमम्बरम् ॥ २७ ॥

तदेव प्रथमतृतीयचतुर्थपादगतमुदाहरति । परेति । वातैर्ध्वस्ता ध्वंसिता उत्पाटितेत्यर्थः अगस्य पर्वतस्य तरुराजीव वृक्षश्रेणीव भटैर्वलनीयनृपसैन्यैः परा परकीया चमूः सेना ध्वस्ता विनाशिता, अन्तर्भूतण्यर्थत्वात् ध्वंसतेः सकर्मकत्वम् । ततश्च परागैः ध्वस्तावशिष्टपलायमानपरचमूत्थापितधूलिभिस्ततं व्याप्तं सदम्बरमाकाशं क्वापि दीपान्तरे परागतमिव पलायितमिव धूलिभिरम्बरमलक्षितमभूदित्यर्थः ॥ २७ ॥

पातु वो भगवान् विष्णुः सदा नवघनद्युतिः।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥ २८ ॥

तदेव द्वितीयतृतीयचतुर्थपादगतमुदाहरति। पात्विति। नवघनस्येव द्युतिर्यस्य सः, तथा दानवकुलध्वंसी, तथा सदानः समदो वरः श्रेष्ठो यो दन्ती कुवलयापीडाख्यो गजस्तस्य हन्ता स प्रसिद्धो भगवान् विष्णुर्वो युष्मान् सदा पातु ॥ २८ ॥

कमलैः समकेशन्ते कमलेर्ष्याकरं मुखम्।
कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥ २९ ॥

सर्व्वपादगतं तदेवोदाहरति। कमिति। हे सुन्दरि ते तव कं शिरः अलैर्भ्रमरस्य समाः सदृशाः अतिश्यामला इत्यर्थः केशा यत्र तत्, तथा तव मुखं कमलेर्ष्याकरं पद्मानां द्वेषकृत् कमलसदृशमित्यर्थः, अतएव त्वं कमलेव लक्ष्मीरिव कं जनं उन्मादिष्णुषु उन्मादवत्सु मध्ये अलेख्यमगणनीयं करोषि अपि तु सर्व्वानेव पुरुषानुन्मत्तान् करोषीत्यर्थः ॥ २९ ॥

मुदा रमणमन्वीतमुदारमणिभूषणाः।
मदभ्रमदृशः कर्तुमदभ्रजघनाः क्षमाः ॥ ३० ॥

सम्प्रति व्यपेतस्यैव सजातीयविजातीयघटितानि प्रकारान्तराणि दर्शयन् प्रथमं प्रथमद्वितीययोरेकविधं तृतीयचतुर्थयो-

अन्यविधमुदाहरति। मुदेति। मदाराणि मदानि मदामुख्यानीत्यर्थः मणिभूषणानि मणिमयाभरणानि यासां ताः, तथा मदेन मद्योपयोगेन शिरोघूर्णनादिविकारविशेषेण वा भ्रमन्त्यो घूर्णन्त्यो दृशश्चक्षूंषि यासां ताः, तथा मदभ्रमघनाः पृथुजघनाः स्त्रियः मुदा हर्षेण रमणं कान्तमभ्यीतमनुगतं कर्तुं मुदा अभ्यीतं हर्षयुक्तं कर्तुमिति वा क्षमाः समर्थाः। अभ्यीतमिति ईगतावित्यस्य रूपम्। मदाढ्यजघना इत्यत्र मदभ्रमदना इत्येव पाठः सम्यक् पूर्व्वपादत्रये वर्णचतुष्टयस्यैव यमकमानत्वादिति ध्येयम् ॥ ३० ॥

उदितैरन्यपुष्टानामारुतैर्मे हृतं मनः।
उदितैरपि ते दूति! मारुतैरपि दक्षिणैः ॥ ३१ ॥

तदेव प्रथमतृतीययोर्द्वितीयचतुर्थयोश्चोदाहरति। उदितैरिति। आः इति खेदे, अन्यपुष्टानां कोकिलानामुदितैः उद्गतैः 'उत्पूर्व्वादिण् गतावित्यस्मात् कर्त्तरि क्तः। रुतैः शब्दैर्मे मनो हृतं हिंसितं व्यथितमित्यर्थः। न केवलं तैरेव किन्तु हे दूति ते तव उदितैर्वचनैरपि। वदतेर्भावे क्तः। प्रियागमनकथनेऽपि उदितैर्वचनैरपि हृतं तथा दक्षिणैर्दक्षिणदिग्भवैर्मारुतैर्वायुभिरपि' ॥ ३१ ॥

सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः।
तनुमध्याः क्षरत्स्वेदसुराजितमुखेन्दवः ॥ ३२ ॥

तदेव प्रथमचतुर्थयोर्द्वितीयतृतीययोश्चोदाहरति। सुरेति। तनु क्षीणं मध्यं यासां ताः, तथा चरन् सञ्चोदयाद्गलन् यः खेदो घर्म्मजलं तेन सुराजिताः सुशोभिताः मुखानि इन्दवश्चन्द्रा इव ते यासां ताः स्त्रियः सुरया मद्येन जिता-पराक्षा क्षीलज्जा यासां तादृश्यः सत्यः यूनां तनुं देहं जात्याश्रयणादेकवचनम्, अध्यासते अधिशेरते 'यवार्थोऽधि-ष्ठादेरित्याधारस्य कर्म्मत्वम्॥ ३२ ॥

इति व्यपेतयमकप्रभेदोऽप्येष दर्शितः।
अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा॥ ३३ ॥

इत्थमव्यपेतं व्यपेतञ्च यमकं दर्शितं सम्प्रति तयोरेकत्र संमिश्रणेन भेदान्तराणि दर्शयन्नाह। इतीति। अपिना पूर्व्व-दर्शिताव्यपेतयमकसमुच्चयः। अव्यपेतव्यपेतात्मा अव्यपेतव्यपेत-संमिश्रणात्मकः, विकल्पो यमकस्य भेदः। तद्यथेति, अव्यपेत-व्यपेतात्मकं यमकं यथेत्यर्थः, यद्वा तदित्यव्ययं स विकल्पो यथेत्यर्थः॥ ३३ ॥

सालं सालंवकलिकामालं मालं न वीक्षितुम्।
नालीनालीनवकुलानाली नालीकिनोरपि॥ ३४ ॥

तत्र प्रथमद्वितीययोस्तृतीयचतुर्थयोस्तदुदाहरति। सालमिति। प्रोषितं नायकं प्रति दूत्या नायिकावस्थावर्णनमिदं। सा आली मम सखी सालम्बाः लम्बमानत्वेन सद्वर्त्तमाना

या: कलिका: कोरकाख्या: सन्ति गच्छतीति सालम्बकलिका-सालः। कर्णवेष्टनस्तिति वद। तं सालं वृक्षमात्रं सर्ज्जवृक्षं वा, 'सालः पादपमात्रेऽपि प्राकारे सर्ज्जपादपे' इति मेदिनी। वीक्षितुम् उद्दीपकत्वाद्द्रष्टुं नालं न समर्था। सालम्बकलिका: साला: आवरणकारित्वात् प्राकारा इव यचैत्यन्ये। तथा आलीयन्तेऽत्रेति आलीना: 'अधिकरणे क्त:' तादृशा वकुला वकुलवृक्षाचैत्यादृशानलीन् भ्रमरानपि वीक्षितुं नालं। तथा अलीकं मिथ्यावचनं तद्विद्यते यासां तास्तया तादृशीरलीकिनी: झटिति तव प्रिय आगमिष्यतीतिमिथ्यावादिनी: सखी-रपि वीक्षितुं नालं, यद्वा अलीकिनी: पद्मिनी:। 'अलीकिनी पुटकिनी विसिनी पद्मिनी तथेति व्याडि:। अत्र प्रथमपादे सालं सालमित्यव्यपेतं तस्यैव द्वितीयपादे व्यवधानेन पुनरा-वृत्तिरिति व्यपेतञ्च, एवमुत्तरार्द्धे नालीनालीत्यत्रापि अत्र वर्णद्वयस्यापि संहतित्वमस्त्येवेति न यमकत्वाभावशङ्का ॥ ३४ ॥

कालं कालमनालक्ष्यतारतारकमीक्षितुम् ।
तारतारम्यरसितं कालं कालमहाघनम् ॥ ३५ ॥

तदेव प्रथमचतुर्थयोर्द्वितीयतृतीययोश्चोदाहरति। का-लमिति। का प्रियविरहिणी नारी ईदृशं कालं प्रावृट्समय-मीक्षितुमलं समर्था अपि तु न कापि, कालपदञ्च तदुत्पन्नो-द्दीपकवस्तुपरम्। किम्भूतम् अनालक्ष्या: सम्यगदृश्यास्तारा उज्ज्वलास्तारका नक्षत्राणि यत्र तं, तथा तारतया अत्युच्चत्वेन

भरण्यं अवधदुःखदं रचितं मेघानां गर्ज्जितं यत्र तं, तथा कालाः कृष्णवर्णा महान्तो घना मेघा यत्र तम्, अतएव कालं विरहिणां साधारणमिव। अत्र कालं कालेत्यत्र एकस्य सानुस्वारत्वे अपरस्य तदभावे यद्यप्यलोपस्तदा कालं कालं दुरालक्ष्येति प्रथमपादः, कालं कालंकृतं घनैरिति चतुर्थपादश्च पठनीयः, घनैः कालंकृतं कुत्सितालङ्कारवन्तमित्यर्थः॥ ३५॥

याम यामत्रयाधीनायामया मरणं निशा।
यामगाम धियाऽस्वर्त्याया मया मथितैव सा॥ ३६॥

तदेव पादचतुष्टयगतमुदाहरति। यामेति। निशायामुद्दीप्तमदनस्य स्वावस्थयानुमितनायिकावस्थस्य कस्यचिद्विरहिणोविलापवर्णनमिदम्। यामत्रयस्य प्रहरत्रयस्याधीनः प्रहरत्रयकृत आयामोदैर्घ्यं यस्याः सा तथा तया निशा रात्र्या हेतुना वयं मरणं याम गच्छाम, निशायास्त्रियामात्मकत्वं यथा 'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्' इति स्मृतिः। अथ त्वस्माकं मरणं न तत्र विशेषेण हानिः किन्तु धिया मनसा वयं यां कान्तामयाम अगच्छाम स्वस्मिन् यस्याः प्रणयमवर्द्धयामेत्यर्थः, लङुपरस्मैपदोत्तमपुरुषबहुवचनं। सा अस्वर्त्याया मां विना अस्वर्त्तिं प्राणपीडामायाति प्राप्नोतीति आयातेः क्विप्, ईदृशी सा मया मथितैव मयैव विदेशागतेन सा विनाशिता मयि प्रणयं कृत्वा सा तपस्विनी म्रियते इयमेव मे महती हानिरिति भावः॥ ३६॥

इतिपादादियमकविकल्पस्येदृशी गतिः ।
एवमेव विकल्प्यानि यमकानीतराण्यपि ॥ ३७ ॥

आदिभागयमकमुपसंहरति । इतीति । गतिर्दिक् । इत-राणि मध्यान्तभागगतानि अव्यपेतव्यपेतमिश्ररूपाणि एवमेव पूर्व्वोक्तप्रकारेणैव एकद्वित्रिचतुष्पादे पादिष्वादिमध्यान्तेष्वादि कारिकोक्तप्रकारेणैवेत्यर्थः, विकल्प्यानि विकल्प्य ज्ञातव्यानि कानिचिदेव मया दर्शयिष्यन्ते सकलानि तु पूर्व्वप्रदर्शितादि-भागयमकरीत्या स्वयं ज्ञातव्यानीत्यर्थः ॥ ३७ ॥

न प्रपञ्चभयाद्भेदाः कार्त्स्न्येनाख्यातुमीप्सिताः ।
दुष्कराभिमता येतु वर्ण्यन्ते तेऽत्र केचन ॥ ३८ ॥

ननु भवतैव कथं साकल्येन न दर्शितास्तत्राह । नेति । प्रपञ्चभयात् ग्रन्थबाहुल्यकृतश्रोतॄवैमुख्यभयेन, ईप्सिताः इष्टाः । दुष्कराभिमताः दुष्करत्वेनाभ्येषां निश्चिताः, वर्ण्यन्ते प्र--च्छियन्ते, वक्ष्यन्त इति क्वचित्पाठः । तेऽत्रेत्यत्र तत्रेति क्वचित्पाठः तत्र तेषु मध्ये ॥ ३८ ॥

स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।
अमायतेयतेऽप्यभूत् सुखाय तेऽयते क्षयम् ॥ ३९ ॥

तथाव्यपेतं सर्व्वपादगतं मध्ययमकमुदाहरति । स्थिरायत इति । स्थिरा अविनश्वरा आयतिरुत्तरकालो यस्य स तथा

तत्सम्बोधनम् 'उत्तरः काल आयतिरित्यमरः। हे चिरायते भवान् यतेः संयमात् समाधेरित्यर्थः, न हीयते न च्युतो भवति कर्म्मकर्त्तरि रूपम्' यतो यतेन्द्रियः इन्द्रियसंयमवान् इन्द्रियाणामसंयमे हि समाधेः स्थिरत्वं न भवति तदुक्तं 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति। तथा ते तव अमायतापि मायारहितत्वमपि दृश्यते एतत्परिमाणाय अतिप्रभूतायेत्यर्थः तथा त्वयं नाशम् अयते न गच्छते नित्यायेत्यर्थः सुखाय परानन्दायाभूत्। अत्र यतेयते इति पादमध्यखण्डस्यावृत्तिः॥
॥ ३८ ॥

सभासु राजन्नसुराहतैर्मुखै-
र्महीसुराणां वसुराजितैः स्तुताः।
न भासुरा यान्ति सुरान्न ते गुणाः
प्रजासु रागात्मसु राशितां गताः॥ ४०॥

तदेव प्रतिपाद्यं केचन्नव्यपेतमुदाहरति। सभास्विति। हे राजन् ते तव गुणाः सुरान् देवान् न यान्ति सुराणां गुणेभ्योऽप्युत्कृष्टा इत्यर्थः, सुरान्न यान्ति अपि तु यान्त्येवेति केचित्। किम्भूताः महीसुराणां ब्राह्मणानाम् असुराहतैः सुरापानेन हतप्रायभिन्नैः अतिपवित्रैरित्यर्थः तथा वसुना तेजसा राजितैः शोभितैः धनदानेन प्रफुल्लैरिति वा 'देवभेदेऽनलेरश्मौ वसुरत्ने धने वस्वित्यमरः' ईदृशैर्मुखैः सभासु स्तुताः प्रशंसिताः, तथा भासुरा उज्ज्वलाः, तथा रागस्त्वां प्रत्यनुराग आत्मसु मनःसु

यासां तासां तथा तादृशीषु प्रजासु राजिता प्रभुतता गता: प्रजाभिर्बहुतया गृहीता इत्यर्थः ॥ ४० ॥

तव प्रियाऽसच्चरिते ! प्रमत्त या
विभूषणं धार्य्यमिहांशुमत्तया ।
रतोत्सवानन्दविशेषमत्तया
प्रयोजनं नास्ति हि कान्तिमत्तया ॥ ४१ ॥

अथ व्यपेतं पादचतुष्टयगतमन्तयमकमुदाहरति । तवेति । किमिति विभूषणमियं न परिदधातीति पृच्छन्तं शठनायकं प्रति सख्या उक्तिरियं । हे असच्चरित हे प्रमत्त या तव प्रिया प्रेयसी लोकसन्निधाने त्वया प्रेमास्पदत्वेनोच्यमानेत्यर्थः, सच्चरिताप्रमत्तेति पाठे सच्चरितेति अप्रमत्तेति च सोल्लुण्ठनसम्बुद्धिपदद्वयं । तया इह प्रस्तावे रतरूपो य उत्सवस्तज्जन्यो य आनन्दविशेषस्तेन मत्तया सत्या अंशुमद्दीप्तिमद्विभूषणं धार्य्यं, सम्प्रति तु त्वयि नायिकान्तरासक्तेऽस्या रतोत्सवानन्दविशेषो नास्त्येव तत्किमिति विभूषणं धार्य्यमित्युत्तरवचनमत्र प्रतीयमानं बोध्यं, ननु शोभार्थमपि किमिति न धार्य्यते तत्राह प्रयोजनमिति हि यतः कान्तिमत्तयाऽनैसर्गिकविलक्षणसौन्दर्य्यवत्त्वेन विभूषणैः प्रयोजनं कार्य्यं नास्ति, कान्तिरेवास्याः शोभासम्पादिका न पुनर्विभूषणमित्यर्थः । आनन्देत्यत्र आमोदेति क्वचित्पाठः । प्रयोजनं नास्तीत्यत्र न मे फलं किञ्चनेति पाठस्तु न मनोरमः ॥ ४१ ॥

भवादृशा नाथ ! न जानते नते
रसं विरुद्धे खलु सन्नतेनते ।
य एव दीनाः शिरसा नतेन ते
चरन्त्यलं दैन्यरसेन तेन ते ॥ ४२ ॥

अव्यपेतं तदेवोदाहरति । भवादृशा इति । हे नाथ राजन् भवादृशा नृपजनाः नतेर्नमनस्य रसमास्वादं न जानते, कुत इत्याह खलु यतः सन्नतं सम्यक् नमनम् इनता प्रभुता च ते सन्नतेनते विरुद्धे सामानाधिकरण्यशून्ये, तर्हि के जानत इत्यत्राह ये जना दीना एव केवलं दरिद्राः ते तेन प्रसिद्धेन दैन्यरसेन दारिद्र्यरूपेण विषेण दैन्यस्य रसेनास्वादेन वा हेतुना नतेन शिरसा ते तव अलमत्यर्थं चरन्ति त्वामुपचरन्तीत्यर्थः । ते तुभ्यं नतेन शिरसेति केचित् । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदास्वादयोः पुमान्' इति मेदिनी ॥ ४२ ॥

लीलास्मितेन शुचिना मृदुनोदितेन
व्यालोकितेन लघुना गुरुणा गतेन ।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन ॥ ४३ ॥

एकत्र व्यपेतसर्व्वपादगतमध्यान्तयमकद्वयमुदाहरति । लीलेति । सा नायिका शुचिना शुद्धेन लीलास्मितेन सविला-

सेपदुःसनेन मां हन्ति व्यथयति, एवं मृदुना मधुरेण उदितेन वचसा, तथा लघुना इष्टेन व्यालोकितेन वीक्षितेन, 'चिक्षिप्रेऽल्पे लघुरित्यमरः । तथा गुरुणा स्तनजघनगौरवान्मन्थरेण गतेन गमनेन, तथा व्याजृम्भितेन जृम्भया, जृम्भा हि स्त्रीणामनुरागं व्यञ्जयति, यदुक्तं 'जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति' इति । तथा दर्शितेन कथञ्चित् प्रकाशितेन जघनेन च । सर्व्वत्र करणे तृतीया । तेन तत्तत्करणकहननेन हेतुना मम जीवितेन गलितं गतमिव । भावे क्तः । अत्र पादानां मध्येष्वन्तेषु च तेनेत्यस्य पुनःपुनरावृत्तिः ॥४३॥

श्रीमानमानमरवर्त्मसमानमान-
मात्मानमानतजगतप्रथमानमानम् ।
भूमानमानमत यः स्थितिमानमान
नामानमानमतमप्रतिमानमानम ॥ ४४ ॥

तदेवाव्यपेतमुदाहरति । श्रीमानिति । हे जनाः यूयं...-त्मानं ब्रह्म आनमत नमस्कुरुत, किम्भूतम् अमरवर्त्म आकाशं तेन समानं मानं परिमाणं यस्य स तथा तम् आकाशवदपरिच्छिन्नमित्यर्थः, तथा आनते उपासनार्थं नम्रे जगति प्रथमानो विस्तारं गतो मानः पूजा यस्य स तथा तं, तथा भूमानं महान्तं, यद्वा भुवा भूरूपेण कार्य्येण मीयतेऽनुमीयते यस्तम्, अथवा भूराश्रयोऽधिष्ठानमित्यर्थः, तस्येव मीयते ज्ञायत इति तम् भ्रमविषयस्य प्रपञ्चस्याधिष्ठानमित्यर्थः ।

एवञ्चामरवर्त्मसमानमानमित्यनेनैकार्थत्वाभावः। तथा असमा-नान्यपरिमितानि नामानि यस्य स तथा तं प्रकृतिसम्पर्केण बहुभिर्नामभिः ख्यातिं गतमित्यर्थः, तथा आ ईषत् अनन्ति असन्तीत्यानाः प्राणसंयमवन्तो योगिनस्तैर्मतं योगधारणया ज्ञातम्, तथा प्रतिमीयते एभिरिति प्रतिमानानि प्रमाणानि तैर्मानं ज्ञानं यस्य स तथा तद्भिन्नं प्रमाणैरवेद्यमित्यर्थः, यद्वा अप्रतिमानमनुपमं मानं ज्ञानं यस्य स तथा तं प्रत्यक्षादि-लौकिकप्रमाणताटस्थ्येन केवलं मनःसंयमेन ज्ञायमानमित्यर्थः। नन्वयमभूत आत्मा गगनकुसुमादिवदलीक एवास्तां चार्व्वाका-दिभिरनङ्गीकृतत्वात्तत्राह य आत्मा स्थितिमान् स्थिरतरः जगदुत्पत्तिविनाशकारितयावश्याभ्युपेयत्वान्नित्यः स्थिरतरत्वेन योगिनामनुभवविषयतयानपलपनीय इति वा, तथा श्रीमान् स्वयं प्रकाशमानः, तथा असमान् विभुत्वात् क्वचिदपि न माति। यमकानुरोधाद्व्यवहितयोजना बोद्धव्या। अत्राद्यन्तयोरन्त्य-मकारयोः पद्यपूरकत्वाभावेनागण्यत्वान्मानमानेत्यत्र नान्त्य-यमकत्वहानिः। पादानां मध्यस्वन्तेषु च मानयुग्मानामव्यव-धानेनावर्त्तनात् पादचतुष्टयगतमव्यपेतमध्यान्तयमकमिदं। ननु मध्यपदं यमनयोग्यप्रथमखण्डतादृशान्तखण्डयोरन्तरालवाचि, यमनयोग्यता चैकवर्णस्य न सम्भवति वर्णसंहतेरित्युक्तेः तत् कथमेकवर्णात् परं मध्ययमकप्रदर्शनमिति चेन्नैवम् आद्यन्त-वर्णयोरन्तरालस्यैव मध्यपदेनोक्तत्वात्, अपरितोषस्तु इदमपि नमाननमानेति व्यपेतमध्यान्तयमकोदाहरणं बोध्यं पूर्व्वपद्ये

वर्णद्वयस्य यमनमत्र तु वर्णत्रयस्येत्युदाहरणान्तरदर्शनायाः फलम्, अव्यपेतमध्यान्तयमकोदाहरणन्तु स्वयमूहनीयम् ॥ ४४ ॥

सारयन्तमुरसा रमयन्ती
सारभूतमुरुसारधरा तम् ।
सारसानुकृतसारसकाञ्ची
सा रसायनमसारमवैति ॥ ४५ ॥

पादचतुष्टयगतं व्यपेतमादिमध्ययमकमुदाहरति । सारयन्तमिति । सा काचित् स्त्री रसायनममृतमपि असारं तुच्छमवैति अवगच्छति प्रियालिङ्गनसुखादमृतपानसुखमपकृष्टमिति जानातीत्यर्थः, किम्भूता सारयन्तं स्वकुचमर्दमभिसारयन्तं तथा सारभूतम् अयमेव जगतोकः सार इत्यभिमन्यमानं तं कान्तम् उरसा वक्षसा रमयन्ती वक्षसा आलिङ्ग्य रमयन्तीत्यर्थः, उरसा सारयन्तमाश्लिष्यन्तं तं रमयन्ती प्रत्यालिङ्गनेन सुखयन्ती 'सृ आस्तरणे' इत्यस्य चौरादिकस्य रूपमिदं वा । तथा उरुसाराणि सुवर्णालङ्कारान् धरतीत्युरुसारधरा । उरुसारं सुवर्णं स्यादिति व्याडिः । तथा सारसैः पक्षिविशेषैरनुकृता सारसा सशब्दा काञ्ची यस्याः सा ॥ ४५ ॥

नयानयालोचनयाऽनयाऽनया
नयानयान्धान् विनयानयायते ।
न यानयासोऽज्झिनयानयानया
नयानयांस्तान् जनयानयाश्रितान् ॥ ४६ ॥

इदानीमेकत्र प्रथमतृतीयपादयोरव्यपेतमाद्यन्तयमकं द्वितीयचतुर्थयोस्तु तादृशमादिमध्ययमकञ्चोदाहरति। नयेति। अत्र पदच्छेदः। नयानयालोचनया, अनया, अनयान्, अयानयान्स्थान्, विनय, अनयायते, न, यान्, अयासीः, जिनयानयान्, अयानयान्, अयान्, तान्, जनय, अनयाश्रितान्, इति। न अयति गच्छतीति अनया अनपाया आयतिरुत्तरकालो यस्य स तथा तत्सम्बोधनं। हे अनयायते स्थिरायते राजन् अनया ईदृश्या प्रत्यक्षदृश्यमानयेत्यर्थः, नयोनीतिः अनयोऽनीतिः तयोरालोचनया अयं नयः श्रेयस्करः अयमनयो हानिकर इति विवेचनया अनयान् नीतिरहितान् अतएव अयस्य शुभावहविधेरानये आनयने अस्थान् आत्मनः शुभमपश्यत इत्यर्थः, ईदृशान् जनान् विनय शिक्षय यथा ते नीतिमार्गानुसारिणो भवेयुस्तथा तानुपदिशेत्यर्थः। इति प्रथमार्द्धस्यार्थः। किञ्च त्वं यान् जनान् न अयासीः गतवानसि यैः सह सङ्गं न कृतवानसीत्यर्थः, किम्भूतान् यतो जिनयानयान् यात्यनेनेति यानं मार्गः जिनस्य बौद्धस्य यानं जिनयानं दिगम्बरप्रस्थानमित्यर्थः, तद्यान्ति गच्छन्तीति ते तथा तान् दिगम्बरमतप्रविष्टानित्यर्थः, अतएव अयानयान् अयानमपथं यान्तीति ते तथा तान्, अतएव अनयाश्रितान् अशुभमवलम्बमान् तान् जनान् अयान् अं विष्णुं यान्तीति अयास्तादृशान् जनय कुरु जैनान् जनान् वैष्णवान् कुर्व्वित्यर्थः। सर्व्वत्र आदन्तादमादेरप्रादेरित्यङ्, इत्युत्तरार्द्धार्थः॥ ४६॥

रवेण भौमो ध्वजवर्त्तिवीरवे-
रवेजि संयत्यतुलास्त्रगौरवे ।
रवेरिवोग्रस्य पुरो हरेरवे-
रवेत तुल्यं रिपुमस्य भैरवे ॥ ४७ ॥

अथ व्यपेतं पादचतुष्टयगतमाद्यन्तयमकमुदाहरति । रवेणेति । श्रीकृष्णस्य नरकासुरेण सह युद्धवर्णनमिदं । भूमेरपत्यं भौमो नरकासुरः, ध्वजवर्त्तिनः श्रीकृष्णस्य रथध्वजे वर्त्तमानस्य वीरस्य वीर्य्यवतो वेः पक्षिणो गरुडस्य रवेण शब्देन कर्त्रा संयति युद्धे अवेजि उद्वेजितः, किम्भूते संयति अतुलमनुपमम् अस्त्राणां गौरवं गुरुत्वं बाहुल्यं वा यत्र तस्मिन्, स्त्रियां संयदित्यमरे संयच्छब्दस्य स्त्रीलिङ्गत्वेऽपि बहुषु पुंस्त्वमपि दृश्यत इत्यत्र पुंस्त्वं । तथा भैरवे भयङ्करे । यद्वाहनस्येदृशी योग्यता तस्यायमकिञ्चित्कर इत्याह । रवेः सूर्य्यस्येव उग्रस्य तेजस्विनोऽस्य हरेः श्रीकृष्णस्य अथच सिंहस्य पुरोऽग्रे रिपुं नरकम् अवेर्मेषस्य तुल्यमवेत यूयं जानीत, यथा सिंहस्याग्रे मेषः तथा श्रीकृष्णस्याग्रे नरक इत्यर्थः ॥ ४७ ॥

मयामयालम्ब्यकलामयामया-
मयामयातंव्यविरामयामया ।
मयामयार्त्तिं निशयामयामया-
मयामयामूं करुणामयामया ॥ ४८ ॥

तदेवाव्यपेतमुदाहरति । मयेति । सखायं प्रति कस्यचिद्विरहिणो वचनमिदम् । अत्र पदच्छेदः । तत्र प्रथमपादे

मयामयालम्ब्यकलामयामयाम्, इत्येकमेव पदम्। अयाम्, अयातव्यविरामयामया, इति द्वितीयपादे। मया, अमयार्त्तिं, निशया, अमया, अमया, इति तृतीयपादे। अमय, आमय, अमं, करुणामय, आमया, इति चतुर्थपादे। तदयमन्वयः। हे अमय! मिनोति क्षिपतीति मयः 'डुमिञ् क्षेपणे इत्यस्य कर्त्तरि डः, तद्भिन्नोऽमयः तत्सम्बोधनं सर्व्वास्ववस्थासु मामनुवर्त्तमानेत्यर्थः, तथा हे करुणामय! दयामय! सखे! मया सह अमं नायिकाम् आमय संगमय 'अम्गताविव्यस्य णिजन्तस्य रूपम्। मया किम्भूतेन आमारोगः 'अम्रोग इत्यस्य चौरादिकस्य रूपम्, आमं कामपीडां याति प्राप्नोतीति आमयाः तेन आमया 'धातोराकृ प्रसाद्यचीत्याकारलोपः। मया सह तस्याः सङ्गमश्च न दुर्घट इति सूचयन् नायिकां विशिनष्टि मयो गमनं कलाचय इत्यर्थः। मयगताविव्यस्य रूपं, तद्विपरीतोऽमयः कलोपचयश्च इत्यर्थः, ताभ्यामालम्ब्य आश्रयणीयः कलापचयोपचयाभ्यामित्यर्थः, तादृशो यः कलामयः कलावांश्चन्द्रस्तस्मादामयो रोगः कामपीडा यस्याः सा तथा तां, मापि मामप्राप्य उद्दीपकेन चन्द्रेण पीडिता अतस्तव लघुनैव यत्नेन तस्याः सङ्गमो भविष्यतीति भावः। तस्याः प्राप्तौ कथमेवं व्याकुलीभवसीत्यचाह, यतोऽहं निशया राच्या हेतुना मयो गमनं प्राप्तिरित्यर्थः तस्याभावोऽमयं तस्या अप्राप्तिरित्यर्थः तज्जन्यामर्त्तिं पीडां अयाम् अगच्छं, निशया किम्भूतया अयातव्योऽप्राप्तव्यो विरामोऽवसानं येषां

तादृशा यामाः प्रहरा यस्याः सा तथा तया दीर्घयामयेत्यर्थः, अतएव अमया नास्ति मा परिमाणं यस्याः सा तथा तया अतिदीर्घयेत्यर्थः, अतएव अमया नास्ति मा शोभा यस्याः सा तथा तया कुत्सितयेत्यर्थः ॥ ४८ ॥

मतां धुनानारमतामकामता
मतापलब्धाग्रिमतानुलोमता ।
मतावयत्युत्तमता विलोमता-
मतास्यतस्ते समता न वामता ॥ ४९ ॥

अथ व्यपेतमादिमध्यान्तयमकं पादचतुष्टयगतमुदाहरति । मतामिति । कश्चिन्महाशयं प्रति कस्यचित् स्तुत्युक्तिरियम् । पदच्छेदो यथा । मतां, धुनाना, आरमताम्, अकामता, इति प्रथमे । अतापलब्धा, अग्रिमतानुलोमता, इति द्वितीये । मतौ, अयती, उत्तमताविलोमताम्, इति तृतीये । अतास्यतः, ते, समता, न, वामता, इति चतुर्थे । अतास्यतः कथमपि [illegible]म-गच्छतस्ते तव मतौ बुद्धौ समता मित्रामित्रादिषु तुल्यवृत्ति-तैव विद्यते, न वामता प्रतिकूलता तु न विद्यते, किम्भूता समता आरमतामात्मारामाणां योगिनां मतां सम्मताम् अकामतां निरभिलाषतामपि धुनाना आक्षिपन्ती ततोऽप्युत्कृष्टेत्यर्थः, तथा अतापेनाक्लेशेन लब्धा, तथा अग्रिमतायाः श्रेष्ठताया अनुलोमता आनुकूल्यं यया सा श्रेष्ठत्वसम्पादिकेत्यर्थः, तथा उत्तमताया गुणिताया विलोमतां प्रातिकूल्यम् अयती

अगच्छन्तौ। अत्र पादानामादौ मध्येऽन्ते च व्यवधानेन सतेति वर्णद्वयस्यावृत्तिः ॥ ४८ ॥

कालकालगलकालकालमुखकालकाल
कालकालघनकालकालपनकाल काल ! ।
कालकालसितकालका ललनिकालकाल
कालकालगतु कालकाल कलिकालकाल ॥ ५० ॥

तदेवाव्यपेतमुदाहरति। कालेति। श्रीकृष्णं प्रति श्रीराधायाः सहचर्य्या उक्तिरियं। हे काल कृष्ण 'अयं द्वितीयपादान्तकालपदस्यार्थः, ललनिका अनुकम्पनीया ललना 'अनुकम्पायां कप्रत्ययः, श्रीराधेत्यर्थः, आलगतु त्वयि संसक्ता भवत्वित्यन्वयः। तत्र कृष्णस्य विशेषणानि सम्बुद्धिविभक्त्यन्तपदानि। हे कालकालगलकालकालमुखकालकाल! कालः सर्व्वेषां लयकारकः 'कलनात् सर्व्वभूतानां स कालः परिकीर्त्तित इति स्मृतेः। तादृशो यः कालगलो नीलकण्ठः शिवः, काल्या अयं पतिः कालो यः कालगलः शिव इति केचित्, तथा कालो यमः, तथा कालमुखो वानरविशेषश्च तेषां द्वन्द्वः, एषां कालकं कृष्णत्वमालाति गृह्णातीति स तथा तत्सम्बोधनम्। ला आदाने इत्यस्मादन्तादसादेरप्रादेरित्युक्। शिवकण्ठयमदेहवानरविशेषमुखवत्कृष्णवर्णेत्यर्थः। तथा हे कालकालघनकालकालपनकाल ! कं जलमालाति धारयतीति कालः अतएव कालः कृष्णवर्णो यो घनो मेघः तस्य काले समये वर्षा-

काले इत्यर्थः, कायन्ति शब्दं कुर्व्वन्तीति कालकालघनकालका मयूराः 'कैशब्दे इत्यस्याङि रूपं' तेषामालपनं मुखं तद्वत् कलते शब्दं करोतीति स तथा तत्सम्बोधनं 'कलशब्दे इत्यस्य घणि रूपं, मयूरवत् षड्जस्वरेण भाषमाणेत्यर्थः। कालकालपन-कालकालघनकालकालेतिपाठे तु काले वर्षाकाले कायन्तीति कालका मयूरास्तेषामालपनं रुतं कालयति प्रेरयति प्रवर्त्त-यतीत्यर्थ इति कालकालपनकालः 'कल्प्रेरणे इत्यस्य चौरा-दिकस्य रूपं। तथा कालः पूर्व्वोक्तव्युत्पत्त्या सजलो यो घनस्तद्वत् काल श्यामलेत्यर्थः। तथा हे कालकाल! कालेन समयस्वरू-पेणात्मना कालयति लोकान् प्रेरयतीति स तथा तत्सम्बोधनं, कृष्णस्य कालस्वरूपत्वं यथा 'कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्त्तत इति स्मृतिः। तथा हे कलिकालकाल! कलिकालस्या-न्तायुगस्य कालो मृत्युरन्तः स तथा तत्सम्बोधनं कल्किरूपेण कलियुगनिवर्त्तकेत्यर्थः भक्तानां कलिकालभयनिवारकेति वा. लगलित्यनन्तरं चतुर्थपादभागस्यायमर्थः। 'कालो मृत्यौ महाकाले समये यमकृष्णयोरिति मेदिनी। ललनिका किम्भूता कालकालसितकालका कालकेन कृष्णत्वेन आलसितं शोभितं कं मस्तकं यैस्तादृशा अलकाश्चूर्णकुन्तला यस्याः सा। कं जलमालातीति कालं सरस्तत्र कायन्तीति कालका हंसा-स्तेषामिवाल्लसितं लीलागमनं ययोस्तादृशौ कालकौ पादौ यस्याः सा इति केचित्। तथा अलकालकालका अलकाश्चूर्ण-कुन्तलान् अलते भुक्तादिना भूषयतीति अलकाली 'अलञ्

भूषायामित्यस्य णटि रूपं, तथा कालं कलं 'स्वार्थे टण्' मधुर-मित्यर्थः, यथा तथा कायति वक्तीति कालका, अलकाली चासौ कालका चेति विशेषणयोः कर्मधारयः। अलकायाः कुवेर-पुर्य्या आलको भूषकः कुवेरस्तस्याघ्यालको भूषकस्तत्सम्बो-धनमित्यन्ये। अत्र समस्तावयवानां केषाञ्चिदेकार्थत्वेऽपि समु-दायस्य तथात्वाभावान्न यमकत्वहानिः। षोडशाक्षरमिदं वृत्तम्॥ ५०॥

सन्दष्टयमकस्थानमन्तादी पादयोर्द्वयोः।
उक्तान्तर्गतमप्येतत् स्थानत्वेणात्र कीर्त्यते॥ ५१॥

अथ श्लोकान्तर्गतस्याप्यन्तेरकस्य सन्दष्टयमकस्य स्थानं निय-मयति। सन्दष्टेति। सन्दष्टयमकं सन्दंशाकारं यमकं सन्दंशो यथा उभयभागाक्रमणकारी तथेदमपि पादयोरन्तादि-भागाक्रमणकारीत्यर्थः। तस्य द्वयोः पादयोः सन्निकृष्टयोः पूर्व्वापरचरणयोः, अन्तादी प्रथमपादस्यान्तभागो द्वितीय-पादस्यादिभागश्च, एवं द्वितीयपादस्यान्तभागस्तृतीयपादस्या-दिभागश्च तथा तृतीयपादस्यान्तभागश्चतुर्थपादस्यादिभाग-श्चेत्यर्थः एतौ भागौ स्थानं विषयः। एतत्सन्दष्टाख्यं यमकम् उक्तान्तर्गतमपि 'रवेण भौम इत्यादावव्यपेतान्तादियमकमध्य-पतितमपि, अत्र यमकेषु मध्ये, स्थानत्वेण पृथक्त्वेन कीर्त्यते प्राचीनमतमनुरुध्यानेनोच्यते॥ ५१॥

उपोढरागाप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता ।
न योजितात्मानमनङ्गतापिता-
ङ्गतापि तापाय ममास नेयते ॥ ५२ ॥

सन्दष्टमुदाहरति । उपोढेति । कस्यचिद्विरहिणो मित्रं प्रति मानिनीकृतस्वावस्थावर्णनमिदं । सा अबला मदेन यौवनविकारेण मद्योपयोगेन वा हेतुना उपोढरागापि मां प्रति प्राप्तानुरागापि, अतएव योजित आत्मा मनो यत्र तादृशीमनङ्गतापिताम् अनङ्गमङ्गतार्थं कामं तापयतीत्यनङ्गतापिनी तस्या भावोऽनङ्गतापिता तां गतापि, समुद्रिक्ता हि कामस्तत्कार्य्यमनाचरन्तीभिः स्त्रीभिस्ताप्यत । तदाह कालिदासः 'आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वादाबाधन्ते मनसिजमपि चिप्तकालाः कुमार्य्य' इति । सानुरागा सकामा च सत्यपीत्यर्थः, मदेनसा मम पापेनापराधेन वा कर्त्रा मन्युरसेन क्रोधरसेन सह योजिता सती मम इयते एतावते तापाय एतावन्तं तापं जनयन्तीत्यर्थः न न आस रराज अपि त्वामेव असङ्गत्यादानदीप्तिष्वित्यस्य लिटा रूपम् ॥ ५२ ॥

अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ।
पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥ ५३ ॥

इत्थं पादभागयमकभेदान् प्रदर्श्य सम्प्रति समस्तपादयमकभेदान् दर्शयितुमारभते । अर्द्धाभ्यास इति । अर्द्धस्य पादद्वयस्य

ननु पर्यायपूर्व्वार्द्धमात्रस्य अभ्यासः पुनरावृत्तिः समुद्गः समुद्ग-संज्ञः स्यात्, समुद्गः संपुटकः स च यथा भागद्वयात्मकस्तथायं पादद्वयात्मक इति समुद्गसंज्ञा, अस्य भेदास्त्रयो मता इति तथाहि प्रथमतृतीयौ द्वितीयचतुर्थौ च पादौ तुल्याविति एकः प्रकारः, प्रथमद्वितीयौ तृतीयचतुर्थौ च पादौ तुल्यावित्यपरः, प्रथमचतुर्थौ द्वितीयतृतीयौ च पादौ तुल्यावित्यन्य इति त्रयो भेदाः, एतत्क्रमेणैवोदाहरणानि दर्शयिष्यन्ते। एवञ्च समुद्गेऽभ्यासद्वयात् यमकद्वयं, वक्ष्यमाणसकृत्पादाभ्यासे तु एक एवाभ्यास इत्येकमेव यमकमिति बोध्यं। पादाभ्यास इति एकैकपादस्याभ्यास इत्यर्थः, अनेकात्मेति पादस्य सकृद्द्विस्त्रिरावृत्तित्वेनैकादशविध इत्यर्थः, तथाहि प्रथमो द्वितीये, प्रथमस्तृतीये, प्रथमश्चतुर्थे, इति त्रयः। द्वितीयस्तृतीये, द्वितीयश्चतुर्थे, इति द्वौ, तृतीयश्चतुर्थे इत्येकः। प्रथमो द्वितीये तृतीये च, प्रथमो द्वितीये चतुर्थे च, प्रथमस्तृतीये चतुर्थे च, द्वितीयस्तृतीये चतुर्थे चेति चत्वारः। प्रथमो द्वितीये तृतीये चतुर्थे चेत्येकः, इति मिलित्वा एकादशविधः, सोऽयं पादाभ्यासः निदर्शनेर्व्यज्यते समुद्गोदाहरणत्रयानन्तरमेव दर्शयिष्यमाणैरुदाहरणैः सूच्यते, वर्त्तमानसामीप्ये लट्॥ ५३॥

नास्थेयःसत्वया वर्ज्यः परमायतमानया।
नास्थेयः स त्वया वर्ज्यः परमायतमानया॥ ५५॥

समुद्गस्य भेदत्रयं क्रमेणोदाहरति। नास्थेयःसत्वयेति। मा-

निर्गी प्रति सख्या उपदेशोक्तिरियं । परमायतोऽतिदीर्घो मानः कोपो यस्याः सा तथा तादृश्यापि अस्थेयोऽस्थिरतरं सत्वं स्वभावो व्यवसायो वा यस्याः सा तथा तादृश्या त्वया स मा पुरुषः प्रेयान् न वर्ज्यः न त्याज्यः, परन्तु आयतमानया सम्यक् यत्नं कुर्वत्या सत्या आस्थेयः आदरणीयः, तथा आवर्ज्यः प्रणयप्रकाशनेन स्वप्रवणीकर्त्तव्यस्त्वित्यन्वयः । अस्थेयःसत्वयेति तव स्वभावो व्यवसायो वा न स्थिरतरः अतः प्रेयांसं परित्यज्य पश्चात्तापं प्राप्स्यसि तदयमपरित्यज्यानुकम्प्यतामिति भावः ॥ ॥ ५४ ॥

नरा जिता माननया समेत्य
न राजिता माननयासमेत्य।
विनाशिता वै भवताऽयनेन
विनाऽशिता वैभवतायनेन ॥ ५५ ॥

नरा इति । कश्चित् समरविजयिनं राजानं स्तौति । माननया साधुवादादिकृतपूजया समेत्य सङ्गतेन सता भवता अयनेन गमनेन युद्धयात्रयेत्यर्थः, जिताः पराभूता नरा रिपवः मानः सम्मानः नयोनीतिश्च तयोरासं क्षेपं परित्यागमित्यर्थः 'असु क्षेपे इत्यस्य भावघञि रूपम्' एत्य प्राप्य न राजिताः न शोभिताः, भवता विजितानां कथञ्चित्तृणकवलनादिना रक्षितजीवितानां रिपूणां माननयशून्यतया दुरवस्था जातेत्यर्थः, ये तु साहसिकाः न च नयास्तेषामवस्थामाह । विनाशिता वै इति

भवता विभाशिता वै हतास्तु 'वै इति स्फुटे' विना यीभादि-पक्षिणा श्रशिता भक्षिताः। किम्भूतेन भवता वैभवतायनेन रिपुजयादिभिर्विभुत्वविस्तारकेण 'तायृ पालनविस्तारयोरि-त्यस्य नन्द्यादित्वात् ल्युः'॥ ५५॥

कलापिनां चारुतयोपयान्ति
वृन्दानि लापोढघनागमानाम्।
वृन्दानिलापोढघनागमानां
कलापिनां चारुतयोऽपयान्ति॥ ५६॥

कलापिनामिति। वर्षावर्णनमिदं। कलापिनां मयूराणां वृन्दानि समूहाः चारुतया वर्षाकालजनितशोभया सह उप-यान्ति सङ्गच्छन्ते, किम्भूतानां लापः केकाध्वनिः स ऊढः प्राप्तो यस्मात् तादृशो घनानां मेघानामागमो येषां ते तथा तेषाम् 'अन्यादित्वात् लापस्य प्राग्भावः। लापेनोढः सूचितो घनागमो यैरिति केचित्। तथा कलं मधुरास्फुटध्वनिमाप्नु-वन्ति के जले लपन्तीति वा कलापिनो हंसाः तेषाञ्च चारु-तयः उत्तमरुतानि अपयान्ति अपगच्छन्ति वर्षासु हंसानां निर्मदत्वादिति भावः। किम्भूतानां घनं नृत्यविशेषः 'घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोरिति मेदिनी। तद्युक्त आगम आगमनं घनागमः सविलासागमनमित्यर्थः, वृन्दानिलेन वार्षिकसंघातवातेनापोढोऽपास्तो घनागमो येषां ते तथा तेषाम्। एवं समुद्गयमकस्य यथा भेदा उदाहृताः॥ ५६॥

न मन्दयावर्ज्जितमानसात्मया
नमन्दयावर्ज्जितमानसात्मया।
उरस्युपास्तीर्णपयोधरद्वयं
मया समालिङ्ग्यत जीवितेश्वरः ॥ ५७ ॥

अथानेकविधं पादाभ्यासं क्रमेणोदाहरन् प्रथमं प्रथम-द्वितीयपादगतमुदाहरति। नेति। नायकोपेक्षया गलित-मानाया मानिन्याः पश्चात्तापवर्णनमिदं। मन्दया मूढया मया नमन् प्रणामं कुर्व्वन्नपि जीवितेश्वरः प्राणनाथः उरसि तदीयवक्षसि उपास्तीर्णमासञ्जितं पयोधरद्वयं स्तनद्वयं यत्र तद्यथा तथा न समालिङ्ग्यत नाश्लिष्टः, किम्भूतया यतोऽव-र्ज्जितऽपरित्यक्ते माने सात्मया सयत्नया यत्नेन मानं रक्ष-न्त्येत्यर्थः, यद्वा आवर्ज्जिते अनुकूलतया गृहीते माने सात्मया सयत्नया। तथा दयावर्ज्जितौ प्रियस्य कातरतां दृष्ट्वापि करु-णाशून्यौ मानसम् आत्मा च तौ यस्याः सा तथा तया. 'उभयत्र युष्मानस्य बहुव्रीहेरित्यनेन' डाप्रत्ययः। सात्मये-त्यत्र सार्थयेति क्वचित्पाठः तत्रैकत्र अत्यक्तमानसमूढया, अपरत्र दयाशून्यमानसप्रयोजनयेत्यर्थः ॥ ५७ ॥

सभा सुराणामबला विभूषिता
गुणैस्तवारोहि मृणालनिर्म्मलैः।
स भासुराणामबला विभूषिता
विहारयन्निविश सम्पदः पुराम् ॥ ५८ ॥

प्रथमतृतीयपादगतमुदाहरति। सभेति। राजानं प्रति कस्यचिच्चाटुकारस्योक्तिरियं। हे राजन् मृणालनिर्म्मलैः मृणालवदतिपरिशुद्धैस्तव गुणैर्धैर्य्यगाम्भीर्य्यादिभिः सुराणां देवानां सभा आरोहि आरूढा, देवसभा तव गुणान् गायतीत्यर्थः, किम्भूता सभा यतोऽवला वलनामकदैत्यरहिता इन्द्रेण वलदैत्यस्य विनाशितत्वादधुना निर्भया सती त्वद्गुणान् गायतीत्यर्थः, तथा त्रिभोर्ब्रह्मणो विष्णोः शङ्करस्य वा उषितं वासोयत्र सा, विभोरिन्द्रस्येति केचित्। स तादृशस्त्वं विभूषिता अलङ्कृता अवला नारीर्विहारयन् रमयन् सन् भासुराणां देदीप्यमानानां पुरां नगरीणां सम्पदः सम्पत्तीर्निर्विश उपभुङ्क्ष्व॥ ५८॥

कलङ्कमुक्तं तनुमध्यनामिका
स्तनद्वयी च त्वदृते न हन्त्यतः।
न याति भूतं गणने भवन्मुखे
कलङ्कमुक्तं तनुमध्यनामिका॥ ५९॥

प्रथमचतुर्थपादगतमुदाहरति। कलमिति। कस्यचित् संयमिनः स्तुतिरियं। कलं मधुरास्फुटम् उक्तं रमणीनां वचनं, तथा तनोः शरीरस्य मध्यं मध्यभागं नमयतीति तनुमध्यनामिका पृथुतरेत्यर्थः स्तनद्वयी च त्वदृते त्वां विना कं पुरुषं न हन्ति न व्यथयति अपि तु त्वां विहाय सर्व्वमेव व्यथयतीत्यर्थः रमण्यस्त्वां मधुरालापादिभिर्न मोहयितुं शक्नुवन्तीत्यतिजितेन्द्रियो-

ऽसीति भावः । अत्र मह्योति 'अजादिहलन्तोऽदीर्घादिति पाचिको धकारस्य द्विर्भावः' अतएवोत्तरेण सह साम्यम् । अतः कारणात् 'श्रोति प्रसिद्धौ' भवन्मुखे त्वत्सदृशे विषये गणने जितेन्द्रियगणनायाम् अनामिका गणयितुरङ्गुष्ठाच्चतुर्थी अङ्गुली कलङ्कमुक्तं निर्द्दोषं तनुमत् देहभृत् भूतं कमपि जन्तुं न याति न प्राप्नोति न गण्यं करोतीत्यर्थः 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवम्' इति मेदिनी । अङ्गुलीभिर्गणना हि कनिष्ठादिक्रमेण क्रियते अत्र च जितेन्द्रियगणनायां प्रस्तुतायां कनिष्ठयाङ्गुल्या भवन्तं प्रथमं गणयित्वा अनामिकया भवादृशोऽपरो गणयितव्यः स च नास्त्येवेत्यनामिका न कमपि विषयीकरोतीति त्वत् सदृशः कोऽपि संयमी नास्त्येवेति भावः ॥ ५८ ॥

यशश्च ते दिक्षु रजश्च सैनिका
वितन्वतेऽजोपम ! दंशिता युधा ।
वितन्वतेजोऽपमदं शितायुधा
द्विपाश्च कुर्व्वन्ति कुलं तरस्विनः ॥ ६० ॥

द्वितीयतृतीयपादगतमुदाहरति । यशश्चेति । विजिगीषु नृपस्य प्रशंसनमिदं । हे अजोपम ! अजो रघुराजपुत्रः तत्सदृश ! ते तव सैनिकाः युधा युद्धेन कृत्वा दिक्षु यशश्च तथा रजश्च धूलिञ्च वितन्वते विस्तारयन्ति, तथा द्विषां शत्रूणां कुलञ्च वितनु विगतदेहं तथा अतेजोनिष्प्रतापं तथा अपमदं निर-

हुङ्कारञ्च कुर्व्वन्ति, किम्भूताः दंशिताः कृतसन्नाहाः, तथा शितायुधाः शितानि तीक्ष्णानि आयुधानि येषां ते, तथा तरस्विनो वेगवन्तः ॥ ६० ॥

विभर्त्ति भूमेर्वलयं भुजेन ते
भुजङ्गमोऽमा स्मरतो मदञ्चितम् ।
शृणूक्तमेकं स्वमवेत्य भूधरं ।
भुजङ्गमो मा स्म रतो मदञ्चितम् ॥ ६१ ॥

द्वितीयचतुर्थपादविषयमुदाहरति । विभर्त्तीति । राज्ञः स्तुतिरियं । हे राजन् ते तव भुजेन अमा सह भुजङ्गमोऽनन्तो भूमेर्वलयं मण्डलं विभर्त्ति धारयति, अनन्तदेववत्तव भुजोऽपि भूभारं वहति अनेन च गर्व्वो न कर्त्तव्य इत्याह स्मरतोविशेषं जानतो मत् मत्तः मत्प्रकाशात् अञ्चितं सर्व्वजनपूजितमेकमुक्तं वचनं शृणु, किं तदित्याह स्वं स्वीयं भुजं भूधरं भूमिधारकम् अवेत्य ज्ञात्वा रतः प्रीतः सन् चितमुपचितमत्यधिकमित्यर्थः मदं गर्व्वं मास्म गमः न प्राप्नुहीति ॥ ६१ ॥

स्मरानलोमानविवर्द्धितो यः
स निर्वृतिन्ते किमपाकरोति ।
समन्ततस्तामरसेक्षणे ! न
समन्ततस्तामरसे ! क्षणेन ॥ ६२ ॥

तृतीयचतुर्थपादविषयमुदाहरति । स्मरानल इति । मानिनीं प्रति सख्या उक्तिरियम् । हे तामरसेक्षणे पद्मनयने तया

अरसे अविदग्धे ते तव यः स्मरानलः कामरूपाग्निः मानेन विवर्द्धितो वृद्धिं गमितः सः ततो विसृतः सन् क्षणेनोत्सवेन समं सह समन्ततः सर्व्वतोभावेन तां मानप्रागनुभूयमानां निर्वृतिं सुखं किं न अपाकरोति निराकरोति अपितु अपाकरोत्येव, माने जाते तवेदृशी कामानलज्वाला यया सुखोत्सवादिकं सर्व्वं निवारितं तथापि तं दुर्मानं न मुञ्चसि अहो धन्या ते यद्दिलतेति भावः ॥ ६२ ॥

प्रभावतो नामन वासवस्य
प्रभावतो नाम नवासवस्य ।
प्रभावतोऽनाम न वा सवस्य
विच्छित्तिरासीत्त्वयि विष्टपस्य ॥ ६३ ॥

अथ पादत्रयाभ्यासे उदाहर्त्तव्ये प्रथमं प्रथमद्वितीयतृतीयपादविषयमुदाहरति । प्रभावत इति । अत्र पदच्छेदः प्रभावतः, नामन, वासवस्य, इति प्रथमे । प्रभावतः, ..म, नवासवस्य, इति द्वितीये । प्रभौ, अतः, अनाम, न, वा, सवस्य, इति तृतीये । श्रीकृष्णस्य स्तुतिरियं । हे प्रभावतः स्वप्रभावात् प्रभावतः श्रीमतो वासवस्येन्द्रस्यापि नामन ! नामयति नम्रीकरोतीति नामनः तत्सम्बोधनं, मखभङ्गपारिजातहरणादिना इन्द्रस्यापि गर्व्वनिवारकेत्यर्थः, नामेति प्राकाम्ये, तथा हे अनाम ! नास्ति आमो रोगो यस्य यस्माद्वा स तथा तत्सम्बोधनं, त्वयि विष्टपस्य भुवनस्य प्रभौ स्वामिनि सति

दुर्दान्तदमनादिना भुवनं पालयति सतीत्यर्थः अतोऽस्मात् कर्म्मणः कंसनरकशाल्वादिदमनादित्यर्थः नवासवस्य नवीनायाः सुरायाः सवस्य वा यज्ञस्य च विच्छित्तिर्विच्छेदो नासीत् भोगिनां सुरापानादिविषयभोगो धार्म्मिकाणां यज्ञादि धर्म्म-कर्म्मानुष्ठानञ्च निर्ब्बाधं प्रवृत्ते इत्यर्थः ॥ ६३ ॥

परम्परायाबलवारणानां
परम्परायाबलवारणानाम् ।
धूलीः स्थलीर्व्योम विधाय रुन्धन्
परम्परायाऽबलवारणानाम् ॥ ६४ ॥

प्रथमद्वितीयचतुर्थपादविषयमुदाहरति । परमिति । राज्ञः स्तुतिरियम् । पदच्छेदो यथा । परं, परायाः, बलवाः, रणानाम्, इति प्रथमे । परम्परायाः, बलवारणानाम्, इति द्वितीये । परं, पराय, अबलवारणानाम्, इति चतुर्थे । हे पराय ! पर उत्कृष्टोऽयः शुभविधिर्यस्य स तथा तत्सम्बोधनं, त्वं रणानां संग्रामाणां परम्परायाः समूहस्य स्थलीः धूलीर्विधाय रेणुमयीः कृत्वा व्योम आकाशं रुन्धन् धूलिभिरेवाच्छादयन् सन्, एतेन रथाश्वादिसेनाक्रान्तं बाहुल्यं ध्वनितं । परं श्रेष्ठं प्रबलमित्यर्थः, परं शत्रुं परायाः गतवानसि 'परापूर्व्वयाधातोर्लङ्सुङि-रूपं । त्वं किम्भूतः बलवाः बलेन सामर्थ्येन परबलानि वा वारयतीति सः 'वारयतेः क्विपि रूपं । रणानां किम्भूतानां

बला बलवन्तो वारणा हस्तिनो यत्र ते तथा तेषां, तथा अबल-वारणानाम् अबलान् दुर्ब्बलान् वारयन्तीति ते तथा तेषाम्॥ अनन्तरं प्रथमतृतीयचतुर्थपादाभ्यामोदाहरणं भवितुमर्हति तत्तु कस्मिन्नपि पुस्तके न दृश्यते पादत्रयाभ्यासस्यैकैकपाद-त्यागेन चातुर्विध्यस्यौचित्यात्, तस्मादतिपूर्व्वमेव लिपिकरप्रमा-दादिनष्टमिति सम्भाव्यते, पुस्तकान्तरे तु एतत्पद्यस्य धूर्त्तो: स्वलीर्व्योम विधाय रुन्धन्निति द्वितीयपादो दृश्यते तदा प्रथम-द्वितीयचतुर्थपादाभ्यामोदाहरणं विलुप्तमिति यथा तथा भवतु पतितमेकमुदाहरणं स्वयं ज्ञातव्यम्॥ ६४ ॥

न श्रद्दधे वाचमलज्ज ! मिथ्या
भवद्विधानामसमाहितानाम्।
भवद्विधानामसमाहितानां
भवद्विधानामसमाहितानाम्॥ ६५ ॥

द्वितीयादिपादत्रयाभ्यासमुदाहरति। नेति। शठं नायकं प्रति नायिकाया उक्तिरियं। हे अलज्ज भवद्विधानां त्वादृ-शानां प्रतारकाणाम् 'अयं चतुर्थपादादिगतभवद्विधाना'मित्य-स्यार्थः। वाचं न श्रद्दधे न प्रत्येमि, वाचं किम्भूतां यतो मि-थ्याभवत् असत्यं भवत् विधीयते यदिति विधानं प्रतिपाद्यं यस्याः सा तथा तां, तथा असमोऽसरलः कुण्डलीभूत इत्यर्थः योऽहिः सर्पस्तस्येव तानो विस्तारो यस्याः सा तथा ताम् अतिवक्रामित्यर्थः, तथा भवे उत्पत्तौ श्रवणसमकाल एवेत्यर्थः,

द्वे धाने अर्थपोषणे यस्याः सा तथा तां श्रवणमात्रेणैवार्थद्वय-बोधिकामित्यर्थः। भवद्विधानां किम्भूतानाम् असमाहिता-नामनवहितानां, तथा असमा अनुपमा अधिका इत्यर्थः, अहिताः शत्रवो येषां ते तथा तेषाम् ॥ ६५ ॥

सन्नाहितोमानमराजसेन!
सन्नाहितोऽमानस! राजसे न।
सन्नाहितो मानस! राजसेन
सन्ना हितोऽमानमराजसेन! ॥ ६६ ॥

इत्थं पादत्रयविषयं द्विरभ्यासमुदाहृत्य सम्प्रति पादचतु-ष्टयविषयं त्रिरभ्यासमुदाहरति। सन्निति। कश्चित् शैवं रा-जानं प्रति कस्यचित् स्तुतिरियम्। अत्र पदच्छेदः। सन्, आहितोमानमराजसेन, इति प्रथमे। सन्नाहितः, अमानस, राजसे, न, इति द्वितीये। सन्नाहितः, मानस, राजसेन, इति तृतीये। सन्ना, हितः, अमानमराजसेन, इति चतुर्थे। तद-यमन्वयः, हे सन्! साधो!, तथा हे आहितोमानमराजसेन! न नमन्ति परं नम्यन्त इत्यनमा ब्राह्मणाः तेषां राजा चन्द्रः अनमराजः, उमा पार्व्वती च अनमराजश्च उमानमराजौ आहितौ स्वाङ्गे स्थापितौ उमानमराजौ येन स आहितो-मानमराजः शिवः तेन सेनः इनेन ईश्वरेण सह वर्त्तमानः तत्सम्बोधनं शिवपरायणेत्यर्थः, तथा हे अमानस! अमाना अपरिमिता सा सम्पत्तिर्यस्य स तथा तत्सम्बोधनं, त्वं सन्नाहितः

कृतसन्नाहः सन् युद्धयात्रां कुर्व्वन्नित्यर्थः, न राजसे शोभसे, कथमित्याह हे राजसेन रजोगुणजेन लोभादिना मानस ! सा नम्यते नायत्तीक्रियत इति स तथा तत्सम्बोधनं लोभाद्य-वशीकृतेत्यर्थः, यतस्त्वं सन्नाहितः सन्नाः पूर्व्वमेवावसादं गता अहिताः शत्रवो यस्य सः, तथा हे असमानसराजसेन ! मानः पूजा सा लक्ष्मीश्च मानसे न विद्येते मानसे यस्याः सा असमा-नसा तादृशी राजसेना प्रतिपक्षनृपसैन्यं यस्य स तथा तत्स-म्बोधनं, त्वं सन्ना सत्पुरुषः अतएव हितः सर्व्वेषां हितकारी तव शैवलादिना परपीडाकरो युद्धोद्यमो न युक्त इति भावः॥ ॥ ६६ ॥

सकृद्द्विस्त्रिश्च योऽभ्यासः पादस्यैवं प्रदर्शितः ।
श्लोकद्वयन्तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ॥ ६७ ॥

अथ पादाभ्यासमुपसंहरन् श्लोकाभ्यासमाह । सकृदिति । पादस्य यः सकृदेकवारः, द्विर्द्विवारः, त्रिस्त्रिवारोऽभ्यासः पु-रावृत्तिः स एवं पूर्व्वोपन्यस्तैरुदाहरणैः प्रदर्शित इत्यन्वयः, अत्र स इत्यध्याहार्य्यं, तत्र सकृदभ्यासः पादद्वयविषयः, द्वि-रभ्यासः पादत्रयविषयः, त्रिरभ्यासः पादचतुष्टयविषयः । श्लोकद्वयन्त्विति युक्तार्थं सम्बद्धार्थम् एकवाक्यतया एकविशेष्य-कान्वयबोधकमित्यर्थः, श्लोकद्वयं समानानुपूर्व्विकसमानवर्ण-घटितपद्यद्वयं श्लोकाभ्यासः श्लोकाभ्यासाख्ययमकवदित्यन्वयः । अत्र श्लोकद्वयं श्लोकद्वयमेवेत्यर्थः, तेन द्विस्त्रिरभ्यासात्मकमिदं न भवति केनाप्यनुक्तत्वादिति बोध्यम् ॥ ६७ ॥

विनायकेन भवता वृत्तोपचितबाहुना ।
स्वमित्रोद्धारिणाऽभीता पृथ्वीयमतुलाश्रिना ॥ ६८ ॥
विनायकेन भवता वृत्तोपचितबाहुना ।
स्वमित्रोद्धाऽरिणाऽभीता पृथ्वी यमतुलाश्रिना ॥ ६९ ॥

विनायकेनेति । राज्ञः स्तुतिरियं । हे राजन् भवता हेतुना इयं पृथ्वी पृथिवी अभीता दुर्ज्जनेभ्यो भयशून्या जाता, भवता किम्भूतेन यतो विनायकेन दुर्ज्जनानां विनेत्रा दुर्ज्जनान् दण्डयतेत्यर्थः, तथा वृत्तौ वर्त्तुलौ उपचितौ स्थूलौ च बाहू यस्य स तथा तेन, तथा स्वमित्रान् सुहृद्रिपून् प्रबलान् रिपूनित्यर्थः, उद्धर्त्तुं विनाशयितुं शीलं यस्य स तथा तेन, तथा अतुलाश्रिना केनापि सादृश्यं न भजता 'श्रिञ् सेवायामित्यस्य क्विप् ततस्तृतीयैकवचनम् । इति प्रथमश्लोकस्यार्थः ॥ ६८ ॥

द्वितीयस्य यथा । अभीता युद्धार्थं त्वामभ्यागच्छता 'अभिपूर्व्वादिण्गतावित्यस्मात् क्विप् ततस्तृतीयैकवचनम् । अरिणा तव शत्रुणा विनायकेन नायकरहितेन भवता सता पृथ्वी महती यमस्य कृतान्तस्य तुला मानयन्त्रं 'गौणप्रयोगोऽयं' विचारस्थलीत्यर्थः, मानयन्त्रे यथा न्यूनाधिकत्वनिश्चयस्तथा यमस्य विचारस्थल्यां पापपुण्यनिश्चय इति गौणता, आश्रिता प्राप्ता मृतमित्यर्थः, किम्भूतेन वृत्तौ जातौ उपचितौ चितां श्मशानमुपगतौ बाहू यस्य स तथा तेन 'उपचितेति चितामुपगता-

विति 'द्वितीययाश्रयाढेः क्तान्ताद्वाविति तत्पुरुषः, तथा स्वानि धनानि मित्राणि बन्धूंश्च उज्झाति परित्यजतीति स्वमित्रोज्झाः तेन स्वमित्रोज्झा 'उत्पूर्व्वात् उज्झ त्यागे इत्यस्मात् क्विवन्तात् तृतीयैकवचनं धातोराम्रुक् प्रमादचोत्याकारलोपः ॥ ६८ ॥

एकाकारचतुष्पादं तन्महायमकाह्वयम्।
तत्रापि दृश्यतेऽभ्यासः सा परा यमकक्रिया ॥ ७० ॥

अथ पादचतुष्टयगोचरस्य त्रिरभ्यासस्य प्रतिपादमवान्तराभ्यासे विच्छित्त्यन्तरमभ्भवान्महायमकमंज्ञामाह। एकाकारेति। महायमकमंज्ञाकरणे हेतुमाह। तत्रापीति। तत्रापि पादमध्येऽपि अभ्यासः पादखण्डस्य पुनरावृत्तिर्दृश्यते तस्मात् इयं परा उत्कृष्टा यमकक्रिया यमनविधिस्तत इदं महायमकाह्वयमित्यन्वयः, तत्रापीत्यत्र तस्यापीति पाठो न सम्यक्। पादचतुष्टयाभ्यासे यत्र पादखण्डस्याप्यभ्यासस्तन्म..यमकमित्यर्थः, इदञ्च सकृदावृत्तौ द्विरावृत्तौ च सम्भवति किन्तु न केनापि गणितमित्युपेक्षितं ग्रन्थकृता ॥ ७० ॥

समानयासमानया समानयासमानया।
समानया समानया समानया समानया ॥ ७१ ॥

महायमकमुदाहरति। समानयासेति। सखायं प्रति विरहिण उक्तिरियं, पदच्छेदो यथा, समानयास, मा, अनया,

इति प्रथमे । समानय, असमानया, इति द्वितीये । समानया, समानया, इति तृतीये । समान, या, समानया, इति चतुर्थे । हे समानयाम ! समानो यामो यत्नो यस्य स तथा तत्सम्बोधनं सर्व्वकार्य्येषु तुल्यप्रयत्नेत्यर्थः, मा माम् अनया नायिकया सह समानय सङ्गमय, किम्भूतया यतोऽसमानया अनुपमया, तथा समानया मानः कोपस्तत्सहितया मानिन्येत्यर्थः, तथापि समानया मानः पूजा तत्सहितया माननीयेत्यर्थः, एतदपि कथमित्याह हे समान ! मम आनः प्राणो यस्य स तथा तत्सम्बोधनम् एकप्राणेत्यर्थः, या नायिका समानया मा लक्ष्मीर्नयो नीतिश्च ताभ्यां सह वर्त्तमाना यतः सा लक्ष्मीमती नीतिमती च अतस्तस्या मानेन बलवद्दुःखितोऽस्मि तत्त्वरितं मानमपसारयन्ननया सह मां सङ्गमयेत्यर्थः । अत्र पादानां खण्डद्वयेऽत्रान्तरयमनम्, एवं त्रिखण्डादौ चेदं भवितुमर्हतीति बोध्यं । प्रमाणिकावृत्तम ॥ ७१ ॥

धराधराकारधरा धराभुजां
भुजा महीं पातुमहीनविक्रमाः ।
क्रमात् सहन्ते सहसा हतारयो
रयोद्धुरा मानधुरावलम्बिनः ॥ ७२ ॥

अत्यन्तसहवस्तेषां भेदाः समेदयोमय इत्यनेन प्रतिपादिताः सजातीयसंमिश्रणजनितभेदा उदाहृताः संप्रति विजातीयसंमिश्रणजनितान्यपि भेदान्तराणि सम्भवितुमर्हन्तीति

प्रतिपादयन् दिङ्मात्रमुदाहरति। धरेति। धराभुजां राज्ञां भुजा बाहवः क्रमात् महीं पृथिवीं पातुं रक्षितुं सहन्ते समर्था भवन्ति, किम्भूताः धरां पृथिवीं धरतीति धराधरो-ऽनन्तनागस्तस्याकारं धरन्तीति धराधराकारधराः दीर्घा इत्यर्थः, तथा अहीनोऽपरिच्युतो विक्रमो येषां ते, यद्वा अहीनां नागानामिनस्य प्रभोरनन्तस्येव विक्रमो येषां ते आकारतो विक्रमतश्चानन्तसदृशा इति विशेषणद्वयेन ज्ञापितं, तथा सहसा बलेनैव हता अरयो यैस्ते, तथा रयेण वेगेनोद्धुरा उद्भटाः, तथा मानधुरं मानस्य भारमवलम्बन्त इति मान-धुरावलम्बिनः सम्मानरक्षका इत्यर्थः। अत्र प्रथमपादे अव्यपेत-मादिमध्ययमकं पादचतुष्टयमध्ये चाव्यपेतमन्तादियमकं मन्तांशयमकञ्च, द्वितीयपादे च वर्णद्वयव्यवहितं महीमहीति मध्ययमकं, तृतीयपादे च सहसहेत्येकवर्णव्यवहितं तदेव। चतुर्थपादे च पुनर्वर्णद्वयव्यवहितं तदेवेति बहूनां विजातीय-यमकानामत्र सम्भेदः। अयञ्च श्लोकोऽसङ्गत इति कृत्वा ..व-राजादिभिरुपेक्षितः,अस्माभिस्तु बहुषु प्रामाणिकपुस्तकेषु दृश्यत इत्यनुपेक्ष्य यथाकथञ्चित् समर्थितो व्याख्यातश्च॥ ७१॥

आवृत्तिः प्रातिलोम्येन पादार्द्धश्लोकगोचरा।
यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम्॥ ७२॥

इत्थमनुलोमाभ्यामेव यमकभेदा दर्शिताः, संप्रति प्रति-लोमाभ्यामेव तत्प्रकारान् दर्शयति। आवृत्तिरिति। पादः,

अर्द्धं श्लोकस्य, एते गोचरा विषया यस्मात्तादृशो 'अत्रार्द्धपदं श्लोकार्द्धपरं' प्रातिलोम्येन विलोमेनावृत्तिः प्रतिलोमत्वात् विलोमावृत्तिरूपत्वात् प्रतिलोमं प्रतिलोमनामकं यमकं स्मृतमित्यन्वयः, पादगतं श्लोकार्द्धगतं श्लोकगतञ्चेत्यस्य त्रयो भेदा इत्यर्थः, अयमर्थः यत्र पूर्व्वपादस्य प्रतिलोमेनावृत्त्या उत्तरपादः उत्तरपादस्यापि तथैवावृत्त्या पूर्व्वपादः तत्पाद-गोचरं, यत्र च पूर्व्वार्द्धस्य प्रतिलोमेनावृत्त्या उत्तरार्द्धं उत्त-रार्द्धस्य च तथावृत्त्या पूर्व्वार्द्धं तदर्द्धगोचरं, यत्र च संपूर्ण-पूर्व्वश्लोकस्य प्रतिलोमेनावृत्त्या श्लोकान्तरं तस्य च तथावृत्त्या पूर्व्वश्लोकः तत् श्लोकगोचरमिति ॥ ७३ ॥

या मताश ! कृतायासा सायाता कृशता मया ।
रमणारकता तेऽस्तु स्तुतेताकरणामर ! ॥ ७४ ॥

तान् क्रमेणोदाहरति । येति । मानिन्या नायकं प्रत्युक्ति-रियं । हे मताश ! मता ज्ञाता आशा परकान्ताविषयिणी इच्छा यस्य स तथा तत्सम्बोधनं, या कृशता चीणत्वं कृता-यासा कृता जनितः आयासः क्लेशो यया सा, मया सा कृशता आयाता प्राप्ता, तव दुश्चेष्टितचिन्तनया पूर्व्वमेव मे कृशता जाता संप्रति त्वां परित्यजन्त्याः काधिका सा भविष्यतीत्यर्थः। हे स्तुतेत ! स्तुतं स्तवमितं प्राप्त ! स्तुतं प्रशस्तमितं गमनं यस्य स तथा तत्सम्बोधनमिति वा, तथा हे अकरणामर ! अकरणे निन्दितक्रियायां देवतुल्य ! देववन्निषिद्धकार्य्यमनाचरन्नित्यर्थः।

हे रमण ! अस्माकं प्रीतिकर ! । 'सर्व्वाण्येतानि सम्बोधनपदानि सोलुण्ठनानि प्रकृतानुपयोगादिति बोध्यं। ते तव आरकता इयर्त्ति गच्छतीति आरको गन्ता तस्य भावोऽस्तु भवतु इतस्तव गमनं भवतु त्वमितः परकामिनीसविधमेव गच्छेत्यर्थः । अत्र प्रथमपादस्य प्रतिलोमेनावृत्त्या द्वितीयपादः, द्वितीयपादस्य च तथावृत्त्या प्रथमपादः, एवं तृतीयचतुर्थयोरपि, तेनात्र पादविषयं प्रतिलोमत्वम् ॥ ७४ ॥

नादिनो मदनाधी स्वा न मे काचन कामिता ।
तामिका न च कामेन स्वाधीनादमनोदिना ॥ ७५ ॥

श्लोकार्द्धविषयं प्रतिलोममुदाहरति । नादिन इति । कस्यचिद्योगिन उक्तिरियं। नादिनो नादविशिष्टस्य नादब्रह्मानुभवत इत्यर्थः मे मम मदनाधी मदनः कामस्य आधिस्तज्जनितमानसव्यथा च तौ, तथा स्वा स्वकीया काचन कापि कामिता विषयाभिलाषश्च न, नादसुखहृष्टस्य मम ... मः कामजनितमानसपीडा स्वार्थे विषयाभिलाषश्चेति न मन्तोत्यर्थः, स्वेत्यनेन परार्थे कामिता तु विद्यत एवेति सूचितम्। अतएव दमनोदिना दमो वहिरिन्द्रियसंयमः तं नोदितुं निरसितुं शीलमस्य स तथा तेन कामेन हेतुना स्वमात्मा अधीनमायत्तं यस्यास्तादृशी अजितेन्द्रियाणामात्मानं व्याकुलयन्तीत्यर्थः, तामिका च ग्लानिरपि न, मम नास्तीत्यर्थः। योगिनां नादोत्पत्तिश्च प्राणायामकृता। तदुक्तं सुरेश्वराचा-

र्थेण 'सरेचपूरैरनिलस्य कुम्भैः सर्व्वासु नाडीषु विशोधितासु। अनाहतादम्बुरुहादुदेति स्वात्मावगम्यः स्वयमेव नादः' इति। केचित्तु धीरिति सविसर्गपाठं धृत्वा मम धीरमदनेति व्याचक्षते तन्न रुचिरं प्रतिलोमाभ्यासे विसर्गस्य सम्बन्धासम्भवादिति ध्येयम्॥ ७५॥

यानमानय माराविकशोनानजनासना।
यामुदारशताधीनामायामायमनादि सा॥ ७६॥
सा दिनामयमायामा नाधीना शरदाऽमुया।
नासनाजनना शोकविरामायनमानया॥ ७७॥

॥ यमकचक्रम्॥

समस्तश्लोकगोचरं प्रतिलोममुदाहरति। यानमिति। वेश्यासक्तस्य सखायं प्रत्युक्तिरियं। हे सखे त्वं यानमश्वाद्यन्यतमं वाहनमानय, किमर्थमित्याह अहं याम् उदारशताधीनाम् उदाराणां दातॄणां शतमधीनं यस्याः सा उदारशतस्याधीनेति वा तां वेश्यामित्यर्थः, आयां पूर्व्वं गतवान् सा आयमागमनम् अनादि मया उक्ता अद्य तव समीपमागमिष्यामीति कथितेत्यर्थः। नद अव्यक्तशब्दे इत्यस्य कर्म्मणि लुङि रूपं कथनार्थकत्वविवक्षयात्र सकर्म्मकता ततएव द्विकर्म्मकत्वात् सेत्यस्य गौणकर्म्मण उक्तत्वं। तस्माद्गमनस्यावश्यकतया यानस्य प्रयोजनमिति तदानयेति हेतुहेतुमद्भावेनान्वयः। सा किम्भूता मारः काम एव अविर्मेषस्तस्य कशा ताडनी कामिनां कामज्वालानिवा-

रिकेत्यर्थः, तथा ऊना धनहीनाः सन्तोऽनन्ति जीवन्तीति ऊनानास्तद्रूपा ये जनास्तान् अस्यति क्षिपतीति ऊनानजनासना निर्द्धनजनानाङ्गीकुर्व्वतीत्यर्थः ॥ ७६ ॥

श्लोकस्यास्य प्रतिलोमनावृत्तौ श्लोकान्तरं, तद्दर्शयति । सेति । वेश्यापीयं मयि दृढानुरागा संप्रति मामप्राप्य नितरां व्याकुला भवति तत्त्वरितमेव तत्र गन्तव्यमित्याह । सा वेश्या अमुया शरदा अत्युद्दीपकेनानेन शरत्कालेन आधीता आधिं मानसव्यथामिता प्राप्ता सती शोकविरामा न शोकस्य विरहदुःखस्य विरामो यस्याः सा न भवति निरन्तरं विरहदुःखमनुभवतीत्यर्थः, शोकविरामेत्यस्य द्वितीयपादादिस्थितेन नेत्यनेनान्वयः । सा कीदृशी दिनामयमायामा दिने दिवसे आमयस्य रोगस्य मायां व्याजमसति गच्छतीति सा दिवसे सखीसमचं रोगमपदिश्य विरहदुःखं गोपयन्तीत्यर्थः, तथा नासनाजनना नास्ति आसनाया उपवेशनस्य स्थिरत्वस्येत्यर्थः जननमनुष्ठानं यस्याः सा सततमस्थिरेत्यर्थः, अत्र नैकः ( इत्यादिवच्चिपदवङ्गश्रीहावुत्तरपदपरत्वाभावान्नञोऽत्वाभावः । तथा अयनं मद्गमनवर्त्म तस्य मानं ज्ञानं दर्शनमित्यर्थः, याति प्राप्नोतीत्ययनमानया केवलं मद्गमनमार्गं निरीक्षमाणेत्यर्थः । इत्थं विशेषणैरस्या अनुरागः सूचितः । अर्थलिप्सुरपि वेश्या काप्यनुरक्ता भवति यथा मृच्छकटिकादौ वसन्तसेनादिः । अतएवोक्तम् 'एषापि मदनायत्ता कापि सत्यानुरागिणीति ॥ ७७ ॥

वर्णानामेकरूपत्वं यत्त्वेकान्तरमर्द्धयोः।
गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो यथा॥ ७८॥

दुष्करयमकनिरूपणप्रसङ्गेन दुष्करांश्चित्रालङ्कारानपि कांश्चिन्निरूपयन् प्रथमं गोमूत्रिकां लक्षयति। वर्णानामिति। तु इत्यलङ्कारान्तरलक्षणापनाय। अर्द्धयोः ऊर्द्धाधःक्रमेण पङ्क्तिद्वयेन लिखितयोः श्लोकस्य पूर्व्वार्द्धोत्तरार्द्धयोर्वर्णानामेकान्तरमेकवर्णव्यवहितं यदेकरूपत्वमभिन्नत्वम् अर्द्धद्वयघटकवर्णसंघयोरेकैकाक्षरव्यवधानेन यदेकविधवर्णानामुपन्यास इत्यर्थः, तद्विदश्चित्रालङ्कारज्ञास्तथाविधवर्णविन्यसनं दुष्करं सहसा कर्त्तुमशक्यं गोमूत्रिकेति प्राहुः, चलतो गोर्मूत्रधाराकारत्वेन श्लोकबन्धस्य लिखितत्वाद्गोमूत्रिकासंज्ञं चित्रालङ्कारं वदन्तीत्यन्वयः। दुष्करमिति निरूपणीयत्वे हेतुः एतेन ये सुकरा बन्धास्ते सर्व्वेऽत्र नोच्यन्ते ग्रन्थान्तरतो ज्ञातव्या इति सूचितम्। यत्त्वित्यत्र यदीति क्वचित्पाठः तत्र तदेत्यध्याहृत्यान्वयः, तदित्यत्र च क्वचित् तमितिपाठः तमलङ्कारमित्यर्थः। इयञ्चोत्तरार्द्धस्यैकान्तरितवर्णानां तादृशपूर्व्वार्द्धवर्णैरेकरूपत्वादर्द्धगोमूत्रिका, यत्र च प्रथमद्वितीयपादयोस्तादृशवर्णानामेकविधत्वं तृतीयचतुर्थपादयोस्तु तेषामपरविधत्वं तत्र पादगोमूत्रिका यथा 'काङ्क्षन् पुलोमतनयास्तनताडितानि वक्षस्थलोत्थितरयाश्वलपीडितानि। पायादपायभयतो नमुचिप्रहारी मायामपास्य भवतोऽम्बुमुचां प्रसारी' इति। अत्र च

पङ्क्तिचतुष्टयेन श्लोकविन्यासः। एवं प्रकारान्तरेणापरेऽपि गोमूत्रिकाभेदाः सम्भवन्ति ते बाहुल्यभियाच न लिखिताः ग्रन्थान्तरतोऽनुसर्त्तव्याः॥ ७८॥

म द नो म दि रा क्षी णा म पा ङ्गा स्त्रो ज ये द यम्।
म दे नो य दि तत् क्षी णा म न ङ्गा या ञ्ज लिं द दे॥

॥ ७८ ॥

॥ गोमूत्रिका ॥

मदन इति। अयं मदनः कामः मदिरे मत्तताजनके मत्तखञ्जनसदृशे इति केचित् अक्षिणी यासां तासां तासामपाङ्गरूपमस्त्रं यस्य तादृशः सन् यदि जयेत मां पीडयेत् तत्तदा मदेनो मम पापं क्षीणं स्यात् अतोऽस्मै अनङ्गाय अञ्जलिं ददे नमस्कुर्य्यां कामपरतन्त्रतया रमणीभिः मत्कटाक्षवीक्षितश्चेत् कृतार्थो भवेयमित्यर्थः। अत्र विषमवर्णा ...मेकरूपत्वम् ईदृशस्थले च वन्ध्यन्तिवितश्लोकोत्तरार्द्धस्य प्रथमाक्षरमारभ्य पूर्व्वार्द्धं पठनीयम्, एवं पूर्व्वार्द्धप्रथमाक्षरमारभ्योत्तरार्द्धं पठनीयं। यत्र च समवर्णानामेकरूपत्वं तत्र पूर्व्वार्द्धप्रथमाक्षरमारभ्यैव पूर्व्वार्द्धम् उत्तरार्द्धप्रथमाक्षरमारभ्यैव चोत्तरार्द्धं पठनीयं यथा 'अजरामरुभाचारबलिश्रीलविलोचिता। भुजङ्गमनिभामारकलिकाखजनोचिता' इति। अत्र द्वितीयादिसमवर्णनामेकरूपत्वम्॥ ७८॥

प्राहुरर्द्धभ्रमं नाम श्लोकार्द्धभ्रमणं यदि।
तदिष्टं सर्व्वतोभद्रं भ्रमणं यदि सर्व्वतः॥ ८०॥

अथ दुष्करमेवार्द्धभ्रमं सर्व्वतोभद्रञ्च चित्रद्वयं लक्षयति। प्राहुरिति। श्लोकार्द्धभ्रमणं श्लोकस्य बन्धलिखितश्लोकीयपाद-चतुष्टयस्य अर्द्धेनार्द्धमार्गेण अनुलोमप्रतिलोमरूपयोरुच्चारण-मार्गयोर्मध्ये केवलमनुलोममार्गेणेत्यर्थः, यदि भ्रमणं भ्रम-णेन पादोत्थितिस्तदा अर्द्धभ्रमं नाम चित्रं प्राहुः, यदि च सर्व्वतोऽनुलोमप्रतिलोमाभ्यां भ्रमणं तदा तत् सर्व्वतोभद्रमिष्ट-मित्यन्वयः, अयमर्थः, बन्धद्वयमिदं प्रायेणाष्टाक्षरवृत्तविशेष-विषयं, तत्र सन्निवेशप्रकारः, चतुःषष्टिकोष्ठात्मकेऽस्मिन् बन्धे क्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्टयं लेख्यम्, अनन्तरञ्चाधःस्थ-पङ्क्तिचतुष्टये चतुर्थतृतीयद्वितीयप्रथमपादा लेख्याः, तत्रार्द्ध-भ्रमे अधःस्थपङ्क्तिचतुष्टये परावृत्त्या सर्व्वतोभद्रे तु परावृत्त्या समावृत्त्या वा चतुर्थादिपादलिखनमिति विशेषः। तत्रोद्धार-क्रमस्तु अर्द्धभ्रमे ऊर्द्धपङ्क्तौ वामाद्दक्षिणतः अधःपङ्क्तौ दक्षिणा-द्वामतः, एवं वामस्थार्द्धकोष्ठादधःक्रमेण दक्षिणस्थाधःकोष्ठा-दूर्द्धक्रमेण चानुलोमोच्चारणेन प्रथमादिपादोत्थानं। सर्व्वतो-भद्रे तु वामाद्दक्षिणतो दक्षिणाद्वामतः ऊर्द्धादधस्तः अध-स्तादूर्द्धतश्चानुलोमविलोमाभ्यां सर्व्वत आवर्त्तनेन पादानामु-त्थानमिति॥ ८०॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| म | नो | भ | व | त | वा | नो | कं |
| नो | द | या | य | न | मा | नि | नो |
| भ | या | द | मे | या | मा | मा | वा |
| व | य | मे | नो | म | या | न | त |
| त | न | या | म | नो | मे | य | व |
| वा | मा | मा | या | मे | द | या | भ |
| नो | नि | मा | न | य | या | द | नो |
| कं | नो | वा | त | व | भ | नो | म ॥ ८१ ॥ |

॥ अर्द्धभ्रमः ॥

तत्रार्द्धभ्रममुदाहरति। मनोभवेति। हे मनोभव! काम! तव अनीकं सेनारूपा मानिनी इयं मानवती तव न न उदयाय जयाय अपि तु उदयायैव, तवेत्युभयत्रान्वयि। ननु त्रि-जिगीषोरनीकमपराधिनं दण्डयति तव कात्र चिन्तेत्यत्राह, हे नत! नमस्कृत! वयमनोमयाः अपराधिनो मा वा न वा कृतापराधा वा न भवामः किन्तु भयात् अमेयोऽपरिमित आमः पीड़ा येषां ते, यद्यपि वयं नापराधिनः तथापि भयेन व्याकुला जाताः स्म इत्यर्थः॥ ८१॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | मा | या | मा | मा | या | मा | सा |
| मा | रा | ना | या | या | ना | रा | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | या | रा | मा | मा | रा | या | मा |
| मा | या | रा | मा | मा | रा | या | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | रा | ना | या | या | ना | रा | मा |
| सा | मा | या | मा | मा | या | मा | सा |

॥ ८२ ॥

## ॥ सर्व्वतोभद्रम् ॥

सर्व्वतोभद्रमुदाहरति। सेति। अत्र पदच्छेदः। सा, अमायामामाया, मासा, इति प्रथमे। मारानायायानारा-मेत्येकमेव पदं द्वितीये। यानावाररावा, अनाया, इति तृतीये। माया, रामा, माराय, अमा, इति चतुर्थे। प्रोषित-तस्य विरहिणो विलपनमिदं। सा स्मर्य्यमाणा रामा रमणी मामा चन्द्रेण अमा सह 'छायामृगधरो राजा माः, इति चन्द्रपर्य्याये त्रिकाण्डशेषः। माराय विनाशाय, स्मर्य्यमाणा नायिका दृश्यमानचन्द्रश्चालम्बनोद्दीपनविभावावुभौ संप्रति मम विनाशाय भवत इत्यर्थः, सा कीदृशी यतोऽमायस्या व्याजस्य अमस्यापरिमितस्य आमस्य पीडाया आय आगमनं

यथा सा, तथा मारः काम एव आनायो जालं बन्धनकारित्वात् तस्यायानेनागमनेनारामः क्रीडा यस्याः, मारानायस्यायानं यतस्तादृश आरामो यस्या इति वा सा, तथा यानं गमनमावारयति निवारयतीति यानावारः तादृश आरावो वचनं यस्याः सा मधुरवचनभङ्ग्या विदेशगमनं निवारयन्तीत्यर्थः, अतएव अनाया नायो नयस्तद्रहिता अकार्य्यज्ञेत्यर्थः नास्ति आयो गमनं यस्याः सेति केचित्, तथा मां लक्ष्मीं यातीति माया अतिसुन्दरीत्यर्थः। इत्थं बन्धेषु दुष्करा एव लक्षिताः खड्गादिबन्धास्त्वितः सुकरा इत्युपेक्षिताः ग्रन्थान्तरतोऽनुसर्त्तव्याः ॥ ८२ ॥

यः स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ ।
इष्टश्चतुःप्रभृत्येष दर्श्यते, सुकरः परः ॥ ८३ ॥

अथ काव्यशोभाजनकत्वेनालङ्कारतया प्राचीनैरभ्युपगतस्य स्वरादिनियमस्य बहुभेदस्यापि दुष्करं भेदचतुष्टयं दर्शयति। य इति। स्वरा अकारादयः, स्थानानि कण्ठादीनि एषां काव्ये निवेशासम्भवात्तद्भवा वर्णा इत्यर्थः, तथा वर्णाश्च कण्ठ्यदन्त्यत्वाद्यविशेषितवर्णमात्राणि, तेषां नियम इतरव्यवच्छेदेनोपादानं चतुर्भिरेव स्वरैः स्थानैर्वर्णैर्वा निबन्धनमित्याद्यवधारणमित्यर्थः तद्रूपो योऽलङ्कारः प्राचीनैरुक्त इति शेषः, असौ चतुःप्रभृति चतुरादि यथा स्यात्तथा दुष्करेषु मध्ये इष्टोऽभिमतः ग्रन्थबाहुल्यभिया दुष्कराणामेव दर्शनाया

आवश्यकत्वात् चतुरादिस्वरस्थानवर्णनियम एव दुष्करतया दर्शयितुमुचित इत्यर्थः, चतुःप्रभृतीति दर्श्यत इति क्रियाया विशेषणं वा, तस्मादेव चतुरादिनियम एव दर्श्यते, परः पञ्च-षडादिनियमस्तु सुकरः सुकरत्वात् स न दर्श्यत इत्यर्थः। चतुःप्रभृतीति प्रभृतिपदेन त्रयाणां द्वयोरेकस्य च ग्रहणं तेन स्वरस्थानवर्णानां प्रत्येकं चतुस्त्रिद्व्येकनियमरूपाश्चत्वारो भेदा दर्श्यन्त इत्यर्थः॥ ८३॥

आम्नायानामाहान्त्या वाग्गीतीरीतीः, प्रीतीर्भीतीः।
भोगो रोगो, मोदो मोहो, ध्येये धेच्छे देशे क्षेमे॥ ८४॥

तत्र प्रथमं चतुःस्वरनियममुदाहरति। आम्नायानामिति। आम्नायानां वेदानामन्त्या वाक् उपनिषत् गीतीर्गानानि ईतीः अतिवृष्ट्याद्युपद्रवरूपा आह चित्तमोहकत्वादिति भावः, तथा प्रीतीः कलत्रपुत्रादिषु स्नेहान् भीतीर्भयजनिका आह वियोगादिना दुःखदातृत्वादिति भावः, तस्माद्भोगो गानादि-विषयानुभवो रोगो व्याधिरेव, तथा मोदो विषयानन्दो मोहोऽज्ञानमेव, तर्हि विषयसङ्गं परिहृत्य किं कर्त्तव्यमि-त्याह क्षेमे पुण्ये अनुपद्रवे वा देशे, ध्येये ध्यातव्ये ब्रह्मणि, धेच्छे धानं मनःसमाधानं धाः इच्छा तदेकत्वलिप्सा च ते कर्त्तव्ये इति शेषः। ध्येच्छे इति सयकारपाठे तु ध्या ध्यानमिच्छा चेत्य-र्थः। अत्र आ ई ओ ए इति चतुर्भिरेव स्वरैः पद्यनिबन्धनम्। विद्युन्मालावृत्तम्॥ ८४॥

क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः।
उरु रुरुधुर्गुरु दुधुवर्युधि कुरवः स्वमरिकुलम् ॥ ८५ ॥

त्रिस्वरनियममुदाहरति। क्षितीति। क्षितेर्विजितिर्विजयः स्थितेर्मर्य्यादाया विहितिर्विधानञ्च ते एव व्रतं तत्र रतिर्येषां ते ततश्च स्वजात्युचितकर्म्मकरणात् परा उत्कृष्टा गतिर्दशा ज्ञानं वा येषां ते। 'गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोरिति मेदिनी। ईदृशाः कुरवः कुरुवंशीयाः कुरुदेशजा वा भूपाः युधि युद्धे स्वं स्वीयमरिकुलम् उरु अधिकं यथा तथा रुरुधुरावृतवन्तः, गुरु सातिशयं यथा तथा दुधुवुः कम्पयामासुः। अत्र इ अ उ इति त्रय एव स्वराः। त्वरितगतिर्वृत्तम् ॥ ८५ ॥

श्रीदीप्ती ह्रीकीर्त्ती धीनीती गीःप्रीती।
एधेते द्वे द्वे ते ये नेमे देवेशे ॥ ८६ ॥

द्विस्वरमुदाहरति। श्रीदीप्ती इति श्रीर्लक्ष्मीर्दीप्तिः शोभा च ते, ह्रीर्लज्जा कीर्त्तिश्च ते, धीर्बुद्धिर्नीतिश्च ते, गीर्वाणी प्रीतिः सन्तोषश्च ते, एते द्वे द्वे ते तव एधेते वर्द्धेते, ये द्वे द्वे इमे देवेशे इन्द्रेऽपि न विद्येते। अत्र ई ए इति द्वावेव स्वरौ। वाणीवृत्तं 'सर्व्वे चेद्दीर्घा वर्णा वाणीति प्रोक्ता सेति लक्षणात्॥ ८६ ॥

सामायामामाया मासा मारानायायानारामा।
यानावारारावानाया माया रामा मारायामा ॥ ८७ ॥

॥ स्वरनियमः ॥

एकस्वरमुदाहरति । सेति । श्लोकोऽयं सर्व्वतोभद्रोदाहरणत्वेन पूर्व्वमुक्तस्तत्रैव व्याख्यातः । अत्र आकार एवैकः स्वरः ॥ ८७ ॥

नयनानन्दजनने नक्षत्रगणशालिनि ।
अघने गगने दृष्टिरङ्गने ! दीयतां सकृत् ॥ ८८ ॥

अथ स्थाननियमं दर्शयन् प्रथमं चतुःस्थानमुदाहरति । नयनेति । मानिनीं प्रति नायकस्योक्तिरियं । हे अङ्गने ! प्रशस्ताङ्गवति ! अघने मेघरहिते अतएव नक्षत्रगणशालिनि तत एव नयनानन्दजनने गगने सकृदेकवारमपि दृष्टिर्दीयतामित्यन्वयः । ईदृशगगनस्योद्दीपकत्वात् दर्शने जाते मानो न स्थास्यतीत्यभिप्रेत्य दर्शनार्थं नायकस्यानुरोध इति भावः । अत्र दन्त्यतालव्यकण्ठ्यमूर्द्धन्यैरेव वर्णैर्निबध्यमानत्वाच्चत्वार्य्येव स्थानानि ॥ ८८ ॥

अलिनीलालकलतं कं न हन्ति घनस्तनि ! ।
आननं नलिनच्छायनयनं शशिकान्ति ते ॥ ८९ ॥

त्रिस्थानमुदाहरति । अलीति । हे घनस्तनि ! कठिनकुचे अलिनो भ्रमरास्तद्वन्नीला अलकलता यत्र तत्, तथा नलिनच्छाये पद्मसदृशे नयने यत्र तत्, तथा शशिन इव कान्तिर्यस्य तत् ईदृशं ते तव आननं कं पुरुषं न हन्ति न व्याकुलयति । अत्र कण्ठ्यदन्त्यतालव्यवर्णैरेव निबन्धनमिति त्रीण्येव स्थानानि ॥ ८९ ॥

अनङ्गलङ्घनालग्रनानातङ्का सदङ्गना ।
सदानघ ! सदानन्दनताङ्गासङ्गसङ्गतः ॥ ८० ॥

द्विस्थानमुदाहरति । अनङ्गेति । भार्य्यामनादृत्य गीत-वाद्यादिप्रमोदेन कालं गमयन्तं सखायं प्रति कस्यचिदुपालम्भनमिदं । हे सदानघ ! सर्व्वस्मिन्नपि समये व्यथारहित ! निश्चिन्तेत्यर्थः, तथा हे सदानन्दनताङ्ग ! सदा आनन्द आनन्दकरं कर्म्म गीतवादनादिः तत्र नतं प्रवणं व्यापृतमित्यर्थः अङ्गं गात्रं यस्य स तथा तत्सम्बोधनं, नास्ति सङ्गो येषां तेऽसङ्गा दुर्जनास्तेषां सङ्गतः सम्पर्कात् सती चासावङ्गना चेति सदङ्गना साध्व्यपि स्त्री अनङ्गस्य कामस्य लङ्घनया आक्रमणेन लग्नाः सम्भवन्तो नाना बहुविधा आतङ्का यस्यास्तादृशी भवति भर्त्तृविरहिता हि स्त्री साध्व्यपि दुर्जनसङ्गात् सदोषा भवितुमर्हति तस्माद्वृथाप्रमोदं परिहृत्य भार्य्यानुरक्तो भवेति भावः । अत्र पाठान्तराण्यनुपादेयानीत्युपेक्षितानि । क॰ कण्ठ्यदन्त्यैरेव वर्णैर्निबन्धनमिति द्विस्थानता ॥ ८० ॥

अगा गाङ्गाङ्गकाकाकगाहकाघककाकहा ।
अहाहाङ्ग खगाङ्कागकङ्कागखगकाकक ॥ ८१ ॥
॥ स्थाननियमः ॥

एकस्थानमुदाहरति । अगा इति । कस्यचिद्विहितबहुतीर्थभ्रमणस्य स्तुतिरियं । पदच्छेदो यथा । अगाः, गां, गाङ्ग-

काकाकगाहक, अघककाकहा, इति प्रथमार्द्धं। अहाहाङ्ग, खगाङ्कागकङ्क, अगखगकाकक, इत्युत्तरार्द्धं। तदयमन्वयः। हे गाङ्गकाकाकगाहक! गङ्गाया इदं गाङ्गं यत् कं जलं तस्य आकाकः मशब्दकुटिलगमनं 'कै शब्दे इत्यस्मादाङ्पूर्वाद्भावे क्विप्, आकाः तत्सहितोऽकः 'अक कुटिलायां गतावित्यस्माद्भावे डः' आकाकस्तरङ्ग इत्यर्थः तं गाहत इति गाङ्गकाकाकगाहकस्तत्सम्बोधनं, निन्दितान्यघानि पापान्यघकानि 'कुत्सायां कः' तान्यवोपद्रवहेतुत्वात् काका वायसाः तान् हन्तीति अघककाकहा तादृशस्त्वं गां पृथिवीम् अगा गतवान् प्रदक्षिणीकृतवानित्यर्थः। अतश्च पापकृतविषादाभावात् हे अहाहाङ्ग! हा इति दीनध्वनिमङ्गति गच्छतीति हाहाङ्गः 'अगि-गत्यामित्यस्य णटि रूपं' तद्भिन्नोऽहाहाङ्गस्तत्सम्बोधनं। तथा हे खगाङ्कागकङ्क! खे आकाशे गच्छन्तीति खगाः सूर्यादयः ते अङ्काश्चिह्नानि यस्य तादृशो योऽगः पर्व्वतः सुमेरुरित्यर्थः तं कङ्कते गच्छतीति खगाङ्कागकङ्कः 'ककि गत्यामित्यस्य णटिरूपं' तत्सम्बोधनं, पुण्यप्रभावेन सुमेरुपर्य्यन्तगामिन् स्वर्गसुखाभिलाषिन्निति वार्थः। तथा हे अगखगकाकक! अगन्ति कुटिलं गच्छन्तीत्यगानि यानि खानीन्द्रियाणि तानि गच्छति कारणतया प्राप्नोतीति अगखगं तादृशं यत् कं सुखं तस्मै न ककते चपलीभवतीति अगखगकाककः 'अक गर्व्वच्छालौल्येष्वित्यस्य रूपं' तत्सम्बोधनम्, इन्द्रियजन्यसुखायालोलुपेत्यर्थः। अत्र कण्ठ्यैरेव वर्णैर्निबन्धनमित्यकस्थानता॥ ८१॥

रे रे रोरुरुरुरोरुगागोगोऽगाङ्गोऽगगुः ।
किं केकाकाकुकः काको मामा मामम मामम ॥ ९२ ॥

अथ वर्णनियमान् दर्शयन् प्रथमं चतुर्व्वर्णमुदाहरति। रे रे इति। वञ्चपणायाः कस्याश्चिदारात्पणायाः स्वमभिलषन्तं कञ्चित् पुलिन्दं प्रति द्वेषोक्तिरियं। रे रे इति नीचसम्बोधने। रे रे मामम! मा लक्ष्मीस्तस्यां मम ममता यस्य सः तत्सम्बोधनं, ममेत्यव्ययं धर्म्मपरोऽयं निर्द्देशः, दरिद्रत्वात् धनव्यथे … रे-त्यर्थः। मायाम् अममत्वं यस्येति विगृह्य लक्ष्मीशून्येत … इति केचित्। मामेति निषेधे सम्भ्रमे द्विर्वचनं, त्वं मां … मम गच्छ उपसर्पेत्यर्थः। इति चतुर्थपादस्यार्थः। य… काको वायसः किं केकाकाकुको भवति अपि तु नैव, के… मयूरध्वनिः तस्याः काकुर्मदकृता विकारः तां कायति … इति शब्देन प्रकाशयतीत्यर्थः इति केकाकाकुकः 'आदन्तादह्' काको यथा केकाकाकुमधिगन्तुं नार्हति तथा त्वं मां मत्यर्थः। इति तृतीयपादार्थः। निकृष्टकार्यकारित्वादपि त्वं न मे योग्य इत्याह त्वं रोरुरुरुरोरुगागोगः 'रोरुयते भयेन भृशं पुनः पुनर्वा रौतीति रोरुः 'रौतेर्यङन्तात् क्विप् क्वौय इति यलोपः' तादृशो यो रुरुर्मृगविशेषः तस्यारुषा व्रणेन या रुक् शरवेधकृतपीडा तद्रूपमागः पापं तद्गच्छति प्राप्नोति रोरुरुरुरोरुगागोगः निरपराधजीवहिंसकत्वात् पापात्मेत्यर्थः। निकृष्टदेशवासित्वाच्च त्वं न मे योग्य इत्याह अगाङ्गगः अगस्य पर्व्वतस्याङ्गमेकदेशं गच्छतीति सः पर्व्वतीयत्वादविदग्ध इत्यर्थः।

असम्बद्धप्रलापित्वाच्च त्वं न मे योग्य इत्याह अगगुः न गच्छति सम्बद्धविषयं न प्राप्नोतीत्यगा तादृशी गीर्वाणी यस्य सः, अगतीत्यगा कुटिला गीर्यस्येति केचित्। अत्र र ग क म इति चतुर्भिरेव वर्णैर्निबन्धनमिति चतुर्वर्णता, वर्णपदञ्च वृत्तपूरकवर्णपरं तेनाकृत्यत्र ङकारसद्भावेऽपि न चतुर्व्वर्णनियमव्याघातः तस्य वृत्तपूरकत्वाभावादिति बोध्यम्। उदाहरणे चास्मिन्नव्यवहितवर्णचतुष्टयेन पादचतुष्टयनिबन्धनादयमेव नियम इति न मन्तव्यं सव्यवधाननिवेशेऽपि चतुर्वर्णनियमानपायात् ग्रन्थकृता तु केवलं शक्तिप्रदर्शनार्थमेवं निबद्धमिति ज्ञेयम्॥ ८२॥

देवानां नन्दनो देवो नोदनो वेदनिन्दिनः।
दिवं दुदाव नादेन दाने दानवनन्दिनः॥ ८३॥

त्रिवर्णमुदाहरति। देवानामिति। देवानामिन्द्रादीनां नन्दनो दैत्यगणदमनात् सन्तोषणः तथा वेदनिन्दिनो वेदान् निन्दयतो नास्तिकजनस्य नोदनो निराकर्त्ता, देवो नरसिंहरूपी भगवान् विष्णुः, दानवान् इन्द्रादिजयादिना नन्दयतीति स तथा तस्य दानवनन्दिनो हिरण्यकशिपार्दाने खण्डनसमये 'दोऽवखण्डने इत्यस्य रूपं' नादेन तारतरसिंहनादेन कृत्वा दिवमाकाशं दुदाव उपतापितवान् अन्तरिक्षचरान् सचकितांश्चकारेत्यर्थः। अत्र द व न इति त्रिभिरेव वर्णैर्निबन्धनमिति त्रिवर्णता॥ ८३॥

सूरिः सुरासुरासारिसारः सारससारसाः ।
ससार सरसीः सीरी ससूरुः स सुरारसी ॥ ८४ ॥

द्विवर्णमुदाहरति । सूरिरिति । बलदेवस्य जलक्रीडाप्रकरणीयश्लोकोऽयं । सूरिः पण्डितः, तथा सुरासुरान् देवदैत्यानपि आसर्त्तुमाक्रमितुं शीलं यस्य तादृशः सारो बलं यस्य सः, सुरासुरासारिसारः, तथा शोभनावूरू सूरू ताभ्यां सह वर्त्तमानः ससूरुः, तथा सुराया मद्यस्य रस आस्वादोऽस्यास्तीति सुरारसी, स प्राकरणिकः प्रसिद्धो वा सीरी बलदेवः आरसन्ति मधुरशब्दं कुर्व्वन्तीत्यारसा ये सारसाः पक्षिविशेषाः तैः सह वर्त्तमानाः सारससारसास्तादृशीः सरसीः सरांसि ससार विहर्त्तुं जगाम । अत्र स र इति द्वाभ्यामेव वर्णाभ्यां निबन्धनमिति द्विवर्णता ॥ ८४ ॥

नूनं नुन्नानि नानेन नाननेनाननानि नः ।
नाऽनेना ननु नाऽनूनेनेनेनानानिनो निनीः ॥ ८५ ॥

॥ वर्णनियमः ॥

एकवर्णमुदाहरति । नूनमिति । प्रबलरिपुपराजितस्य कस्यचिन्नृपतेः सैन्यानां दैन्योक्तिरियम् । अत्र पदच्छेदः, नूनं नुन्नानि, न, अनेन, न, आननेन, अननानि, नः, इति पूर्व्वार्द्धं । न, अनेनाः, ननु, ना, अनूनेन, एनेन, अनान्, इनः, निनीः, इत्युत्तरार्द्धं । अनेन विजयिना रिपुणा कर्त्रा आननेन भ्रुकुटि-

मता मुखेनैव कृत्वा नोऽस्माकम् अननानि प्राणाः नूनं निश्चितं न न नुन्नानि अपनीतानि अपि तु नुन्नान्येव अस्य मुखमेव दृष्ट्वा वयं मृतप्रायाः का कथा युद्धप्रहारादिनेत्यर्थः, इति पूर्व्वार्द्धार्थः। ननु भोः 'सैन्यानां बन्धून् प्रति सम्बोधनमिदम्' अनूनेन प्रबलेन एनेन एतेन रिपुणा हेतुना अस्मादित्यर्थः 'इदमस्य कथितानुकथने द्वितीयाटौःस्वेनः' इत्यनेन इदम एनः। इनो ना अस्माकं प्रभुः पुरुषः अनान् प्राणान् निनीः नेतुमिच्छुः तृणकवलनादिना रक्षितुमिच्छुः सन्नित्यर्थः, 'निनीरिति नीञः सनन्तस्य क्विपि रूपं' न अनेनाः अपापो न भवति शत्रुविजितस्य यथाशक्ति युद्धेनैव मरणं श्रेयो न पुनस्तस्यानुवृत्त्या प्राणरक्षणमिति भावः। अत्र केवलं नकारेणैव निबन्धनमित्येकवर्णनियमः॥ ८५॥

इति दुष्करमार्गेऽपि कश्चिदादर्शितः क्रमः।
प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः॥ ८६॥

अथ दुष्करचित्रमुपसंहरन् प्रहेलिकामवतारयति। इतीति। कश्चिदिति स्वल्पतर इत्यर्थः, अन्येऽपि दुष्कराश्चित्रालङ्काराः पद्मादिबन्धक्रियाकारकगुप्त्यादयः प्राचीनैरुक्ताः सन्ति ग्रन्थबाहुल्यभिया ते नोक्ताः ग्रन्थान्तरतो ज्ञातव्या इत्यर्थः। प्रहेलिकेति प्रहेलिकायाः प्रकाराणां विशेषाणां गतिर्लक्षणम् उद्दिश्यते उद्देशपूर्व्वकमुच्यते विशेषा उद्दिश्यन्ते तेषां लक्षणञ्चोच्यत इत्यर्थः, सामान्यलक्षणन्तु प्रसिद्धत्वान्नोक्तं ग्रन्थान्तरतो

ज्ञातव्यं यथा 'प्रहेलिका तु सा ज्ञेया वचः संवृतिकारि यदिति' अभिप्रेतार्थसंवरणकारिवचनविन्यासः प्रहेलिकेति सामान्यलक्षणम् ॥ ९६ ॥

क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥ ९७ ॥

ननु प्रहेलिकाया यमकादिवत् सम्यक् शब्दोपस्कारकता नास्ति प्रत्युत प्रकृतार्थसंवरणात्मकत्वाच्च रसप्रातिकूल्यमतएवास्या अलङ्कारत्वमपि नाङ्गीकृतमन्यैः यदुक्तं 'रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिकेति' तत् कुत्रास्या उपयोग इत्यत्राह। क्रीडेति। क्रीडार्था या गोष्ठी सभा तत्र विनोदाः सल्लापभङ्ग्या प्रमोदास्तेषु, यद्वा मिथोवाक्चातुरीकौतुकं क्रीडा, विदग्धानामासनबन्धो गोष्ठी, काव्यालापेन कालहरणं विनोदः अतएव कादम्बर्यां 'कदाचिदक्षरच्युतकमात्राच्युतकबिन्दुमती गूढचतुर्थपादप्रहेलिकाप्रदानादिभिरित्युक्तं' तेषां द्वन्द्वः तेषु, तथा तज्ज्ञैः प्रहेलिकाभिज्ञैः सह आकीर्णे जनसङ्कुले देशे यन्मन्त्रणं गुप्तभाषणं तस्मिन्, तथा परस्य बोद्धुव्यभिन्नस्य व्यामोहने अपरिज्ञातत्वप्रतिपादने च प्रहेलिकाः सोपयोगाः सप्रयोजनाः, तस्मात् क्रीडाद्युपयोगित्वादस्या अलङ्कारत्वम् अन्यत्र तु दोष एवेति बोध्यम् ॥ ९७ ॥

आहुः समागतां नाम गूढार्थां पदसन्धिना।
वञ्चितान्यत्र रूढेन यत्र शब्देन वस्तुना ॥ ९८ ॥

प्रहेलिकाप्रकारास्त्वादुष्टा दुष्टाश्च, तत्रादुष्टानामेव षोडशानां पश्चादुदाहरणैः परीक्षां दर्शयिष्यन् प्रथमं सोद्देशं लक्षणमाह। आरूढ़िरिति। पदयोः सन्धिना सान्निध्यजनितसन्धिकार्य्यदीर्घादिना गूढ़ो दुर्ब्बोधोऽर्थो यत्र तां समागतां नाम प्रहेलिकामारूढ़िरित्यन्वयः। अत्र पश्चाद्वक्ष्यमाणानां सर्व्वेषां प्रथमान्तत्वात् समागतामित्यत्र द्वितीयान्तता प्रक्रमभङ्गमावहति तस्मादारूढ़ः समागतां नामेत्यादिपाठे लिपिकरप्रमादकृतः सेयं समागता नामेत्यादि पठनीयं। तथा अन्यत्र विवक्षितभिन्ने रूढेन प्रसिद्धेन शब्देन यत्र वञ्चना प्रतारणा सा वञ्चिताख्या॥ ८८॥

व्युत्क्रान्तातिव्यवहितप्रयोगान्मोहकारिणी।
सा स्यात् प्रमुषिता यस्यां दुर्ब्बोधार्था पदावली॥८९॥

व्युत्क्रान्तेति। अतिव्यवहितानामत्यनामन्नपदानां प्रयोगात् मोहकारिणी बोद्धुरर्थग्रहवैधुर्य्यसम्पादिका संहतिकारिवाक् व्युत्क्रान्ता व्युत्क्रान्ताख्येत्यन्वयः, अत्र किञ्चिद्व्यवधानेन प्रयोगो न तथा मोहयतीत्यतिशब्दप्रयोगः, आमन्तिस्त्वान्वयबोधहेतुः तद्रूपक्रमलङ्घनाद्व्युत्क्रान्तेतिसंज्ञा। सा स्यादिति। दुर्ब्बोधाः तत्तदर्थेषु तत्तत्पदानां प्रयोगप्रसिद्धिरहितत्वात् दुःखेन बोध्या अर्था यस्यास्तादृशी पदावली पदसमूहः न त्वेकं पदं सा प्रकर्षेण बोद्धुर्मुषितत्वसम्पादनात् प्रमुषिता, निरुक्तवञ्चितायान्तु एकं पदं दुर्ब्बोधार्थमित्यतोऽनयोर्भेदः, किञ्च

वस्थितायां मामार्थस्य पदस्याप्रसिद्धेऽर्थे प्रयोगः अत्र तु पदान्येकार्थानीत्यतोऽपि भेदः॥ ९९॥

समानरूपा गौणार्थारोपितैर्ग्रथिता पदैः।
परुषा लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः॥ १००॥

समानरूपेति। गौणार्थेषु साध्यवसानगौणलक्षणया बोध्यार्थेषु आरोपितैर्लक्षणाप्रयोजनीभूतार्थाभेदप्रतीतिजनकतया प्रयुक्तैः पदैर्ग्रथिता निबद्धा संवृतिकारिवाक् सदृशयोः शक्यलक्ष्ययोर्द्वयोः समानरूपतानिबन्धनत्वात् समानरूपा स्यात्। परुषेति लक्षणस्यानुशासनस्यास्तित्वमात्रेण तदर्थस्य शक्तिरस्ति न वेत्यविविच्य केवलमनुशासनमस्तीति कृत्वा व्युत्पादिता श्रुतिः शब्दो यत्र तादृशी वाक् पारुष्येण प्रयुक्तत्वात् परुषा स्यात्॥ ॥ १००॥

सङ्ख्याना नाम सङ्ख्यानं यत्र व्यामोहकारणम्।
अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता॥ १०१॥

सङ्ख्यानेति। यत्र सङ्ख्यानं वर्णानां गणना यद्वा प्रयुज्यमानः सङ्ख्यावाचकशब्दो व्यामोहकारणं श्रोतुर्झटितिनिश्चयाभावेन विशेषेण मोहं जनयति सा सङ्ख्यानघटितत्वात् सङ्ख्याना। अन्यथेति यत्र वाक्यार्थोऽन्यथा भासते आपाततः प्रतीयमानादर्थादन्यप्रकारेण पर्य्यवसानं प्राप्य शोभां गच्छति सा अन्यार्थस्य प्रकल्पनात् प्रकल्पिता स्यात्॥ १०१॥

सा नामान्तरिता यस्यां नाम्नि नानार्थकल्पना ।
निभृता निभृतान्यार्था तुल्यधर्म्मस्पृशा गिरा ॥ १०२ ॥

सेति । नाम्नि संज्ञाविशेषे ज्ञातव्ये यस्यां नानार्थानां कल्पना शब्दस्य नानार्थसङ्केतितत्वात् बहूनामर्थानां विकल्पनं घटते सा नामान्तरेणान्तरितार्थविषयत्वान्नामान्तरिताख्या । निभृतेति । तुल्यधर्म्मस्पृशा प्रकृताप्रकृतयोः साधारणधर्म्मं प्रतिपादयन्त्या गिरा वाक्येन निभृता गोपितोऽन्यार्थः प्रकृतार्थो यत्र सा निभृताख्या, अस्याश्चानुपात्तस्य प्रकृतस्य साधारणविशेषणमहिम्ना सूच्यमानत्वात् समासोक्तिमूलकत्वं बोध्यम् ॥ ॥ १०२ ॥

समानशब्दोपन्यस्तशब्दपर्य्यायसाधिता ।
संमूढा नाम, या साक्षान्निर्द्दिष्टार्थापि मूढये ॥ १०३ ॥

समानशब्देति । उपन्यस्तेन शब्दस्य प्रकृतार्थबोधकपदस्य पर्य्यायेण स्वार्थबोधकनामान्तरेण साधिता निबद्धा वाक् समानशब्दाख्या स्यात् । अत्र पर्य्यायता च लाञ्छितत्वादिनैकार्थबोधकता न त्वमरनिर्ज्जरादिवदेकार्थशक्तता तथात्वे अर्थस्य संवरणीयत्वाभावेन प्रहेलिकात्वानुपपत्तेरिति बोध्यम् । संमूढेति । साक्षात् वाचकशब्देन निर्द्दिष्टार्थापि कथितार्थापि या वाक् मूढये आपाततो मोहाय भवति सा संमूढा नाम ॥ १०३ ॥

योगमालात्मिका नाम या स्यात् सा परिहारिका।
एकच्छन्नाश्रितं व्यक्तं यस्यामाश्रयगोपनम् ॥ १०४ ॥

योगेति। या वाक् 'नामेति प्राकाश्ये, योगानां यौगिकशब्दानां माला परम्परा सैवात्मा स्वरूपं यस्याः सा यौगिकशब्दपरम्परया एकैकरूढपदप्रतिपाद्यार्थानां बोधिकेत्यर्थः, सा परिहारिका स्यात्, हारो मुक्तामाला तां परिगतेति व्युत्पत्त्या मुक्तामालासदृशयौगिकशब्दमालारूपत्वादन्वर्थता, यद्वा परिहरति झटिति प्रकृतार्थबोधं निवारयतीति परिहारिका, अत्र योगमालात्मकं नाम यस्याः सेति पाठस्तु न मनोरमः। एकेति। यस्यामाश्रितमाधेयमेव व्यक्तम् आश्रयस्याधारस्य गोपनं सा एक आश्रयश्छन्नो निगूहितो यत्रेति व्युत्पत्त्या एकच्छन्नाख्या ॥ १०४ ॥

सा भवेदुभयच्छन्ना यस्यामुभयगोपनम्।
सङ्कीर्णा नाम सा यस्यां नानालक्षणसङ्करः ॥ १०५ ॥

सेति। यस्यामुभयोराश्रिताश्रययोर्गोपनं सा उभयम् आश्रिताश्रययोर्द्वयं छन्नं यत्रेति व्युत्पत्त्या उभयच्छन्नाख्या भवेत्। सङ्कीर्णेति। यस्यां नानालक्षणानां समागतादिपञ्चदशप्रभेदानां मध्ये द्वित्रिचतुरादीनां सङ्करः साहित्येनावस्थानं सा सङ्कीर्णा नाम भवेत्। एवं षोडश प्रभेदाः प्रहेलिकाया उद्दिष्टास्तत्तल्लक्षणेन लक्षिताश्च ॥ १०५ ॥

एताः षोडश निर्दिष्टाः पूर्व्वाचार्य्यैः प्रहेलिकाः ।
दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश ॥ १०६ ॥

एता इति । एताः समागताद्योऽदृष्टाः, षोडशेति शुद्ध-सङ्कीर्णभेदेनेत्यर्थः, अदुष्टत्वाच्चयापि दर्शिता इति भावः । तैः पूर्व्वाचार्य्यैरेव, अन्याः च्युताक्षरादत्ताक्षराच्युतदत्ताक्षराबिन्दु-मतीप्रभृतयः इति केचित्, गूढादीनामप्यत्रैवान्तर्भाव इत्यन्ये, अधीताः पठिताः ॥ १०६ ॥

दोषानपरिसङ्ख्येयान् मन्यमाना वयं पुनः ।
साध्वीरेवाभिधास्यामस्ता दुष्टा यास्त्वलक्षणाः ॥ १०७ ॥

ननु दुष्टप्रहेलिकाः पूर्व्वाचार्य्यैरुक्तास्त्वयाप्यनन्तरमुच्येर-न्नित्यत्राह । दोषानिति । अपरिसङ्ख्येयानत्यधिकान् तासां दोषान् अत्यन्तशाब्दबोधप्रतिबन्धकत्वरूपान् मन्यमानाः दोष-बाहुल्यादलङ्कारत्वाभावं जानन्त इत्यर्थः साध्वीरेव दोषबा-हुल्याभावेनालङ्कारत्वमापन्नाः समागताद्याः षोडशैवाभिधा-स्याम उदाहरिष्यामः, अत्राभिधानमुदाहरणेन परीक्षा न तूद्देशो लक्षणं वा तयोरुक्तत्वेन अभिधास्याम इतिभविष्यत्प्र-योगानुपपत्तेः । ननु तर्हि शिष्याणां कथं दुष्टप्रहेलिका-परिज्ञानं स्यादित्यत्राह, ता इति । यास्तु प्रहेलिकाः अल-क्षणाः निरुक्तसमागतादिलक्षणशून्याः ता दुष्टाः निरुक्तलक्षण-शून्यसंकेतिकारिवचनं दुष्टप्रहेलिकेत्यर्थः ॥ १०७ ॥

न मयागोरसाभिज्ञं चेतः, कस्मात् प्रकुप्यसि ।
अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥ १०८ ॥

तत्रादृष्टाः षोडश क्रमेणोदाहरन् प्रथमं समागतामुदाहरति । नेति । जनसमाजे मानिनीं गोपीं सान्त्वयतः श्रीकृष्णस्योक्तिरियं । हे आलोहितेक्षणे! कस्मात् प्रकुप्यसि, तव एभिरीदृशैरस्थानरुदितैरलं, यतो मया गोरसो दुग्धादिस्तस्याभिज्ञं चेतो न, अत्र धार्य्यत इत्यध्याहृतेन सङ्गतेन क्रियापदेनान्वयः, तव दुग्धाद्यपचयो मया न कृतः कथं त्वं कुप्यसि रोदिषि चेत्युदासीनबोध्यः संवरणकारी प्रथमोऽर्थः, अत्र सम्भ्रमात् क्रियापदं नोक्तमिति अध्याहृतेन धार्य्यत इति क्रियापदेनान्वयबोधं कुर्व्वन्त उदासीनाः अनेनास्या दुग्धाद्यपचयः कृतस्तदर्थमियं कुपिता रोदितीति जानन्त्विति वाक्यस्य संवरणकारिता, प्रकृतार्थस्तु मे मम चेतः आगोऽपराधः नायिकान्तरसङ्गादि तस्य रसे आस्वादे अभिज्ञं न तद्विदितरां चेतसापि नाकार्षं तत् कथं कुप्यसि मानिनी भवसीति । अत्र मे आगोरसाभिज्ञमित्यत्र सन्धिकार्य्येण एकारस्याथादेशेन मयागोरसेत्यादि जातं तेनैव प्रकृतार्थो गूढः ॥ १०८ ॥

कुब्जामासेवमानस्य यथा ते वर्द्धते रतिः ।
नैवं निर्विशतो नारीरमरस्त्रीविडम्बिनीः ॥ १०९ ॥

वञ्चितामुदाहरति । कुब्जामिति । कान्यकुब्जनगर्यां तत्रत्य नार्यां तादृशं प्रति कस्यचिदुक्तिरियं । कुब्जां भुग्नपृष्ठां काञ्चि-

नारीमामेवमानस्य उपभुञ्जानस्य ते तव यथा रतिरनुरागो वर्द्धते एवं तथा भ्रमरस्त्रीविडम्बिनीर्देवाङ्गनासदृशीर्नारीर्निर्विशत उपभुञ्जानस्य ते रतिर्न वर्द्धते इति प्रथमोऽर्थः। संवरणीयार्थस्तु कुब्जां कान्यकुब्जाख्यनगरीं तत्रत्यरमणीमित्यादिः, अत्र कुब्जाशब्दो भुग्नपृष्ठनार्य्यामेव प्रसिद्धः विवक्षितायां कान्यकुब्जनगर्य्यां तदुत्पन्ननार्य्यां वा न तथेत्यप्रसिद्धार्थस्य निपुणमतिबोध्यतया संवरणम्॥ १०८ ॥

दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके।
मुखं वल्गुरवं कुर्व्वंस्तुण्डेनाङ्गानि घट्टयन्॥ ११०॥

व्युत्क्रान्तामुदाहरति। दण्डेचिति। कर्कशकण्टके पद्मिन्या दण्डे नाले अङ्गानि घट्टयन् घर्षयन् तथा वल्गुरवं कुर्व्वन् हंसः तुण्डेन मुखेन पद्मिन्या मुखं चुम्बतीति योजना, तदियमन्वयबोधहेतोरासत्तिविशेषेणातिक्रमाद्व्युत्क्रान्ता॥ ११०॥

खातयः कनि! काले ते स्फातयः स्फारवल्गवः।
चन्द्रे साक्षाद्भवन्त्यत्र वायवो मम धारिणः॥ १११॥

प्रमुषितामुदाहरति। खातय इति। हे कनि! कन्ये! 'कन्या कनी कुमारी चेति हेमचन्द्रः' ते तव काल्यते प्रक्षिप्यते यः स कालः पादः 'कल प्रेरणे इत्यस्य चौरादिकस्य कर्म्मणि घञि रूपं' तस्मिन् खातयः खमाकाशं खस्यायं गुणः खः शब्द इत्यर्थः, अतनम् अतिः 'अत् सातत्यगमने इत्यस्य भावे इञ्' खस्य शब्दस्य अतिर्गमनं येषु ते तथा शब्दकारिनूपुराद्यलङ्कारा

इत्यर्थः 'क्षुद्रघण्टिका इत्यन्ये' ते स्फातयः स्फायनं स्फाः वृद्धि-रित्यर्थः, तस्या अतिर्गमनं यत्र ते स्फीता इत्यर्थः प्रभूता इति यावत्, तथा स्फां स्फीततामर्हतीति स्फार्हः वल्गनाज्जाता ध्वनि-र्वल्गुः स्फार्हा वल्गुर्येषां ते गमनवशात् तव पादे नूपुराद्यल-ङ्काराः अधिकं शिञ्जितं कुर्व्वन्तीत्यर्थः, चन्दति आह्लादयतीति चन्द्रस्तस्मिन् अत्र ईदृशे सशिञ्जितनूपुराद्यलङ्कारवतीत्यर्थः तव पादे साक्षात् प्रत्यक्षीकृते सति मम वायवः प्राणाः धारिणा-ऽवस्थिता भवन्ति 'धृङ् अवस्थाने इत्यस्य रूपम्। अत्राप्यभिङ्गा-र्थैर्बङ्गभिः पदैः श्रोतॄणां प्रमोषणात् प्रमुषितेयं॥ १११॥

अत्रोद्याने मया दृष्टा वल्लरी पञ्चपल्लवा।
पल्लवे पल्लवे ताम्रा यस्यां कुसुममञ्जरी॥ ११२॥

समानरूपामुदाहरति। अत्रोद्यान इति। वल्लरी लता। अन्वयः सुगमः, अत्रोद्यानत्वेन नायिकाया देहः, वल्लरीत्वेन बाहुः पल्लवत्वेनाङ्गुलयः, कुसुममञ्जरीत्वेन नखा अध्यासिताः, नखानां ताम्रता च ताम्राङ्गुलिसंसर्गात्॥ ११२॥

सुराः सुरालये स्वैरं भ्रमन्ति दशनार्च्चिषा।
मज्जन्त इव मत्तास्ते सौरे सरसि संप्रति॥ ११३॥

परुषामुदाहरति। सुरा इति। सुरा मद्यं तां कुर्व्वन्तीति सुराः शौण्डिकाः 'नामणिडन्तात् सुराशब्दात् पचादित्वाम् डः' यद्वा सुरा एषामस्तीति सुरापायिनः, दशनार्च्चिषा हा-स्येन विवृतमुखतया निःसृतेन दन्तकिरणेनोपलक्षिताः, सुराया

इदं सैरं तस्मिन् सरसि मज्जन्त इव मत्ताः सन्तः सुरालये मद्यगृहे स्वैरं भ्रमन्ति इत्ययं संवरणीयोऽर्थः, अत्र सुरा इति पदं देवसमूह एव प्रकाम् अनुशासनस्याखिलमात्रमवलम्ब्य सुराकारकेषु तत्वायिषु चाप्यकमपि प्रयुक्तं तदियं प्रयोक्तुः पारुष्यप्रकाशनात् परुषा॥ ११३॥

नासिक्यमध्या परितश्चतुर्वर्णविभूषिता।
अस्ति काचित् पुरी, यस्यामष्टवर्णाह्वया नृपाः॥ ११४॥

सङ्ख्यातामुदाहरति। नासिक्यमध्येति। काचित् पुरी नगरी अस्ति कीदृशी नासिक्येत्यादिः, अत्र काञ्ची इति संवरणीयोऽर्थः तथाहि नासिकायां भवो नासिक्यः प्रकृते ञकारः स मध्ये यस्याः सा, तथा परितः सर्व्वतः समुदायत इत्यर्थः चतुर्भिर्वर्णैः क आ च ई इति चतुर्भिरक्षरैः नासिक्यञकारसहितैः पञ्चभिरित्यर्थः, विभूषिता ग्रथिता, ईदृशी काञ्चीत्येव, संज्ञासंज्ञिनोरभेदोपचारात् पुर्य्या विशेषणद्वयं। यस्यां पुर्य्याम् अष्टौ वर्णा अक्षराणि यत्र तादृश आह्वयो नाम येषां तादृशा नृपा आसन्, एतेन पुण्ड्रकनामानो नृपा इत्यायातं पुण्ड्रकशब्दस्य प उ ण ड र अ क अ इत्यष्टभिर्वर्णैर्निबद्धः पुण्ड्रकवंशा नृपाश्च काञ्च्यां पूर्व्वमासन्निति प्रसिद्धिः, अत्र चतुरष्टेति वर्णसङ्ख्यानेन श्रोतृणां मोहनादियं सङ्ख्याता॥ ११४॥

गिरा स्खलन्त्या नम्रेण शिरसा दीनया दृशा।
तिष्ठन्तमपि सोत्कम्पं वृद्धे! मां नानुकम्पसे॥ ११५॥

प्रकल्पितामुदाहरति। गिरेति। हे वृद्धे! स्थविरे! वार्द्धक्येन स्खलन्त्या गिरा नम्रेण शिरसा दीनया दृशा चक्षुषा चोपलक्षिता त्वं सोत्कम्पं तिष्ठन्तमपि मां नानुकम्पसे इति प्रथमोऽर्थः। संवरणीयार्थस्तु हे वृद्धे! ऋद्धे! लक्ष्मीत्यर्थः 'वृद्धिशब्दस्य सम्बुद्धिप्रथमया रूपं, 'ऋद्धिः सिद्धिर्लक्ष्मी वृद्धेरप्याह्वया इमे इत्यमरः' दारिद्र्यात् स्खलद्गीःप्रभृतिभिरुपलक्षितं तथा सोत्कम्पं मां नानुकम्पसे इति, अत्र प्रथमं प्रतीयमानादर्थात्प्रकृतत्वेनार्थान्तरप्रकल्पनादियं प्रकल्पिता॥ ११५॥

आदौ राजेत्यधीराक्षि पार्थिवः कोऽपि गीयते।
सनातनश्च, नैवासौ राजा नापि सनातनः॥ ११६॥

नामान्तरितामुदाहरति। आदाविति। हे अधीराक्षि चञ्चलनयने कोऽपि पार्थिवः पार्थिवशब्दवाच्यः आदौ प्रथम राजा इत्यनेन नाम्ना गीयते कथ्यते तथा स सनातनो नित्यः, इत्ययमप्रकृतोऽर्थः, प्रकृतार्थमुद्भावयन्नाह असौ पार्थिवो वस्तुतो नैव राजा भूपतिः तथा नापि सनातनो नित्यः, तस्मात् कोऽसावुच्यतामिति प्रश्नोऽत्र गम्यः, उत्तरभूतः संवरणीयार्थस्तु कोऽपि पार्थिवः पृथिवीविकारो वृक्षविशेष इत्यर्थः स आदौ प्रथमभागे राजेति गीयते तद्वाचकनाम्नः प्रथमभागे राजा इति शब्दो वर्त्तते इत्यर्थः, तथा सः नातनः तनेतिशब्दशून्यो न, तन्नाम्नोऽन्ते तनशब्दोऽपि वर्त्तते इत्यर्थः तस्मात् राजातनवृक्ष इत्यायातं स च पियालवृक्षः 'राजातनं पियालः

त्यादित्यमरः’ राजातनं राजादनमिति च रूपद्वयम्। अत्र राजातनेति नास्ति वक्तव्ये नानार्थकल्पनादियं नामान्तरिता। लक्षणे नामपदस्य वस्तुपरं न तु संज्ञामात्रपरं बोध्यं, तेन ‘तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः’ अत्र सजलकलसरूपवस्तुनिवक्तव्ये प्रथमं नानार्थकल्पनान्नामान्तरिता। एवं य एवादौ स एवान्ते मध्ये भवतिमध्यमः। अस्यार्थं यो न जानाति तन्मुखे तं ददाम्यहमित्यादावपि, अत्र यवसः प्रतिपाद्यः॥ ११६ ॥

हृतद्रव्यं नरं त्यक्त्वा धनवन्तं व्रजन्ति काः।
नानाभङ्गिसमाकृष्टलोका वेश्या न दुर्द्धराः॥ ११७ ॥

निभृतामुदाहरति। हृतद्रव्यमिति। नानाभङ्गिभिर्बहुविधविदग्धचेष्टाभिः समाकृष्टा वशीकृता लोका याभिस्तादृश्यः काः हृतमपहृतं द्रव्यं धनं यस्य तादृशं नरं पुरुषं त्यक्त्वा धनवन्तं व्रजन्ति भजन्ते, इतिप्रश्नस्य तत्तद्विशेषणसहिता वेश्या एव विषया भवितुमर्हन्ति तन्निषेधेन संवरणीयार्थमुन्नावयति दुर्द्धरा दुःखेन भ्रियमाणाः कथमपि वश्यतामनापाद्यमाना इत्यर्थः, ईदृश्यो वेश्या न वेश्या मम प्रश्नविषया नेत्यर्थः, अतस्ताः का उच्यन्तामिति प्रश्नः, अत्रोत्तरभूतसंवरणीयार्थस्तु पर्व्वतभवा नद्य इति, तथा हि नाना भङ्गास्तरङ्गा विद्यन्तेऽस्येति नानाभङ्गि जलं तेन समाकृष्टा लोका अवतरन्तो याभिस्ताः नानाभङ्गिसमाकृष्टेति पाठे तु भङ्गिशब्दो-

भङ्गुरः, तथा दुर्द्दराः धरः पर्व्वतस्तस्माद्दुर्गताः दर्द्दरोऽगम्य इत्यर्थः धरोधाभिख्या इति वा, द्रुदंधस्तत्सन्निभाभ्या-पल्लवादीनि द्रव्याणि हृतानि येनतथा नीतानि द्रव्याणि यस्य स तथा तं नरं नरसदृशम् 'आश्रयणीयत्वादुगीणप्रयोगोऽयं' पर्व्वतमित्यर्थः, त्यक्त्वा धनवन्तं रत्नाकरं व्रजसीति अत्र विशेषणानामुभयसाधारण्यादेकतरनिषेधेऽन्यतर-प्रतीतिर्युज्यत इति सही प्रतीतिः, तदर्थस्य च तुल्यविशेषण-प्रतीतत्वे सत्यपि वाचकशब्दानुपात्तत्वाच्छिष्टत्वमित्यस्याश्लिष्ट-तेयम् ॥ ११७ ॥

जितप्रकृष्टकेशाख्यो यस्तवाभूमिसाह्वयः ।
स मामद्य प्रभूतोत्कं करोति कलभाषिणि ॥ ११८ ॥

समानशब्दामुदाहरति । जितेति । प्रकृष्ट उत्कृष्टो यः केशस्तस्याख्या तद्वाचकं नाम प्रवाल इत्यर्थः जिता प्रकृष्टकेश'ख्या येन सः, भूमिर्धरा नास्ति भूमिर्यत्र सः अधर इत्यर्थः तेन साह्वयः समाना, तव ईदृशो यः सोऽद्य मां प्रभूतो-त्कमत्युत्कण्ठितं करोति प्रवालसदृशस्तवाधरो मां व्याकुल-यतीत्यर्थः । अत्र प्रकृष्टकेशाख्याभूमिशब्दौ कल्पितलक्षणया प्रवालाधरयोः पर्य्यायौ, तथा हि प्रकृष्टकेशस्य प्रवालशब्दे अभूमिशब्दस्य चाधरशब्दे लक्षणा कल्पितयोश्च तयोः शब्दयोः शक्तिपरेण प्रवालाधररूपार्थयोरुपस्थितिरिति तदियं प्रकृत-प्रयोज्यशब्दस्य समानशब्देनार्थोपस्थापनात् समानशब्दा ॥११८॥

शयनीये परावृत्य शयितौ कामिनौ क्रुधा ।
तथैव शयितौ रागात् स्वैरं मुखमचुम्बताम् ॥ ११९ ॥

संमूढामुदाहरति । शयनीय इति । शयनीये शय्यायां, परावृत्य पराङ्मुखीभूय, तथैव शयितौ परावृत्य शयितावपि, स्वैरं स्वच्छन्दम्, अत्र क्रुधा परावृत्य शयितयोः स्वैरं मुखचुम्बनं दुर्घटमित्यापाततोमोहः । अथ च प्रथमं क्रुधा पराङ्मुखीभूय शयितौ पश्चात्तु रागात् तथैव पुनः परावृत्त्य शयिताविति पराङ्मुखीभूय पार्श्वान्तरेण शयितयोः पुनःपरावर्त्तनेन शयने संमुखीनत्वाच्चुम्बनं सुघटमेवेत्यापातत एव श्रोतृणां मोहजननादियं सम्मूढा ॥ ११९ ॥

विजितात्मभवद्वेषिगुरुपादहतो जनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ १२० ॥

परिहारिकामुदाहरति । विजितात्मेति । विना पक्षिणा गरुडेन जित इन्द्रस्तस्यात्मभवः पुत्रोऽर्ज्जुनः तस्य द्वेषी कर्णस्तस्य गुरुः पिता सूर्य्यः तस्य पादाः किरणाः तैर्हतस्तापितो जनः हिमं आद्यमपहन्तीति हिमापहो वह्निः तस्यामित्रो जलं तद्धरैर्मेघैर्व्याप्तं व्योमाकाशमभिनन्दति प्रशंसति, अत्र यौगिकशब्दमालया प्रकृतार्थबोधनादियं परिहारिका ॥ १२० ॥

न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम् ।
अमनुष्यस्य कस्यापि हस्तोऽयं न किलाफलः ॥ १२१ ॥

उभयच्छलामुदाहरति। नेति। यमनुष्य मनुष्येषु गण्यस्य कदापि हस्तः जातु कदाचिदपि आयुधमसं न स्पृशति न वा जातु वीणां कुलमसन्नं स्पृशति, तथाप्ययं हस्तः किल नाफलः अव्यर्थोन परन्तु सफल एवेत्यापातेनोऽर्थः, अत्रायुधवीणास्पर्शाभावेन नायं वीरो न वा शृङ्गारीति कथमस्य हस्तस्य सफलतेति विरोधेन बाधावतारादमनुष्यपदेन गन्धर्वो लक्ष्यते तस्य हस्तो गन्धर्वहस्त इति समुदायेन एरण्डवृक्षः प्रतिपाद्यते तथाच हारावली 'अमण्डपञ्चाङ्गुलवर्द्धमाना गन्धर्वहस्तत्रिपुटीफलस्वेति। तस्य फलं विद्यत एवेत्याश्रितं फलमेव व्यक्तं न त्वाश्रयो वृक्षस्तदियमेकच्छला॥ १२१॥

केन कः सह सम्भूय सर्व्वकार्य्येषु सन्निधिम्।
लब्ध्वा भोजनकाले तु यदि दृष्टो निरस्यते॥ १२२॥

उभयच्छलामुदाहरति। केनेति। कः पदार्थः केन पदार्थेन सह सम्भूय मिलित्वा सर्व्वकार्य्येषु सन्निधिं सन्निकर्षं लब्ध्वा च भोजनकाले तु यदि दृष्टः स्यात्तदा निरस्यते निःसार्य्यते इत्ययं प्रश्नः, उत्तरन्तु केन मस्तकेन सम्भूय कस्य मस्तकस्यायं कः केशः इत्यर्थः इदमर्थे टण्। स च सर्व्वकार्य्येषु सन्निधिं लब्ध्वा भोजनकाले दृष्टो निरस्यत एवेति, अत्राश्रयाश्रितयोर्मस्तककेशयोरुभयोरेव च्छन्नत्वमितीयमुभयच्छला॥ १२२॥

सहया सगजा सेना सभटेयं न चेज्जिता।
अमात्रिकोऽयं मूढः स्यादक्षरज्ञश्च नः सुतः॥ १२३॥

सङ्कीर्णामुदाहरति। सहयेति। सहया हयैरश्वैः सहिता, तथा सगजा गजैर्हस्तिभिः सहिता तथा सभटा भटैर्योधैः सहिता इयं शत्रुसम्बन्धिनी सेना चमूः चेद्यदि न जिता पराभूता स्यात् तदा सोऽस्माकमयं सुतः अचरज्ञस्य अचरं ब्रह्म तज्ज्ञोऽपि मूढो मूर्ख एव स्यात्, तत्र हेतुः यतोऽयममात्रिकः मीयन्त इति मात्राविषयाः ता अर्हतीति मात्रिकस्तद्भिन्नः ब्रह्मज्ञोऽपि वैषयिकबुद्ध्यभावेन मूर्खत्वेनैव गण्यः स्यादित्यापातिकोऽर्थः, संवरणीयार्थस्तु हकारेण यकारेण च गकारेण जकारेण च भकारेण टकारेण च सहिता इयं सेना वर्त्तमाना इनः स्थावरजङ्गमानां प्रभुर्ब्रह्मा तेन सहिता ब्रह्मणैव सृष्टेत्यर्थः, 'धाताचराणि सृष्टानि पश्चाद्रुढान्यतः पुरेति स्मरणात्' न चेज्जिता अभ्यस्ता तदा अमात्रिको मात्रा अचरस्तज्ज्ञानरहितोऽयं नः सुतः न चरतीत्यचरो वेदस्तज्ज्ञोऽपि मूढ एव स्यात् अभ्यस्तवेदोऽपि वर्णपरिज्ञानशून्यत्वेन्मूर्ख एवेत्यर्थः। यद्वा जिता लिखितुं शक्ता, अचरज्ञा वर्णज्ञः वर्णपरिज्ञानवानपि यदि हकारयकारादिवर्णलिखनानभिज्ञस्तदामूर्ख एवेत्यर्थः ॥ १२३ ॥

सा नामान्तरितामिश्रा वञ्चिताद्युपयोगिनी।
एवमेवेतरासामप्युन्नेयः सङ्करक्रमः ॥ १२४ ॥

॥ प्रहेलिकाचक्रम् ॥

॥ इति शब्दालङ्काराः ॥

अत्र साङ्कर्य्यमुपपादयति । सेति । सा पूर्व्वोक्तेयं नामान्तरितामिश्रा द्वयादिशब्दानां नामार्थकल्पनान्नामान्तरिताख्यप्रहेलिकालक्षणयुक्ता । तथा सेनाशब्दस्य चमूरूपेऽवितथितेऽर्थे प्रसिद्धत्वेन प्रथमं तदर्थप्रतिपत्त्या वञ्चनात् वञ्चिताख्यप्रहेलिकायाः स्वरूपसम्बन्धवती च । एवमेव अनया दिशा, इतरासां समागतादीनाम्, उन्नेयः स्वयं ज्ञातव्यः । अत्र च द्वयोः साङ्कर्य्यं दर्शितं त्रिचतुःप्रभृतीनामप्येवं साङ्कर्य्यं स्वयं बोध्यम् ॥ १२४ ॥

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम् ॥ १२५ ॥
देशकालकलालोकन्यायागमविरोधि च ।
इति दोषा दशैवेते वर्ज्ज्याः काव्येषु सूरिभिः ॥ १२६ ॥

एवं काव्यस्योपादेयधर्म्मा गुणा अलङ्काराश्च सपरिकर निरूपिताः, अथ 'दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसती'त्यादिसन्दर्भेण तदीयहेयधर्मतया प्रतिपादितेषु दोषेषु अग्निपुराणादिप्राचीननिबन्धरीत्या गुणालङ्काररूपोपादेयधर्म्मनिरूपणानन्तरमेव निरूपयितव्येषु श्रुतिकटुत्वाद्यतिप्रभृतानामेषां कार्त्स्न्येन निरूपणं ग्रन्थबाहुल्यमापादयेत् येनाच शिष्याणामप्रवृत्तिः स्यादित्याशङ्कमानोऽलङ्कारपरिच्छेद एवास्मिन् प्रयोक्तृत्यन्तानभिज्ञतासूचकतया नितान्तपरित्याज्यानेव दशविधांस्तान् निरूपयितुमुद्दिशति । अपार्थमिति । यद्यपि

सामान्यलक्षणानन्तरमेव विशेषाणां निरूपणमुचितं तथापि दोषपदस्य स्फुटार्थत्वेन योगबलादेव सामान्यलक्षणपरिज्ञानात्तदप्रतिपाद्यैव विशेषा दर्शिताः। तथाहि काव्यं दुष्यति विकृतं भवतीत्यनेनेति व्युत्पत्त्या दुष् वैकृत्ये इत्यस्य करणघञा दोषपदं सिद्धं, प्रकाशकृद्भिस्तु मुख्यार्थहतिर्दोष इत्यनेनास्य भावघञन्तता सूचिता, वैकृत्यञ्चापकृष्टत्वं ततश्च काव्यस्यापकर्षकोऽपकर्षो वा दोष इति सामान्यलक्षणम्। अपकर्षश्च कचिच्छब्दस्य कचिदर्थस्य कचिच तद्वाक्यरसादेरिति त्रितयवृत्तितया तेषां त्रिविधत्वं बोध्यम्। अत्रापार्थमित्यादिशब्दानां नपुंसकत्वाद्वाक्यमेव विशेष्यं तत्रापार्थत्वादिसम्बन्धश्च कचित् साक्षात् कचित् परम्परयाच बोध्यः। इतीति इत्येते दशैव नतु श्रुतिकटुत्वादयः वर्ज्या अत्यन्तं त्याज्याः शाब्दबोधविघटकत्वादिना प्रयोक्तुरत्यनभिज्ञताप्रकाशकत्वात्, श्रुतिकटुत्वादयस्तु किञ्चिद्वैरस्यमात्रजनका नत्वन्वयबोधप्रतिकूला इति नात्यन्तं त्याज्याः ॥ १२५ ॥ १२६ ॥

प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ।
विचारः कर्कशः प्रायस्तेनालीढेन किं फलम् ॥ १२७ ॥

ननु दशैवेति कथमवधारणं न्यायावयवानां प्रतिज्ञादीनां हानिरपि विवक्षितार्थाप्रतिपत्त्या वस्तुतो दोष एव, अतएव भगवता गोतमेन 'प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोध' इत्यादि सूत्रेण प्रतिज्ञाहान्यादीनां निग्रहस्थानत्वमुक्तं, भामहप्रभृतयस्तु तस्य दोषतां नेच्छन्ति यथा 'प्रतिज्ञाहेतुदृष्टान्त-

हीनं दृष्टञ्च नेष्यत इति, तत् किमत्र तत्त्वमिति पर्य्यनुयुक्त इव प्रकृते निष्प्रयोजनत्वात्तद्विवेकमुपेक्षमाण आह। प्रतिज्ञेति। साध्यनिर्द्देशः प्रतिज्ञा, साध्यसाधनं हेतुः, प्रसिद्धोदाहरणोपन्यासो दृष्टान्तः, एषां हानिर्द्दोषः काव्यापकर्षको न वा इत्यस्मिन् संशये असौ पर्य्यनुयुज्यमानो विचारो विवेकः एकतरावधारणमित्यर्थः प्रायः कर्कशो न्यायविषयकत्वात् कठिनः, यद्वा कर्कशो नीरसः निष्प्रयोजन इत्यर्थः, अतश्च आलीढेनास्वादितेन परिज्ञातेनेत्यर्थः तेन विचारेण किं फलं सम्यक् फलं नास्तीत्यर्थः, अयमाशयः वैरस्यजनकत्वेन दोषाणां परिज्ञानं स्वत एव बोद्धृणां सम्भवति तदर्थञ्च ग्रन्थपल्लवनमनुचितं केवलं काव्येष्वत्यन्तपरिहार्य्या एव ते कतिपये दर्श्यन्ते न च प्रतिज्ञादिहानेरत्यन्तपरिहार्य्यत्वम् अप्रतिज्ञातानां प्रासङ्गिकादिसाध्यानामपि कविवर्णितत्वदर्शनात्। निर्हेतुता च प्रसिद्धसाध्ये वैरस्यं नावहति यथा 'सम्प्रति सन्ध्यासमयश्चक्र-द्वन्द्वानि विघटयतीत्यादौ, दृष्टान्तोपन्यासस्त्वलङ्कारकप ऽवात तद्धानिरपि नात्यन्तवैरस्यजनिका अतएव 'दृष्टान्तस्य सामयिकत्वेनासार्व्वत्रिकत्वेऽपि न क्षतिरिति न्यायसूत्रवृत्तिकृताक्तं तस्माद्यत्र वैरस्यजनकत्वं तत्र दोषत्वं यत्र न तथा तत्र न तथा न पुनः शाब्दबोधविघटकत्वाद्यभावादेकान्तपरिहार्य्यता एवं प्रतिज्ञाविरोधादयोऽपि ज्ञेयाः, तत्र प्रतिज्ञाविरोधो यथा कण्ठाभरणे 'यावज्जीवमहं मौनी ब्रह्मचारी पिता मम। माता च मम वन्ध्यासीदपुत्रश्च पितामहः' इति॥ १२७॥

समुदायार्थशून्यं यत्तदपार्थमितीष्यते ।
उन्मत्तमत्तबालानामुक्तेरन्यत्र दुष्यति ॥ १२८ ॥

संप्रत्युद्दिष्टान् दोषप्रभेदान् क्रमेण लक्षयति । समुदायार्थशून्यमिति । समुदायो वाक्यघटकपदसमूहः, महावाक्यघटकवाक्यसमूहश्च तस्यार्थो विशेषणविशेष्यभावेनान्विततया एकत्वेन प्रतीयमानः प्रतिपाद्यः, तच्छून्यं यद्वाक्यं महावाक्यं वा तदपार्थम् अपार्थत्वाख्यदोषवदिष्यत इत्यन्वयः, यत्र पदार्थानां वाक्यार्थानां वा योग्यताकाङ्क्षासत्त्यभावेन विशेषणविशेष्यत्वेनान्वयो बाधितो भवति तदपार्थत्ववदित्यर्थः । अथ क्वचिददोषत्वमपि दर्शयति, उन्मत्तेति । उन्मत्ता उन्मादरोगवन्तः, मत्ता मद्यपानादिना प्राप्तविकाराः, बालाः शिशवः, प्रमत्तोन्मत्तबालानामिति पाठे प्रमत्ता मद्योपयोगादिनानवधाना इत्यर्थः, एषामुक्तेरन्यत्र अनुन्मत्तादीनामुक्तौ दुष्यति वाक्यं महावाक्यं वा दुष्टं भवति उन्मत्ताद्युक्तौ तस्य न दोषत्वमित्यर्थः ॥ १२८ ॥

समुद्रः पीयते देवैरहमस्मि जरातुरः ।
अमी गर्ज्जन्ति जीमूता हरेरैरावणः प्रियः ॥ १२९ ॥

तत्र वाक्यगतमपार्थत्वमुदाहरति । समुद्र इति । देवैर्मेघैः सुरैर्वा, देवैरित्यत्र सोऽयमिति क्वचित् पाठः । अत्र स्वार्थबाधपरिसमाप्तस्यापि वाक्यचतुष्टयस्याकाङ्क्षाभावेनाकाङ्क्षित्वविरहादेकवाक्यत्वाभावस्तत एव समुदायार्थो नास्ति,

यदुक्तं 'स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत इति । एवं योग्यताद्यभावेऽपि समुदायार्थशून्यत्वं ज्ञेयं, तथा बह्लपदगतमपि यथा 'वह्निना सिञ्चति, गौरश्वः पुरुषो हस्तीत्यादि ॥ १२८ ॥

इदमस्वस्थचित्तानामभिधानमनिन्दितम् ।
इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम् ॥ १३० ॥

उन्मत्तेत्याद्युक्तमनुवदन् दोषस्यातिगुरुत्वं प्रतिपादयति । इदमिति । अस्वस्थचित्तानामुन्मादादिभिर्निर्विवेकमनसाम्, इदमेवं समुदायार्थशून्यमभिधानं वचनम् अनिन्दितं शिष्टैर्निन्दितत्वेन परिगृहीतं न भवति प्रयोक्तुरनवहितत्वात्, इतरत्र अस्वस्थचित्तप्रयुक्तभिन्ने, एवमनाकाङ्क्षत्वादिकं, यद्वा इतरत्र उन्मत्तादिभिन्नेषु मध्ये को वा कविः पण्डितः सचेता इत्यर्थः, वस्तुतस्तु इतरस्त्विति पाठः सम्यक् । को वा प्रयुञ्जीतेति एतेन समुदायार्थशून्यवाक्यस्य सचेतःप्रयुक्तत्वासम्भवप्रतिपादनेन कथञ्चित् प्रयोगे वैरस्यातिशय इति सूचितम्, अतएव दोषस्यास्य प्रथमोपन्यास इति बोध्यम् ॥ १३० ॥

एकवाक्ये प्रबन्धे वा पूर्व्वापरपराहतम् ।
विरुद्धार्थतया व्यर्थमिति दोषेषु पठ्यते ॥ १३१ ॥

व्यर्थं लक्षयति । एकवाक्य इति । एकस्मिन् वाक्ये तथा प्रबन्धे वाक्यसमूहे वा यत्पदं वाक्यं वा पूर्व्वापरपराहतं पूर्व्वापर-

सङ्गतिशून्यं तद्व्यर्थं व्यर्थत्वदोषवदिति कृत्वा दोषेषु दोषवत्सु मध्ये पश्यते इत्यन्वयः, यद्वा पूर्व्वापरपराहतं पूर्व्वापरसङ्गति शून्यत्वमिति व्यर्थं व्यर्थत्वमिति च धर्म्मपरोऽयं निर्द्देशः सप्तमी-दयश्च षष्ठ्यर्थे तत्र हेतुरदन्ततेत्यादिवत्, ननु वर्णकदम्बात्मकयोर्वाक्यप्रबन्धयोः कथं परस्परमसङ्गतत्वसम्भव इत्यत्राह विरुद्धार्थतयेति वाक्यप्रबन्धयोः पूर्व्वापरविरुद्धार्थप्रत्यायकत्वं व्यर्थत्वाख्योदोष इत्यर्थः एतेनात्र विपदं विरुद्धार्थकं नतु विगताद्यर्थकमिति सूचितम्। अर्थविरोधप्रतीतिश्चात्र शाब्दबोधानन्तरं पर्य्यालोचनया, अपार्थेतु आकाङ्क्षाद्यभावाच्छाब्दबोध एव न सम्भवतीत्यनयोर्भेदः, एकवाक्ये प्रबन्धेवेत्यनेन च वाक्यप्रबन्धार्थपर्य्यालोचनयैव विरोधप्रतिभासोऽस्य विषयः प्रकरणादिपर्य्यालोचनया विरोधप्रतिभासस्तु वक्ष्यमाणदेशकालादिविरोधविषय इति सूचितं। अस्यात्यन्तवर्ज्ज्यता च प्रयोक्तुरत्यनभिज्ञताप्रकाशकत्वात्, अत्रैवान्यैरुक्ता विरुद्धमतिकारित्वप्रकाशितविरुद्धत्वामतपरार्थत्वपरिपन्थिरसाङ्गपरिग्रहादयो दोषा अन्तर्भवन्ति ॥ १११ ॥

जहि शत्रुबलं कृत्स्नं जय विश्वम्भरामिमाम् ।
तव नैकोऽपि विद्वेष्टा सर्व्वभूतानुकम्पिनः ॥ १३२ ॥

तत्र प्रबन्धगतव्यर्थत्वमुदाहरति। जहीति। अत्र शत्रु-मात्रशून्यस्य कृत्स्नशत्रुबलहननं सर्व्वभूतानुकम्पिनः सर्व्वलोक-जयश्च पूर्व्वापरपर्य्यालोचनया विरुद्धत्वेन प्रतीयते। एवं वा-

क्यगतं बोध्यम्। तत्र नैकोऽपीत्यत्र न च ते कोऽपीति क्वचित् पाठः ॥ १३२ ॥

अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः।
यस्यां भवेदभिमता विरुद्धार्थापि भारती ॥ १३३ ॥

वक्तृविशेषस्योक्तौ विरुद्धार्थत्वस्य गुणत्वं दर्शयति। अस्तीति। साभिषङ्गस्य वियोगाद्यभिभूतस्य, साभिलाषस्येति पाठस्तु न सम्यक्, काचिदिलक्षणा दशानिद्रेणोपादेयात्मकत्वात्मकार्ति- विवेकशून्येत्यर्थः, अवस्था अस्ति भवति, यस्यामवस्थायां वर्त्त- मानस्य प्रयोक्तुर्विरुद्धार्थाऽपि पूर्व्वापरपराहतापि भारती अभिमता श्रोतॄणामादृता भवेत्, अभिमतेत्यनेन न केवल- मस्यादोषत्वं किन्तु गुणत्वमपीति सूचितम् ॥ १३३ ॥

परदाराभिलाषो मे कथमार्य्यस्य युज्यते।
पिवामि तरलं तस्याः कदा नु दशनच्छदम् ॥ १३४ ॥

उदाहरति। परदारेति। तरलं लज्जावशात् मत्वाद- र्थादा सकम्पं, तस्याः परकान्तायाः, दशनच्छदमधरम्। अत्र स्वस्यार्य्याभिमानितया परदाराभिलाषस्यायुक्तत्वं प्रति- पादयत एव प्रयोक्तुः परदाराधरपानाशंसनमिति पूर्व्वार्द्धु- व्यङ्गस्य शान्तव्यभिचारिणोमत्याख्यभावस्य उत्तरार्द्धव्यङ्गेन शृङ्गारव्यभिचारिणौत्सुक्येन सह यद्यपि विरोधः प्रयोक्तु- र्वियोगाभिभूतत्वव्यञ्जकतया शृङ्गारपोषकत्वात् कमपि चम-

त्कारमावहतीति गुण एव, अत्र द्वयोर्विरोधः, एवमेकत्र बहूनां विरोधे चमत्कारातिशयः यथा 'क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा, दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम्। किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा, चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति'। इत्यत्र शान्ताङ्गानां वितर्कमतिशङ्काधृतीनां विप्रलम्भाङ्गैरौत्सुक्यस्मृतिदैन्यचिन्ताभिः सह सन्नपि विरोधः प्रत्युतिर्विरहाभिभूतत्वव्यञ्जनात् शृङ्गारप्रकर्षमाविर्भावयति। तच्चास्त्वेवंविधस्थले विरुद्धानां बाध्यबाधकतानुगुणत्वमित्याह, यथा 'मत्स्यार्थ्यादेर्विरुद्धस्य बाध्यत्वेन वचोगुण' इति ॥ १३४ ॥

अविशेषेण पूर्व्वोक्तं यदि भूयोऽपि कीर्त्त्यते।
अर्थतः शब्दतोवापि तदेकार्थं मतं यथा ॥ १३५ ॥

एकार्थं लक्षयति। अविशेषेणेति। पूर्व्वोक्तमिति सामान्यत्वान्नपुंसकम्। अर्थतः शब्दत इति प्रथमान्तम्, अत्र यत्रेत्यध्याहार्य्यं, तदयमन्वयः, पूर्व्वोक्तोऽर्थः शब्दो वा यत्र वाक्ये यद्यविशेषेण भूयोऽपि कीर्त्त्यते तदा तद्वाक्यम् एकार्थम् एकार्थत्वाख्यदोषवन्मतं, यद्वा अर्थतः शब्दत इति च सप्तम्यन्तम् एकार्थमित्यनेनान्वितम् अर्थनिष्ठं शब्दनिष्ठञ्चैकार्थमित्यर्थः। अविशेषेणेति एकरूपेणेत्यर्थः, यद्वा विशेषविवक्षाया अभावेन यत्र विशेषविवक्षार्थमुक्तस्य पुनःकीर्त्तनं तत्रास्य न दोषत्वं विशेषस्य प्रस्तुतस्यानुकम्पनीयत्वादि एतच्चानन्तरमेव व्यक्ती-

भविष्यति, अर्थतः शब्दतोवेत्यनेनान्येनोक्तस्य पौनरुक्त्याख्यार्थदोषस्य कथितपदत्वाख्यशब्ददोषस्य च द्वयोरेवैकार्थसंज्ञया संग्रहः सूचितः, न च शब्दपौनरुक्त्ये कथमेकार्थेति यौगिकसंज्ञाप्रवेशः गुणदोषालङ्कारसंज्ञानां प्रायेण योगबलादेव प्रवृत्तेरिति वाच्यं शब्दपदस्य तदर्थकशब्दपरत्वात् अतएव भिन्नार्थकशब्दपौनरुक्तस्य वैरस्यानावहत्वान्नदोषत्वं यथा 'सुरा विप्रैः सुरा नीचैः सेव्यन्ते भक्तिभावतः। विप्राणान्तु फलं दूरे नीचानान्तु तदैव हि' इत्यादौ सुरा इति पदं पुनरुक्तमपि सुरा देवाः सुरा मद्यानीति विभिन्नार्थकत्वेन न दूषणमावहति तस्मादर्थस्य एकार्थकशब्दस्य वा पुनरुक्तत्वमेकार्थत्वं, यत्र शब्दभेदस्तत्रार्थमात्रस्य पौनरुक्त्यं यत्र तु तदभेदस्तत्र द्वयोरपीति निष्कर्षः॥ १३५॥

उत्कामुन्मनयन्त्येते बालां तदलकत्विषः।
अम्भोधरास्तडित्वन्तो गम्भीराः स्तनयित्नवः॥ १३६॥

तत्रार्थगतमेकार्थत्वमुदाहरति। उत्कामिति। उत्कामुत्कण्ठिताम्, उन्मनयन्ति उद्दीपकत्वादुत्कण्ठयन्ति, अत्रोत्कोन्मनःशब्दयोः, अम्भोधरतडित्वत्स्तनयित्नुशब्दानाञ्च स्वरूपभेदेऽप्येकपर्य्यायत्वेनैकार्थशक्तत्वादर्थस्य पौनरुक्त्यम्, एवं पर्य्यायान्तरानुपादानेऽपि प्रकारान्तरेण पूर्व्वोक्तार्थस्य पुनःप्रतीतावप्यस्य सद्भावो ज्ञेयः, यथा 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्व-

यमेव सम्पद इति, अत्र द्वितीयार्द्धं व्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तत्वमेव, यदि तु उत्कामुन्मनयन्तीत्यस्य विरहेणोत्कण्ठितामपि अम्भोधराः पुनरुद्दीपकतया अत्युत्कण्ठितां कुर्व्वन्तीत्यत्र तात्पर्य्यम् एवमम्भोधरादीनामेकस्यैव समुदायार्थशक्तस्य विशेष्यतायामन्ययोश्चावयवार्थशक्तयोर्विशेषणतायां तात्पर्य्यं तदार्थभेदान्नास्य सद्भाव इति बोध्यम्, यथा 'सा त्रियामा तदार्त्तस्य चन्द्रमण्डलमण्डिता। राज्ञो विलपमानस्य न व्यभासत शर्व्वरी'। अत्र त्रियामाशर्व्वरीशब्दयोरेकपर्य्यायत्वेऽप्यवयवार्थशक्तत्वमङ्गीकृत्य त्रियामाशब्दः शर्व्वरीविशेषणत्वेनोपन्यस्तः। अत्र शब्दभेदादर्थत एव पुनरुक्तत्वं। शब्दतो यथा 'अधिकरतलतल्पं कल्पितस्वापलीला परिमलननिमीलत्पाण्डिमा गण्डपाली। सुतनु! कथय कस्य व्यञ्जयत्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकम्' अत्र लीलाशब्दः पुनरुक्तः॥ १३६ ॥

अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते।
न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया॥ १३७ ॥

अविशेषेणेत्युक्तस्य प्रयोजनं दर्शयन् दोषमिमं प्रतिप्रसूते। अनुकम्पेति। अनुकम्पाद्यतिशयः प्रस्तुतस्यानुकम्पनीयत्वादिविशेषः, आदिना विधेयानुवादादिपरिग्रहः, तदुक्तं गुण इत्यनुवृत्तौ दर्पणकृता 'कथितञ्च पदं पुनः। विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि। दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसा-

दने । अर्थान्तरसंक्रमितवाच्ये सर्वेऽवधारणे' इति । एवमुक्त-न्तायुक्तावपि पौनरुक्त्यस्य गुणत्वं ज्ञेयं, यथा मृच्छकटिके शकारोक्तौ 'मम मअणमणङ्गं मम्मह वड्डअन्तीत्यादि, एवं धनुर्ज्याकर्णावतंसादयोऽप्युत्कृष्टत्वादिविशेषविवक्षया न दुष्टाः । न दोषो न दूषणावहः, पुनरुक्तः शब्दोऽर्थो वा, इयं पुनरुक्तिः, अलङ्क्रिया गुण एव काव्यशोभाजनकत्वात्, अनुप्रासालङ्कार इति केचित् ॥ १३७ ॥

हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥ १३८ ॥

तत्रानुकम्पायामुदाहरति । हन्यत इति । अत्र हन्यत इति पदं पुनःपुनरुक्तं सत् प्रस्तुतस्यानुकम्पनीयत्वख्यापनया कमपि चमत्कारमावहत् काव्यशोभां जनयति । एवं विधेयानुवादादौ ज्ञेयं, यथा 'उदेति सविता ताम्रस्ताम्र एवास्तमेति चेत्यादि ॥ ॥ १३८ ॥

निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत् ।
वचांसि, दोष एवासौ ससंशय इति स्मृतः ॥ १३९ ॥

ससंशयं लक्षयति । निर्णयार्थमिति । निर्णयार्थं वाक्यस्य प्रवृत्तिनिवृत्त्यन्यतरनिश्चयाय, संशयार्थं प्रयुक्तस्य संशयजनकत्वं तु न दूषणमित्ययं वक्ष्यते । संशयमुभयकोटिकज्ञानं, वचांसीति बहुवचनमविवक्षितम् एकपदस्य पदद्वयस्य वा संशय-

जनकत्वे दूषणसम्भवात्, चेदित्यत्र यदिति पाठः सम्यक्, ससंशयः ससंशयत्वाख्यः, अयमपि दोषः शब्दगतोऽर्थगतश्च, यत्र संशयोत्पत्त्यान्वयबोधो विहन्यते तत्र शब्दगतः यथोदाहरिष्यते, यत्र त्वर्थप्रतीत्यनन्तरं वक्त्राद्यनिश्चयस्तत्रार्थगतः यथा'मात्सर्य्य-मुत्सार्य्य विचार्य्य कार्य्यमार्य्याः समर्य्यादमुदाहरन्तु। सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्'। अत्रप्रकरणाद्यभावात् शान्तशृङ्गारिणोः को वक्तेति संशयः॥ १३९ ॥

मनोरथप्रियालोकरसलोलेक्षणे सखि! ।
आराद्वृत्तिरसौ माता न क्षमा द्रष्टुमीदृशम् ॥१४०॥

शब्दगतं ससंशयमुदाहरति। मनोरथेति। जारं सानुरागं पश्यन्तीं मातुः परिज्ञानशङ्कया च चकितां प्रति सख्या उक्तिरियं। मनोरथप्रियोऽभिलषितप्रेयान् जार इत्यर्थः, तस्यालोके दर्शने रसेनानुरागेण लोले व्यापृते ईक्षणे यस्याः सा तथा तत्सम्बोधनम्, आरादिति अत्र किम् 'आराद्दूरसमीपयोरित्यभिधानादाराद्वृत्तिर्दूरवर्त्तिनी ते माता विषयविप्रकर्षादीदृशं त्वदीयजारदर्शनरूपकर्म्म द्रष्टुं न क्षमा शक्ता तत् प्रवर्त्तस्वेत्यर्थः, किम्वा समीपवर्त्तिनी ईदृशमसमञ्जसं कर्म्म द्रष्टुं न क्षमा तन्निवर्त्तस्वेत्यर्थः! इत्येकतरनिश्चयाभावात् संशयः, अयञ्च नानार्थशब्दप्रयोगनिबन्धन इति शब्दगतः, अर्थगतस्तु पूर्व्वं दर्शितः॥ १४० ॥

ईदृशं संशयायैव यदि वातु प्रयुज्यते ।
स्यादलङ्कार एवासौ न दोषस्तत्र तद्यथा ॥ १४१ ॥

अस्य कश्चिद्गुणत्वमपि दर्शयति । ईदृशमिति । यदि वा तु ईदृशं संशयजनकमपि वाक्यं संशयायैव संशयप्रतिपादनमुद्दिश्यैव प्रयुज्यते तदा तथाभी संशयोऽलङ्कार एव शोभाजनक एव गुण एवेत्यर्थः संशय एव यदि प्रतिपाद्यमानतया विवक्षितः तदासौ गुण एवेत्यर्थः, एवञ्चाविवक्षितः संशयो दोषो विवक्षितस्तु गुण इत्यर्थः । तत् तस्योदाहरणं । वान्तित्यत्र आन्तिति कश्चित्पाठः ॥ १४१ ॥

पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।
कालेनैव कठोरेण ग्रस्तां किं नस्त्वदाशया ॥ १४२ ॥

पश्यामीति । नायकं प्रति दूत्या उक्तिरियं । अनङ्गः कामः तज्ज आतङ्कः पीडा तेन लङ्घितामाक्रान्तां तां कठोरेण निर्दयेन कालेन मृत्युनैव ग्रस्तां पश्यामि त्वदाशया तव प्रत्याशया नोऽस्माकं किं, सा कामपीडया म्रियते किं तव प्रत्याशयेत्यर्थः किं श्लोकस्यास्य प्रतिपाद्यः, किम्वा अनङ्गजातेनातङ्केन लङ्घिता या तल्लङ्घितां तां कठोरेण दुःसहेन कालेनैव केवलं ग्रीष्मसमयेन ग्रस्तां पीडितां पश्यामि त्वदाशया नः किं, तस्याः शारीरिकी कापि पीडा नास्ति किन्तु केवलं त्वामनासादयन्ती चिन्ताजागरणपरा ग्रीष्मेण पीड्यते इत्ययं प्रतिपाद्यः, इत्येष संशयः स च दूत्या विवक्षित इति गुण एव । किं नस्त्वदाशयेत्यत्र किन्नु त्वदाशयेति, किं नत्वदाशयेति च पुस्तकान्तरेषु पाठः ॥
॥ १४२ ॥

कामार्त्ता धर्म्मतप्ता वेत्यनिश्चयकरं वचः।
युवानमाकुलीकर्त्तुमिति दूत्याह नर्म्मणा॥ १४३॥

अत्र संशयस्य विवक्षितत्वं प्रतिपादयति। कामार्त्तेति। संशयस्य विवक्षितत्वे हेतुर्युवानमाकुलीकर्त्तुमिति, कामपीडां ग्रीष्मपीडां वा बुद्धा नायकोऽयं व्याकुलीभूय तत्समीपं गमिष्यतीति विविच्य दूत्या तादृशं संशयजनकवाक्यं प्रयुक्तमिति भावः, एतदुपलक्षणं व्याजस्तुतिपर्य्यवसानादावपि संशयस्य गुणत्वं यथा 'पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव!। विलसत्करेणुगहनं संप्रति सममावयोः सदनम्'। अत्राढ्यो वा दरिद्रो वा वक्तीति संशयः वाक्यस्य च व्याजस्तुतौ पर्य्यवसानम्॥ ॥ १४३॥

उद्देशानुगुणोऽर्थानामनूद्देशो न चेत् कृतः।
अपक्रमाभिधानं तं दोषमाचक्षते बुधाः॥ १४४॥

अपक्रमं लक्षयति। उद्देशानुगुण इति। अर्थानां प्रथममुपन्यास उद्देशः तस्यानुगुणोऽनुरूपः समन्वययोग्य इत्यर्थः अनूद्देशः पश्चादुद्देशः क्रमः स चालङ्कारतया पूर्व्वमुक्तः, स चेन्न कृतस्तदा तं क्रमलङ्घनरूपत्वादपक्रमाभिधानं दोषं बुधाः कथयन्ति, क्रमिकाणां क्रमिकैरेवान्वय इति नियमः तल्लङ्घनादन्वयबोधमान्थर्य्यमत्र दूषकताबीजं बोध्यम्, अतएवास्यात्यन्तपरिहार्य्यमध्ये गणनं, नचैरङ्गीकृतयोः शब्दार्थदोषयोरक्रमत्वदुष्क्रमत्वयोरस्तु न शाब्दबोधविघटकत्वमिति नात्यन्तपरि-

हार्य्यता यथा 'समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् । शरदि हंसरवाः परुषीकृतस्वरमयूरमयूरमणी-यताम्' इति । अत्र परामृश्यमानवाक्यानन्तरं हि इतिशब्दः प्रयुज्यत इति क्रमः, अत्र तल्लङ्घनादक्रमता सा च व्यवहित-योजनयान्वयसम्भवेन नात्यन्तपरिहार्य्या । एवं 'देहि मे वा-जिनं राजन् गजेन्द्रं वा मदालसमिति । उत्कृष्टं हि वस्तु प्रथमं याचनीयं तद्दाने दातुरशक्तौ ततो न्यूनं याचनीयमिति क्रमः स चात्र गजेन्द्रान्न्यूनस्य वाजिनः प्रथमयाचनाल्लङ्घित इति दु-ष्क्रमता सा चान्वयस्य निर्बाधप्रवृत्त्या नात्यन्तपरिहार्य्या ॥ ॥ १४४ ॥

स्थितिनिर्म्माणसंहारहेतवो जगतामसी ।
शम्भुनारायणाम्भोजयोनयः पालयन्तु वः ॥ १४५ ॥

अपक्रममुदाहरति । स्थितीति । अत्र प्रथममुद्दिष्टानां स्थितिनिर्म्माणसंहाराणां हेतुत्वेनान्वययोग्या नारायणाम्भो-जयोनिशम्भव एव क्रमेणानुद्देष्टुमुचिता इति तादृशोपन्यास-क्रमातिक्रमादपक्रमता । न चात्तरोत्तरस्य बह्वच्त्वात् परभावो युक्त इति वाच्यं क्रमान्वयानुरोधेनान्वययोग्यस्वल्पस्वरविष्णवा-दिपदोपन्यासस्यैव कवेरौचित्यात् तादृशपदानाञ्च सौलभ्यात् ॥ १४५ ॥

यत्नः सम्बन्धविज्ञानहेतुकोऽपि कृतो यदि ।
क्रमलङ्घनमप्याहुः सूरयो नैव दूषणम् ॥ १४६ ॥

अस्यादोषत्वमपि दर्शयति । यत्र इति । सम्बन्धः कस्मिंश्चिदेकस्मिन् पदार्थे अक्रमिकयोरप्युभयोः सम्बन्धित्वं तस्य विज्ञानं विशेषेण ज्ञानं तद्धेतुर्यस्य तादृशो यत्नः प्रयासो यद्यपि कविना कृतः स्यात्तदा क्रमलङ्घनमपि दूषणं नैव भवतीति सूरय आहुरित्यन्वयः, एकतरान्वयिनि पदार्थे अक्रमिकस्याप्यपरस्यान्वयित्वप्रतिपादनाय यतमानेन कविना यदि क्रमातिक्रमेणोपन्यस्यते तदा स न दोष इत्यर्थः, न पुनरस्य गुणत्वं सविशेषशोभाजनकत्वाभावादिति बोध्यम् ॥ १४६ ॥

बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु ।
आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥ १४७ ॥

उदाहरति । बन्धुत्याग इति । आद्यन्तौ बन्धुत्यागदेशत्यागौ, आयतक्लेशौ दीर्घकालं क्लेशानुभावकौ, मध्यमस्तनुत्यागः, क्षणिकज्वरः अल्पक्षणमेव सन्तापजनकः, वरं तनुत्यागः श्रेयान् न पुनर्बन्धुत्यागोदेशत्यागो वेत्यर्थः । अत्रादिपदोपात्त बन्धुत्यागान्वयिन्यायतक्लेशत्वे तदुत्तरोद्दिष्टस्य तनुत्यागस्यान्वयायोगात् तं विहाय योग्यत्वात्तदन्तस्य देशत्यागस्यान्वयित्वं प्रतिपादितमिति क्रमलङ्घनं युज्यते ॥ १४७ ॥

शब्दहीनमनालक्ष्यलक्ष्यलक्षणपद्धति ।
पदप्रयोगोऽशिष्टेष्टः शिष्टेष्टस्तु न दुष्यति ॥ १४८ ॥

शब्दहीनं लक्षयति । शब्दहीनमिति । लक्ष्यं सजातीयमुदाहरणात्मकं तथा लक्षणमनुशासनं सूत्रं कोषो धातुपा-

ठस्य, तद्रूपा पद्धतिर्वर्त्म प्रयोगनियामक इत्यर्थः, असाधुत्या अपरिदृश्या लक्ष्यलक्षणपद्धतिर्यस्य तादृशः पदप्रयोगः तद-भिहितभावत्वात् प्रयुज्यमानं पदमित्यर्थः शब्दहीनं शब्द-हीनत्वाख्यदोषवान्, यस्य सजातीयप्रयोगान्तरं केनापि प्रयुक्तं न दृश्यते नापि निष्पादकमनुशासनं, तथाविधपदप्रयोगः शब्द-हीन इत्यर्थः, सत्यप्यनुशासनाभावे बहुभिः प्रयुज्यमानस्य प्रयोगो न दूषणमावहति यथा 'चेतः परं वलति शैलवनस्थलीष्वित्यादि' अत्र वलतीति संचलनार्थवलधातोः परस्मैपदित्वमनुशासना-सिद्धमपि बहुभिः प्रयुक्तमिति तत्प्रयुञ्जानः कविर्नापराध्यति इत्यतो लक्ष्यस्याप्यनालक्ष्यत्वं दूषणबीजत्वेनोक्तं । तथा अशि-ष्टेष्टः यस्य पदप्रयोगः शिष्टानामिष्टो न भवति सत्यप्यनुशासने तत्पदं यदि तत्तल्लिङ्गादिमत्त्वेन तत्तदर्थकत्वेन वा कदापि शिष्टैर्न प्रयुक्तन्तदा तत्प्रयोगोऽपि दोषायेत्यर्थः यथा 'दैवतानि पुंसि वेति कोषे सत्यपि पुंलिङ्गदैवतशब्दः, हन् हिंसागत्योरिति गणोक्तावपि गमनार्थोहन्धातुश्च न केनापि शिष्टेन प्र[illegible]क्तः, इत्यत्र विशेषणद्वयेनान्येषामुक्तानामसाधुत्वाप्रयुक्तत्वासमर्थत्वाख्य-दोषाणां स्वमते शब्दहीनपदेन संग्रहः, ततश्च शब्दाद्धी-नोऽपकृष्टो यचेति व्युत्पत्तिसिद्धं शब्दहीनमितिपदं, अपकृष्ट-त्वञ्चासाधुत्वादिकं । किञ्चानुशासनविरुद्धोऽपि शिष्टेष्टो न दोषायेत्याह शिष्टेष्टन्तु न दुष्यतीति, अयम्भावः शिष्टप्रयुक्तानामे-मेव पदानां व्युत्पत्त्यर्थमनुशासनं पाणिन्यादिभिः कृतं न पुन-रनुशासनं दृष्ट्वा शिष्टैस्तानि प्रयुक्तानि तेषां नित्यत्वात्, यदुक्तं

गोयीचन्द्रेण 'सिद्धानां पदानां प्रतिपत्त्यर्थं प्रकृतिप्रत्ययविभागपरिकल्पनं शास्त्रेण क्रियत इति। तस्मादनुशासनसिद्धस्य तद्विरुद्धस्य वा शिष्टेष्टस्य प्रयोगो न दोषाय तद्विपरीतस्तु दोषायेति। यद्वा अनालक्ष्या लक्ष्यलक्षणपद्धतिर्लक्ष्यलक्षणनियमो यत्र सः, अनेन लक्षणेनेदमेव लक्ष्यं सम्पद्यते अस्य लक्ष्यस्येदमेव लक्षणमित्येवं रूपो नियमो यत्र न लक्ष्यते तादृशपदप्रयोगः शब्दहीन इत्यर्थः एतेनासाधुत्वस्य दोषत्वमुक्तं यदुक्तमाग्नेये 'शब्दशास्त्रविरुद्धत्वमसाधुत्वं विदुर्बुधाः' इति, तथा अशिष्टेष्टः अशिष्टैः शिष्टभिन्नैर्ग्रामिकजनैरिष्टोऽपि शब्दहीन इत्यर्थः अनेन ग्राम्यताया दोषत्वमुक्तं, शिष्टेष्टस्तु न दुष्यतीति तु प्रसङ्गादुक्तम् ॥ १४८ ॥

अवते भवते बाहुर्महीमर्णवशक्करीम्।
महाराजन्नजिज्ञासा, नास्तीत्यासां गिरां रसः ॥१४९॥

उदाहरति। अवते इति। हे महाराजन् भवते भवतस्तव बाहुः, अर्णवः शक्करी मेखला यस्यास्तां सार्णवामित्यर्थः 'शक्करी च्छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनी। शर्करीति सरेफः पाठः प्राचीनमेदिनीपुस्तके दृश्यते। महीमवते रक्षति, अस्मिन् विषये संशयाभावाज्जिज्ञासा नास्ति सत्यमेवैतदित्यर्थः, इत्यासामीदृशीनां गिरां रसः प्रकृते शृङ्गारानुप्राणितो राजविषयरतिभावो नास्ति सन्नपि नास्वाद्यते पदानामसाधुत्वप्रतिपत्त्या तत्पूर्व्वभाविनोऽन्वयबोधस्याभावात्,

तथाहि अवते इत्यत्रात्मनेपदं, भवते इत्यत्र षष्ठीविषये चतुर्थी, अर्द्धवशङ्करीत्यत्र कप्रत्ययाभावः, महाराजमित्यत्रापि टप्रत्ययाभावः, सर्वमेतदनुशासनविरुद्धं, किञ्च शङ्करीशब्दो मेखलायां न केनापि प्रयुक्त इत्यप्रयुक्तः, तदिदं सर्व्वं प्रयुज्यमानं बोद्धृबुद्धिमान्यर्थ्यं जनयदन्वयबोधं विघटयति॥ १४८ ॥

दक्षिणाद्रेरुपसरन् मारुतश्चूतपादपान्।
कुरुते ललिताधूतप्रवालाङ्कुरशोभिनः॥ १५० ॥
इत्यादिशास्त्रमाहात्म्यदर्शनालसचेतसाम्।
अपभाषणवद्भानि नच सौभाग्यमुज्झति॥ १५१ ॥

शिष्टेष्टन्तु न दुष्यतीत्यस्य विषयं दर्शयति। दक्षिणाद्रेरिति। मलयपर्व्वतस्थं वायुकम्पितचूतवनं कश्चिद्वर्णयति। दक्षिणाद्रेरुपसरन् मलयाचलमिममुपगच्छन्, ललितं मन्दं यथा तथा आधूतैः प्रवालाङ्कुरैः शोभिनः। इत्यादीति। इत्यादि दक्षिणाद्रेरित्यादिपदं, शास्त्रमाहात्म्यदर्शनालसचेतसाम्, शास्त्रैनानुशासनशास्त्ररहस्यमनालोचयताम्, अपभाषणवदपशब्दवत्, नच सौभाग्यमुज्झति वस्तुतः शिष्टत्वात् सौष्ठवं न त्यजति, अयमर्थः कर्म्मणि द्वितीयेत्यनुशासनादुपसरणक्रिया कर्म्मतया दक्षिणाद्रिशब्दस्य द्वितीयान्तता युज्यते किन्तु तदभावेऽपि नेदं दुष्टं शिष्टानां सर्व्वत्र सम्बन्धषष्ठ्यन्ततायाः अदुष्टत्वाभ्युपगमात्, तथा चोक्तं, कर्म्मादिविषयेऽप्यविवक्षिते कर्म्मादौ सम्बन्धविवक्षायां षष्ठीति॥ १५० ॥ १५१ ॥

श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः ।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं, यथा ॥ १५२ ॥

अथ यतिनिरूपणपूर्व्वकं यतिभ्रष्टं लक्षयति । श्लोकेष्विति । श्लोकेषु नियतं छन्दःशास्त्रैर्नियमितं स्थानं यस्य तादृशं पदस्य सुबन्तस्य तिङन्तस्य वा छेदं विरामं यतिं विदुः जिह्वेष्टविश्रामस्थानत्वेन यत्र छन्दःशास्त्रैः पदसमाप्तिरुपदिष्टा तां यतिं जानन्ति पदान्ते जिह्वाया विश्रामो यतिरिति निष्कृष्टार्थः । उक्तञ्च 'यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यत इति । तदपेतं तादृशयतिशून्यं वचनं यतिभ्रष्टं, यत्र पदमध्ये जिह्वा विश्राम्यति तद्यतिभ्रष्टत्वाख्यदोषवदित्यर्थः, दोषत्वे हेतुः यतः श्रवणस्योद्वेजनं दुःखदं श्रवणोद्वेजकत्वादस्यात्यन्तपरिहार्य्यत्वमित्यर्थः । श्लोकेष्वित्यनेन गद्येषु यतिर्नादरणीयेति सूचितम् ॥ ॥ १५२ ॥

स्त्रीणां सङ्गीतविधिमयमादित्यवंश्यो नरेन्द्रः
पश्यत्यक्लिष्टरसमिह शिष्टैरमेत्यादि दुष्टम् ।
कार्य्याकार्य्याण्ययमविकलान्यागमेनैव पश्यन्
वश्यामुर्व्वीं वहति नृप इत्यस्ति चैवं प्रयोगः ॥ १५३ ॥

स्त्रीणामिति । आदित्यवंश्योऽयं कश्चिन्नरेन्द्रः शिष्टैः सामाजिकैरमा सह अक्लिष्टाः पुष्कला रसा यत्र तादृशं स्त्रीणां सङ्गीतविधिं सङ्गीतसहितं विधानं नाट्यमित्यर्थः, इह पश्यतीत्यन्वयः । इत्यादि दुष्टमिति सप्तदशाक्षरं मन्दाक्रान्तावृत्त-

मिदम्, अत्र प्रथमं चतुर्थे ततः षष्ठे ततश्च सप्तमे यतिर्निवेश्या यदुक्तं 'मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति, प्रकृते तु चतुर्थादिवर्णानां पदमध्यपातित्वाद्यतिभ्रष्टत्वम्। अस्य कश्चिददोषत्वमप्याह कार्य्याकार्य्याणीति अविकलानि सकलानि, आगमेन नीतिशास्त्रादिना, वश्यामायत्तां, वंश्यामिति पाठे कुलपरम्परागताम्। इत्यपि चैवं प्रयोग इति एवं प्रयोगो न यतिभ्रष्ट इत्यर्थः ॥ १५३ ॥

लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा।
तथा सन्धिविकारान्त पदमेवेति वर्ण्यते ॥ १५४ ॥

ननु स्त्रीणां सङ्गीतविधौत्यादौ यतिभंशः कार्य्याकार्य्याण्ययमित्यादौ तदभावः कथमेतत् उभयत्रापि पदमध्य एव विश्रामादित्याशङ्क्य सद्दृष्टान्तमुपपादयति। लुप्ते इति। पदस्य सुबन्तस्य तिङन्तस्य वा अन्ते अन्तवर्णे लुप्ते सति यथा शिष्टस्यावशिष्टभागस्य पदत्वं निश्चितं वारि पच इत्यादौ भक्तिलोपे भातेऽवशिष्टस्य प्रकृतिभागस्य यथा पदत्वं निर्विवादं सर्वैरप्यङ्गीकृतमित्यर्थः। अत्र पदान्ते इत्येकत्वमविवक्षितं राजेत्यादौ द्वयोरपि लोपेऽवशिष्टस्य राजेत्यादिभागस्य पदत्वानपायात्। तथा सन्धिविकारान्तं सन्धिः स्वरद्वयमन्धानं तत्कृतो विकारो दीर्घयणाद्यादेशः तादृशविकारयुक्तव्यञ्जनमित्यर्थः सोऽन्ते यस्य तत् पदमेव पदमध्यमपि पदान्त एवेति वर्ण्यते छन्दोभिरङ्गीक्रियत इत्यन्वयः पदमध्येऽपि तस्मिन् निवेशिता यति-

र्न दोषायेत्यर्थः, एतदेवोक्तं छन्दोगोविन्दे गङ्गादासेन 'क्वचिच्छन्दस्यान्ते यतिरभिहिता पूर्व्वकृतिभिः पदान्ते सा शोभां श्रयति पदमध्ये त्यजति च। पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां यथा 'कृष्णः पुष्णात्वतुलमहिमा मां करुणया' इति। प्रकृते च कार्य्याकार्य्याण्ययमित्यादौ चेत्यादिस्वरसन्धिकृतयकारादिविकारवद्वर्णान्ते र्य्यां इत्यादौ पदमध्येऽपि यतिर्न दोषाय, एतद्विपरीते स्त्रीणां सङ्गीतेत्यादौ तु दोषायैवेति दोषादोषयोर्विषयविभागः॥१५४॥

तथापि कटु कर्णानां कवयो न प्रयुञ्जते।
ध्वजिनी तस्य राज्ञः केतूदस्तजलदेत्यदः॥१५५॥

स्वरसन्धिकृतप्रतिप्रसवस्याप्यसार्व्वत्रिकत्वं दर्शयति। तथापीति। तथापि स्वरसन्धिना पदमध्यस्य पदान्ततााभ्युपगमेऽपि। ध्वजिनी सेना, केतवो ध्वजवंशास्तैरुदस्ता अत्युच्चत्वादुत्क्षिप्ता जलदा मेघा यया सा। इत्यादौ ध्वजिनीत्यादिकं यतः कर्णानां कटु दुःखदम् अतः कवयः प्रतिप्रसूतमपि न प्रयुञ्जते कटुकर्णं तदिति पाठे कटवः सपीडाः कर्णा यत्र तदिति बहुव्रीहिः, अत्र केतूदस्तेत्यत्र तू इति स्वरसन्धिकार्य्यदीर्घयुक्तं तदन्तमपि के इत्येतद्यतिस्थानतया श्रोतॄणां कर्णान्तुदं भवति, इत्यतश्च सत्यपि स्वरसन्धौ पादान्ते पदमध्ययतिर्दोषाय पादमध्ये तु न तथा प्रकृते के इत्यस्य पादान्तत्वमिति बोध्यम्॥१५५॥

वर्णानां न्यूनताधिक्ये गुरुलघ्वयथास्थितिः।
तत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनिन्दितः॥ १५६॥

भिन्नवृत्तं लक्षयति। वर्णानामिति। अत्र यत्रेत्यध्याहार्य्यम् उत्तरवाक्ये तत्रेत्युक्तेः, वर्णानामिति बहुवचनमविवक्षितं, यत्र पद्ये एकस्य द्वयोस्त्रिप्रभृतीनाम्वा वर्णानां न्यूनता आधिक्यम्वा, यद्वा वर्णानामिति निर्द्धारणे षष्ठी वृत्तघटकवर्णानां मध्ये कस्यचिन्न्यूनत्वमधिकत्वम्वा, तथा यत्र गुरुलघ्वयथास्थितिः गुरोर्लघोर्व्वा वर्णस्यायथास्थानं सन्निवेशः तत्र पद्ये तद्भिन्नं भग्नं वृत्तं छन्द इति वृत्तभङ्गाख्यो दोषः यद्वा तद्वाक्यं भिन्नं वृत्तं यत्रेति वृत्तभङ्गाख्यदोषवत् स्यादित्यन्वयः, एष भिन्नवृत्तत्वाख्यः, सुनिन्दित इति काव्यकर्त्तुश्छन्दोऽनभिज्ञत्वेनोपहसनीयत्वख्यापनादिति भावः। एतद्वृत्तत्वसंज्ञयान्यैरुक्तो लक्षणानुसरणेऽप्यश्रव्यत्वरूपः प्रकृतरसाननुगुणत्वरूपश्च दोषो नात्यन्तनिन्दित इत्युपेक्षितः। यथा 'हन्त सततमेतस्या हृदयं भिन्ते मनोभवः कुपितः', अत्र भगणमगणौ छन्दोलक्षणकृद्भिरनिषिद्धनैरन्तर्य्यसन्निवेशावपि तथा निवेश्यमानौ किञ्चिच्छ्रुतिदुःखमावहतः, एवं 'सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्ञो वदतु यदिहान्यत् स्वादु स्यात् प्रियारदनच्छदात्। अत्रान्यत् स्वादु स्यादिति श्रुतिकटु। अयि मयि मानिनि माकुरु मानं, वृत्तमिदं हास्यरसस्यैवानुकूलमिति प्रकृताननुगुणम्॥ १५६॥

इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता ।
सहकारस्य किसलयान्यार्द्राणीत्यधिकाक्षरम् ॥ १५७ ॥

क्रमेणोदाहरति । इन्दुपादा इति । अत्र प्रथमपादे पादारम्भस्य प्राक् इन्दुपादा इत्यनन्तरम्भा वर्ण एकोन्यूनः, तृतीयपादे च नवाक्षरत्वादेकोवर्णोऽधिकः ॥ १५७ ॥

कामेन वाणा निशिता विमुक्ता
मृगेक्षणास्वित्ययथागुरुत्वम् ।
स्मरस्य वाणा निशिताः पतन्ति
वामेक्षणास्वित्ययथालघुत्वम् ॥ १५८ ॥

कामेनेति । अत्र पूर्वार्द्धे मृगेक्षणास्वित्यादिश्रवणादुपेन्द्रवज्राख्येऽस्मिन् वृत्ते ‘उपेन्द्रवज्रा जतजास्ततोगाविति लक्षणाज्जगणस्य प्रथमं निवेशनीयतया कामेनेत्यादि प्रथमपादे का इति गुरुवर्णोऽयथास्थानं निवेशितः । एवमुत्तरार्द्धे वामेक्षणास्वित्यादिश्रवणादिन्द्रवज्राख्येऽस्मिन् वृत्ते ‘स्यादिन्द्रवज्रा ततजास्ततोगाविति लक्षणात्तगणस्य प्रथमं निवेशनीयतया स्मरस्येत्यादिपादे स्मेति लघुवर्णोऽयथानिवेशितः । अत्र द्वितीयादिपादत्रयस्य लघ्वादित्वेन गुर्वादित्वेन वा साम्यमभिप्रेत्य दूषणद्वयप्रदर्शनमिदम् अन्यथा यथाश्रुते अयथागुरुत्वोदाहरणेऽयथालघुत्वमयथालघुत्वोदाहरणे चाययागुरुत्वमपि वक्तुं शक्येत पादद्वयादौ द्वयोरपि गुरुलघ्वोः सत्त्वादिति ध्येयम्,

स्मरस्येत्यत्र स्मरेणेति पाठे मिश्रिता इति क्रियापेक्षया कर्तृत्वम्। दूषणद्वयञ्चेदम् इन्द्रवज्रोपेन्द्रवज्रयोः संमिश्रणेनोपजात्याख्यं छन्दोऽन्तरं ये न मन्यन्ते तेषां मत एव ज्ञेयम्, उपजात्यभ्युपगमे तु नैतत्, वस्तुतस्तु युज्यत एव तदभ्युपगमः 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराज इत्यादिमहाकवि-प्रयोगाणामुपजातिवृत्तवतां भूरिशो दर्शनात्, तस्मात् कामे-नेत्यत्र स्वभुवा इति स्मरस्येत्यत्र च मदनेति पाठो ज्ञातव्यः तत्र पूर्व्वत्र तृतीयस्य गुरुत्वमुत्तरत्र द्वितीयस्य लघुत्वमयथाप्रयुक्त-मिति दूषणसम्भवः, किञ्चाप्राप्तगुरुभावान्तलघुत्वमप्ययथान्तलघुत्वं बोध्यं यथा 'विकसितसहकारभारहारिपरिमल एष समाग-तो वसन्त' इत्यादौ भारहारीत्यत्र रि इत्यस्य लघोः प्रथमपा-दान्तत्वाद्गुरुत्वाभाव इति वृत्तभेदः, यत्तु पादान्तलघोर्गुरुभाव उक्तस्तत् सर्व्वत्र द्वितीयचतुर्थपादविषयं प्रथमतृतीयपाद-विषयन्तु इन्द्रवज्रावसन्ततिलकादावेवेति ज्ञेयम् ॥ १५८ ॥

न संहितां विवक्षामीत्यसन्धानं पदेषु यत्।
तद्विसन्धीति निर्द्दिष्टं न प्रगृह्यादिहेतुकम् ॥ १५९ ॥

विसन्धिकं लक्षयति। नेति। संहितां वर्णयोः सन्धिं न विवक्षामि सत्यप्यनुशासने न प्रयोक्तुमिच्छामि इतीच्छया पदेषु पदघटकवर्णेषु यदसन्धानं नास्ति सन्धानं तत्तत्सूत्रोक्तकार्य्येण परस्परसंयोजनं यत्र वाक्ये तद्वाक्यं विसन्धीति निर्द्दिष्टं विस-न्धित्वाख्यदोषवत् कथितमित्यन्वयः, एवञ्च विगतः सन्धिर्यत्रेति

सङ्कीर्णेन विसन्धीति पदं वाक्यविशेषणमन्यथा क्लीवत्वानुपपत्तेरिति ज्ञेयम्, न विवक्षामीति एतेन सन्धिस्तु पुरुषेच्छयेति सैवान्यत्र विभाषित इत्यादिकमन्यैरुक्तं प्रत्युक्तम्। इच्छाकृतस्यैव सन्धिविश्लेषस्य दोषत्वं स्पष्टयति न प्रगृह्यादिहेतुकमिति अनुशासनबलेनैव यत्र सन्धिर्निषिध्यते तत्प्रगृह्यम् आदिना अनुकरणादिपरिग्रहः, प्रगृह्यादिजन्यः सन्धिविश्लेषस्तु न दोष इत्यर्थः, अयञ्च दोषाभावः सकृत्प्रयोगे, असकृत्प्रयोगे तु श्रवणोद्वेजकत्वाद्दोष एव यथा 'दलिते उत्पले एते अक्षिणी अमलाङ्गि ते इत्यादि। विसन्धिपदेन चान्यैरुक्तं सन्धौ कष्टत्वमश्लीलत्वञ्च नात्यन्तदूषकमित्युपेक्षितं यथा 'उर्व्यसावत्र तर्व्वाली मर्व्वन्ते चार्व्ववस्थितिः। नात्रर्ज्जु युज्यते गन्तुं शिरोनमय तन्मनाक्'। अत्र सन्धौ कष्टत्वं। 'वेगादुड्डीय गगने चलण्डामरचेष्टितः। अयमुत्पतते पत्री ततोऽत्रैव रुचिं कुरु' अत्र लण्डेति जुगुप्साव्यञ्जकमश्लीलं, चिङ्कु इति व्रीडाव्यञ्जकम् ॥ १५८ ॥

मन्दानिलेन चलता अङ्गनागण्डमण्डले ।
लुप्तमुद्भेदि घर्म्माम्भो नभस्यस्मदपुष्यपि ॥ १६० ॥

विवक्षाकृतं सन्धिविश्लेषमुदाहरति। मन्दानिलेनेति। नभस्याकाशे चलता मन्दानिलेन अङ्गनाया गण्डमण्डले उद्भेदि उद्भिन्नं घर्म्माम्भो लुप्तं तथा अस्मदपुष्यप्युद्भेदि घर्म्माम्भो लुप्तमित्यन्वयः। अस्मदपुष्यपीत्यत्र अस्माकमस्यपीति पाठो न सम्यक्। अत्र वृत्तभङ्गभयमात्रेण प्रथमपादान्तस्याकारस्य द्वितीयपादादिस्थेनाकारेण सह सन्धिकार्य्यदीर्घभावो न कृतः ॥ १६० ॥

मानेर्ष्ये इह शीर्य्येते स्त्रीणां हिमऋतौ प्रिये।
आसु रात्रिष्विति प्राज्ञैराम्नातं व्यस्तमीदृशम्॥ १६१॥

प्रगृह्यादिहेतुकत्वेन प्रतिप्रसूतं सन्धिविश्लेषं दर्शयति। मानेर्ष्ये इति। मानः प्रणयकोपः ईर्ष्या नायकापराधकृतकोपः तयोर्द्वन्द्वः शीर्य्येते शीर्णे भवतः हिमऋतोरत्यन्तोद्दीपकत्वादिति भावः, प्रिये प्रियं प्रिति, आसु उपस्थितासु। इतोदृशं व्यस्तं सन्धिविश्लेषः प्राज्ञैरनुशासनकृद्भिराम्नातमुक्तं, तथाहि मानेर्ष्ये इहेत्यत्र एकारस्य द्विवचनसिद्धत्वात् 'द्विवचनसिद्धानामीदूदेतामिति' सूत्रेण सन्धिकार्य्यायादेशः प्रतिषिद्धः, तथा हिमऋतावित्यत्र च ऋदृतोरको ह्रस्वश्चेत्यनेन ऋकारस्य गुणोनिषिद्धः। मानेर्ष्ये ईदृशी स्त्रीणां नास्तामिति क्वचित्पाठः क्वचिच्च आसु रात्रिष्वित्यत्र अमू आदिष्विति पाठः तत्र अमू आदिष्वित्यत्र द्विवचनसिद्धानामित्यादिना 'अदसोमादिति' इत्यनेन च सन्धिर्निषिद्धः॥ १६१॥

देशोऽद्रिवनराष्ट्रादिः कालोरात्रिन्दिवर्त्तवः।
नृत्यगीतप्रभृतयः कला कामार्थसंश्रयाः॥ १६२॥
चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता।
हेतुविद्यात्मकोन्यायः सस्मृतिः श्रुतिरागमः॥ १६३॥
तेषु तेष्वयथारूढं यदि किञ्चित् प्रवर्त्तते।
कवेः प्रमादाद्देशादिविरोधीत्येतदुच्यते॥ १६४॥

अथ देशादिनिरूपणपूर्व्वकं तद्विरोधं लक्षयति। देश इति। अद्रिवनराष्ट्रादिर्देशः अदिना समुद्रादिपरिग्रहः। रात्रिन्दिवर्त्तवः कालः बहुवचनान्मासादिपरिग्रहः, कामार्थसंश्रयाः कामेनार्थलिप्सया वा क्रियमाणाः कामार्थरूपपुरुषार्थद्वयजनकाः इत्यर्थः नृत्यगीतप्रभृतयश्चतुःषष्टिसङ्ख्यकाः कलाः, ते च शैवतन्त्रोक्ताः यथा 'नृत्यं, गीतं, वाद्यं, नाट्यम्, आलेख्यं, विशेषकच्छेद्यं, तण्डुलकुसुमवलिविकाराः, पुष्पास्तरणं, दशनवसनाङ्गरागाः, मणिभूमिकाकर्म, शयनरचनम्, उदकवाद्यम्, उदकाघातः, चित्रायोगाः, माल्यग्रथनविकल्पाः, शेखरापीडयोजनं, नेपथ्ययोगाः, कर्णपत्रभङ्गाः, गन्धयुक्तिः, भूषणयोजनम्, ऐन्द्रजालं, कौचुमारयोगाः, हस्तलाघवं, चित्रशाकपूपभक्ष्यविकारक्रिया, पानकरसरागासवयोजनं, सूचीवापकर्म्माणि, सूत्रक्रीडा, प्रहेलिका, प्रतिमाला, दुर्व्वचकयोगाः, पुस्तकवाचनं, नाटिकाख्यायिकादर्शनं, काव्यसमस्यापूरणं, पट्टिकावेत्रवाणविकल्पाः, तर्कुकर्म्माणि, तक्षणम्, वास्तुविद्या, रूप्यरत्नपरीक्षा, धातुवादः, मणिरागज्ञानम्, आकरज्ञानं, वृक्षायुर्व्वेदयोगाः, मेषकुक्कुटलावकयुद्धविधिः, शुकसारिकाप्रलापनम्, उत्सादनम्, केशमार्जनकौशलम्, अक्षरमुष्टिकाकथनं, म्लेच्छितकविकल्पाः, देशभाषाज्ञानं, पुष्पशकटिकानिमित्तज्ञानं, यन्त्रमातृका, धारणमातृका, सम्पाठ्यं, मानसी काव्यक्रिया, क्रियाविकल्पाः, छलितकयोगाः, अभिधानकोषच्छन्दोज्ञानं, वस्त्रगोपनानि, द्यूतविशेषः, आकर्षक्रीडा,

बालकक्रीडनकानि, वैनायिकीनां विद्यानां ज्ञानं, वैजयिकीनां विद्यानां ज्ञानं, वैतालिकीनां विद्यानां ज्ञानञ्चेति ॥ ॥ १६२ ॥

चराचराणां जङ्गमस्थावराणां भूतानां प्रवृत्तिर्वृत्तान्तो लोकसंज्ञिता लोकपदवाच्या । हेतुविद्या हेतुर्युक्तिः तिदन्वयनया विद्या युक्तिमूलकशास्त्रमित्यर्थः दर्शनशास्त्रमिति यावत् तच्च प्रायशो युक्त्युपन्यासेनैव सिद्धान्तस्थिरीकरणात्, दर्शनानि च तर्कादीनि सौगतादीनि च तदात्मकस्तद्रूपो न्यायः । स्मृतयो मन्वादिप्रणीतधर्म्मसंहितास्तत्सहिता श्रुतिर्व्वेद आगमः ॥ १६३ ॥

तेषु तेषु देशादिषु अयथारूढमप्रसिद्धं कीकटेषु कुङ्कुमोत्पत्तिः कश्मीरेषु गुवाकनारिकेलवनमित्येवंरूपं किञ्चित् किमपि यदि कवेर्वर्णयितुः प्रमादादनवधानात् प्रवर्त्तते वर्णितं भवति तदा एतत् एतदर्थप्रतिपादकं वाक्यं देशादिविरोधीत्युच्यत इत्यन्वयः, अनेन चान्येरुक्तयोः ख्यातविरुद्धताविद्याविरुद्धतयोर्द्वयोरपि संग्रहः, तत्र देशकाललोकविरोधः ख्यातविरुद्धता, कलान्यायागमविरोधस्तु विद्याविरुद्धता, स्मृतिश्रुतिरागम इत्यत्र च श्रुतिपदं कामशास्त्रकृषिशास्त्रगजतुरगखड्गादिलक्षणशास्त्रादीनामुपलक्षकं तेन 'अधरे करजक्षतं मृगाक्ष्या' इत्यादौ अधरे करजक्षतवर्णनं कामशास्त्रविरुद्धमित्यागमविरोध एव एवं शास्त्रान्तरविरोधोऽप्यूह्यः ॥ १६४ ॥

कर्पूरपादपामर्शसुरभिर्मलयानिलः ।
कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः ॥ १६५ ॥

देशादिविरोधानुद्देशक्रमेणोदाहरति । कर्पूरेति । मलयानिलो मलयपर्व्वतस्थो वातः, कर्पूरपादपामर्शसुरभिरिति कर्पूरपादपा हि चीनादिदेश एव जायन्ते नतु मलयाद्राविति तत्र तद्दर्शनं विरुद्धमित्यत्राद्रिरूपदेशविरोधः । कलिङ्गेति मृगप्रायाः अतिक्षुद्राः, मतङ्गजा हि कलिङ्गवनेषु न सम्भवन्तीति वनरूपदेशविरोधः ॥ १६५ ॥

चोलाः कालागुरुश्यामकावेरीतीरभूमयः ।
इति देशविरोधिन्या वाचः प्रस्थानमीदृशम् ॥ १६६ ॥

राष्ट्ररूपदेशविरोधमुदाहरति । चोला इति । चोलाः कर्णाटान्तर्गतदेशविशेषाः संप्रति ताञ्जोरेतिनाम्ना व्यपदिश्यन्ते तत्र चैका कावेरीनद्याः शाखा वर्त्तते तत्तीरभूमिषु कालागुरुद्रुमा न जायन्त इति राष्ट्ररूपदेशविरोधः । अत्र पुस्तकान्तरे 'चोलाः कालागुरुश्यामाः केरलाः कुङ्कुमारुणाः । न मेरुवनसंच्छन्नाः कावेरीतीरभूमयः' इति पाठान्तरं दृश्यते, तत्र कावेरीतीरभूमिपदेन कर्णाटराष्ट्रमुपलक्ष्यते तत्रैव कावेर्य्याः प्रादुर्भावात् ॥ १६६ ॥

पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।
मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्द्दिनः ॥ १६७ ॥
श्रव्यहंसगिरो वर्षाः शरदो मत्तवर्हिणः ।
हेमन्तो निर्म्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥ १६८ ॥

कालविरोधमुदाहरति। पद्मिनीति। दिवस एव पद्मिनी उन्निद्रा भवति न तु नक्तमिति रात्रिरूपकालविरोधः, कुमुदती रात्रावेव स्फुटति न तु दिवेति दिवारूपकालविरोधः। मधुरुत्फुल्लनिचुलइत्यादिवाक्यानि ऋतुरूपकालविरोधस्योदाहरणानि। मधुर्वसन्तः, निचुला इज्जलवृक्षाः तेषामुत्फुल्लता प्रावृष्येव भवति, निदाघो मेघदुर्दिन, इत्यनेन कदाचिन्निदाघादौ मेघदुर्दिनत्वसम्भवेऽपि ऋतुविशेषप्रतिनियतवस्तुन ऋत्वन्तरे वर्णनं दोष एवेति सूचितं, वस्तुतस्तु मृच्छकटिकादावाकालिकदुर्दिनस्यापि वर्णनात् 'निदाघो हिमजाड्य-कृदित्येवात्र पाठो श्रेयः निदाघे हिमजाड्यस्यात्यन्तासम्भवात्, श्रव्येति हंसगिरां श्रव्यत्वं हि शरत्स्वेव न तु वर्षास्विति विरोधः, शरद इति बर्हिणां मत्तता हि वर्षास्वेव न तु शरत्सु, हेमन्त इति निर्मलो हिमावरणापगमेन सुप्रकाश आदित्यो यत्र सः हेमन्ते आदित्यमण्डलस्य हिमावरणशून्यता निरुद्धा, शिशिर इति श्लाघ्यमभ्यर्थनीयं चन्दनं चन्दनद्रवो यत्र सः निदाघ एव शैत्यार्थं चन्दनद्रवस्यादर इति शिशिरे तद्वर्णनं विरुद्धम्, इत्यमृतुषट्कविरोधा दर्शिताः ॥ १६७ ॥ १६८ ॥

इति कालविरोधस्य दर्शिता गतिरीदृशी।
मार्गः कलाविरोधस्य मनागुद्दिश्यते यथा ॥ १६९ ॥

कालविरोधमुपसंहरन् कलाविरोधमुदाहर्त्तुमाह। इतीति। गतिः प्रकारः, ईदृशीति एवंरूपा अन्येऽपि कालविरोधा

ज्ञातव्या इत्यर्थः । कलाविरोधस्य मार्गः प्रकारो मनागु-द्दिश्यते चतुःषष्टिविधायाः कलाया विरोधस्य कार्त्स्न्येन प्रद-र्शनं ग्रन्थबाहुल्यकरमिति दिग्दर्शनार्थं किञ्चिदेव दर्श्यत इत्यर्थः ॥ १६८ ॥

वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ ।
पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्त्तते ॥ १७० ॥

कलासु नाट्यस्यैव सन्तोषातिशयजनकत्वेनाभ्यर्हितत्वात्तद्वि-रोधमेव प्रथममुदाहरति । वीरेति । वीरशृङ्गारयोर्वीररस-शृङ्गाररसयोः, स्थायिनौ रसस्यारम्भावधिपर्य्यवसानान्तमुद्रिक्त-तयास्वादमूलत्वेन स्थिरतया वर्त्तमानत्वात् स्थायिपदवाच्यौ तदुक्तं 'अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः । आस्वादाङ्कुर-कन्दोऽसौ भावः स्थायीति सम्मत' इति रसावस्थः परं भावः स्थायितां प्रतिपद्यत इति च । क्रोधः 'प्रतिकूलेषु तैक्ष्ण्यस्याव-बोधः क्रोध इष्यत इत्युक्तलक्षणः, विस्मयः 'विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु । विस्फारश्चेतसो यस्तु सविस्मय उदाहृत इत्युक्तलक्षणः, एतौ च भावौ रौद्राद्भुतयोरेव रसयोः स्था-यितया नाट्यशास्त्रकारैर्भरतादिभिरुक्तौ नतु वीरशृङ्गारयोः तयोस्तु उत्साहो रतिश्च स्थायित्वेनोक्तौ तदत्र वीरशृङ्गारयो र्व्यभिचारिरूपयोरेव क्रोधविस्मययोः स्थायित्वेन व्यपदेशो विरुद्धः, रसविवेकश्च भरतादिभिर्नाट्यशास्त्र एव कृत इति नाट्यरूप-कलाविरोधोऽयं, प्रकाशकृताप्युक्तम् 'अष्टौ नाट्ये रसाः स्मृता

इति। गीतरूपकलाया अपि तथात्वात् तद्विरोधमप्युदाहरति।

पूर्व्वेति। पूर्व्वाः शाकक्रमेण प्रयुक्ताः सप्त स्वरा निषादर्षभगा-न्धारषड्जमध्यमधैवतपञ्चमाख्या यत्र सः भिन्नमार्गः भिन्नः तत्तत्कालनिषिद्धस्वरान्तरासङ्कीर्णो मार्गस्तत्तत्कालविहित-स्वरविशेषप्रयोगः सोऽयं प्रवर्त्तत इत्यन्वयः, भिन्नपदस्यास-ङ्कीर्णोऽर्थश्च 'भिन्नकीकृत्य षड्जमिति माघश्लोकटीकायां भिन्न-कीकृत्य तत्कालनिषिद्धस्वरासङ्कीर्णं कृत्वेति व्याख्यानेन मल्लि-नाथेनापि स्फुटीकृतः, कालविशेषे स्वरविशेषप्रयोगनिषेधो यथा भरते 'प्रभाते सुरतोन्निद्र ऋषभः पञ्चमोऽपि च। जनयेत् प्रथमं स्मृत्वा पञ्चत्वं पञ्चमोऽपि च। पञ्चमस्य विशे-षोऽयं कथितः पूर्व्वसूरिभिः। प्रगे प्रगीतो जनयेद्धननस्य विप-र्य्ययम्' इत्यादि। प्रकृते चासङ्कीर्णस्वरप्रयोगस्य पूर्व्वसप्तस्वरत्वं विरुद्धम्॥ १७० ॥

इत्थं कलाचतुःषष्टिविरोधः साधु नीयताम्।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति ॥ १७१ ॥

कलाविरोधमुपसंहरति। इत्थमिति। इत्थमनया दिशा, साधु नीयतां सम्यगुन्नीयताम्, नाट्यगीतरूपयोः कलयोर्विरो-धो यथा दर्शितः तथापरासामपि कलानां विरोधो ज्ञातव्य इत्यर्थः, ननु कलास्तावच्चतुःषष्टिप्रकारास्तासां परिज्ञानं विना तद्विरोधः कथं सुज्ञेय इत्याशङ्क्याह तस्या इति। तस्याश्चतुः-षष्टिविधायाः कलायाः, कलापरिच्छेदे रूपमाविर्भविष्यतीति

अनन्तरं कलापरिच्छेदनामकं प्रबन्धं करिष्यामि तत्रैव कला-विवेको ज्ञातव्य इत्यर्थः, एतेन कलापरिच्छेदोऽपि ग्रन्थकृता कृत इति प्रतिपद्यते॥ १७१॥

आधूतकेशरो हस्ती, तीक्ष्णशृङ्गस्तुरङ्गमः।
गुरुसारोऽयमेरण्डो, निःसारः खदिरद्रुमः॥ १७२॥

लोकविरोधमुदाहरति। आधूतेति। हस्तिनः केशराः, तुरङ्गमस्य च शृङ्गम्, एरण्डवृक्षस्य गुरुसारत्वं, खदिरद्रुमस्य च निःसारत्वमसम्भवीति लोकविरोधः, स च पूर्व्वार्द्धे चरभूतवृत्त-विषयः उत्तरार्द्धे त्वचरभूतवृत्तविषयः॥ १७२॥

इति लौकिक एवायं विरोधः सर्व्वगर्हितः।
विरोधो हेतुविद्यासु न्यायाख्यासु निदर्श्यते॥ १७३॥

इतीति। लौकिक एवेति न तु दैशिकः कालिकादिको वेत्यर्थः, सर्व्वगर्हित इति देशादिविरोधापेक्षया लोकविरुद्धवर्णनं वर्ण-यितुर्नितान्तमनभिज्ञत्वं ख्यापयतीति तत्र सर्व्वथा कविना सा-वधानेन भवितव्यमिति भावः। न्यायविरोधमुदाहरन् प्रति-जानीते। विरोध इति। यद्यपि हेतुविद्यात्मको न्याय इत्य-नेन न्यायस्य हेतुविद्यात्मकत्वं पूर्व्वमेव परिभाषितं तथापि हेतुविद्यासु न्यायाख्यास्विति पुनर्वचनं न्यायस्य प्रतिज्ञादि-पञ्चावयवात्मकत्वप्रसिद्धा बौद्धानां तद्भ्रमनिरासार्थम्॥ १७३॥

सत्यमेवाह सुगतः संस्कारानविनश्वरान् ।
तथाहि सा चकोराक्षी स्थितैवाद्यापि मे हृदि ॥१७४॥

तत्र सौगतदर्शनरूपन्यायविरोधमुदाहरति । सत्यमेवेति । कस्यचिद्विरहिण उक्तिरियं । सुगतो बुद्धः, संस्कारान् भावनाख्यान् तेषामेव प्रकृतोपयोगात्, अविनश्वरान् नाशप्रतियोगिताशून्यान्, सा सुचिरमनुभूता, स्थितैवाद्यापि मे हृदीति अद्यापि सा स्मरणधारया विषयीभवतीत्यर्थः स्मृतिं प्रति संस्कारस्य जनकत्वात् तस्य चाविनश्वरत्वेन सर्व्वकालीनत्वाद्युज्यत एव स्मृतिधारारूपकार्य्यसम्भवः, अत्र क्षणभङ्गवादिनां सौगतानां मते भावमात्रस्यैव क्षणिकत्वात् संस्कारस्यापि क्षणिकत्वमेव प्रकृते तस्याविनश्वरत्ववर्णनं सौगतन्यायविरुद्धम्॥ १७४ ॥

कापिलैरसदुद्भूतिः स्थान एवोपवर्ण्यते ।
असतामेव दृश्यन्ते यस्मादस्माभिरुद्भवाः ॥ १७५ ।

साङ्ख्यदर्शनरूपन्यायविरोधमुदाहरति। कापिलैरिति। कापिलैः साङ्ख्यविद्भिः, असदुद्भूतिरसतामनित्यानामथच दुर्वृत्तानामुद्भूतिरुत्पत्तिः स्थान एव युक्ततरमेव उपवर्ण्यते, कुत इत्याह यस्मादस्माभिः संप्रति असतामेव सद्भिन्नानामेव खलानामेवेत्यर्थः उद्भवा दृश्यन्ते, अत्रासच्छब्दस्य श्लिष्टतया वाक्यार्थयोर्हेतुहेतुमद्भावः। सतः सदेव जायते न त्वसदिति कापिला मन्यन्ते तदुक्तम् 'असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्। शक्तस्य

प्रत्यकरणात् कारणभावाच्च सत्कार्य्यमिति । तेनाचारहुभूति-
वर्णनं साङ्ख्यन्यायविरुद्धम् ॥ १७५ ॥

गतिर्न्यायविरोधस्य सैषा सर्व्वत्र दृश्यते ।
अथागमविरोधस्य प्रस्थानमुपदिश्यते ॥ १७६ ॥

न्यायविरोधमुपसंहरति । गतिरिति । सैषा सौगत-
कापिलोक्तप्रकारा, सर्व्वत्र वैशेषिकादिष्वपि, दृश्यत इत्यत्र दर्शि-
तेति क्वचित्पाठः, सैषाप्यन्यत्र दृश्यतामिति पाठस्तु सम्यक् ।
आगमविरोधं दर्शयन्नाह अथेति ॥ १७६ ॥

अनाहिताग्नयोऽप्येते जातपुत्त्रा वितन्वते ।
विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥ १७७ ॥

तत्र श्रुतिविरोधमुदाहरति । अनाहिताग्नय इति ।
अनाहिताग्नयोऽकृताग्न्याधानाः, वैश्वानरीमिति विश्वानरो
भूतमयश्चात्मको विराट् पुरुषः 'विश्वानरमुपास्ते विद्युदा-
दित्यवाय्वाकाशोदकपृथिव्यात्मकैः षड्भिरूपैरमिति श्रुतेः' तत्स-
म्बन्धिनीमिष्टिं यागम्, अत्र जाताग्न्याधानादेरेव श्रुतौ वैश्वा-
नरयागाधिकारविधानादनाहिताग्न्यादीनां तद्दर्शनं श्रुति-
विरुद्धम् ॥ १७७ ॥

असावनुपनीतोऽपि वेदानधिजगे गुरोः ।
स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥ १७८ ॥

स्मृतिविरोधमुदाहरति । असाविति । अनुपनीतोऽपि

अजातोपनयनाख्यसंस्कारोऽपि, अधिजगे अधीतवान्, दृष्टा-
न्तेनेदं द्रढयति स्वभावेति, अयमनुपनीतस्य वेदाध्ययनं
श्रुतिविरुद्धं, तथाच मनुः 'नाभिव्याहारयेद्ब्रह्म स्वधानिनयना-
हृते। शूद्रेण हि समस्तावद्यावद्वेदे न जायत' इति ॥ १७८ ॥

विरोधः सकलोऽप्येष कदाचित् कविकौशलात्।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥ १७९ ॥

इदानीं निरुक्तविरोधाख्यदोषस्य क्वचिद्गुणत्वमपि भवतीति
दर्शयन्नाह। विरोध इति। सकलोऽपि देशाद्यागमान्तवि-
षयोऽपि, कवेर्वर्णयितुः कौशलं प्रौढोक्त्या विरुद्धार्थस्यापि वर्ण-
नेन वैचित्र्यप्रतिपादनं वैचित्र्यञ्च क्वचिदलङ्कारविशेषरूपं
क्वचिद्गुणविशेषरूपञ्च तस्मात्, दोषगणनां दोषेषु गण्यत्वमु-
त्क्रम्य परित्यज्य, गुणस्य वीथीं मार्गं गुणत्वमित्यर्थः ॥ १७९ ॥

तस्य राज्ञः प्रभावेन तदुद्यानानि जज्ञिरे।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥ १८० ॥

तत्र देशविरोधस्य गुणत्वं दर्शयति। तस्येति। तस्य कस्य-
चिद्गौडादिदेशविशेषीयस्य, तदुद्यानानीति काकाक्षिन्यायेना-
नुषङ्गेण वाऽन्वयो न रुचिर इत्यभिप्रेत्य तत्पदेन राजा परा-
मृष्टः, तानि प्रसिद्धान्युद्यानानि तदुद्यानानीति वा, आ-
र्द्राण्यभिनवान्यंशुकानि वस्त्राण्येव प्रवालानि पल्लवा येषां
ते तथा तेषां सुरशाखिनां कल्पवृक्षाणाम्, जज्ञिरे इति

उद्देश्यापेक्षया बहुवचनम्, अत्र मर्त्यलोकोद्यानेषु स्वर्गीयसुरशाखिसम्भवो वर्णित इति देशविरोधः स च वर्णनीयस्य राज्ञो विभूतिमहत्त्वरूपोदात्तालङ्कारमाविष्करोतीति चमत्कारजननाद्गुण एव, कविकौशलञ्चात्र उदात्तालङ्कृतिप्रतिपादनम् ॥ १८० ॥

राज्ञां विनाशपिशुनश्चचार खरमारुतः।
धुन्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥ १८१ ॥

कालविरोधस्य गुणत्वं दर्शयति। राज्ञामिति। राज्ञां वर्णनीयनृपस्य यातव्यभूपानां, सप्तच्छदोद्गमान् सप्तपर्णवृक्षाणामुद्गतपुष्पाणि, अत्र विजिगीषोर्युद्धयात्रा सप्तच्छदोद्गमाश्च शरत्काले भवन्ति तत्र च कदम्बपुष्पाणि न जायन्ते तेषां वर्षाभवत्वादिति कालविरोधः, स च 'अकाले फलपुष्पाणि देशविद्रवकारणमिति विष्णुधर्मोत्तरात् खरमारुतवदाकालिकपुष्पफलोद्गमस्यापि लोकविनाशसूचकत्वात् प्रतिपक्षभूपानामवश्यम्भाविमरणद्योतनेन विजिगीषोरुत्कर्षातिशयव्यञ्जनाद्गुण एव, तादृशव्यङ्ग्यप्रतिपादनञ्चात्र कविकौशलम् ॥ १८१ ॥

दोलाभिप्रेरणत्रस्तवधूजनमुखोद्गतम्।
कामिनां लयवैषम्यं गेयं रागमवर्द्धयत् ॥ १८२ ॥

कलाविरोधस्य गुणत्वं दर्शयति। दोलेति। दोलाया अभिप्रेरणं सवेगचालनं तेन त्रस्ता ये वधूजनास्तेषां मुखेभ्य उद्गतम्

अत एव तयस्य गीतादिशास्त्रस्य वैषम्यं वैपरीत्यं यच तादृशमपि गेयं गानं कामिनां रागमवर्द्धयदित्यन्वयः, तयशुद्धमेव गानं श्रोतृणां रागवर्द्धकमिति संगीतशास्त्रस्थितिः प्रकृते च तद्वैपरीत्यमिति गीतरूपकलाविरोधः स च वधूजनेषु कामिनामत्यनुरागित्वव्यञ्जनाद्गुण एव ॥ १८२ ॥

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम्।
अबलाविरहक्लेशविक्लवो गणयत्ययम्॥ १८३ ॥

लोकविरोधस्य गुणत्वं दर्शयति। ऐन्दवादिति। ऐन्दवादिन्दुसम्बन्धिनोऽर्चिषः किरणात्, अर्चिःशब्दस्य किरणवाचित्वं क्लीवत्व बहुषु दृश्यते, अपेक्षेति यजन्तगर्भत्वात् पञ्चमी, हव्यवाहनं वह्निमपि शिशिरं शीतलं गणयति यतोऽबलाविरहक्लेशविक्लवः, अत्र हव्यवाहनोऽपि शिशिर इति लोकविरोधः स च विरहिषु चन्द्रकिरणस्यात्युद्दीपकत्वव्यञ्जनाद्गुण एव ॥ १८३ ॥

प्रमेयोऽप्यप्रमेयोऽसि सफलोऽप्यसि निष्फलः।
एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्त्तये॥ १८४ ॥

न्यायविरोधस्य गुणत्वं दर्शयति। प्रमेय इति। प्रमेयः प्रमाणजन्यप्रमितिविषयः अप्रमेयस्तद्भिन्नः, सफलः फलं कार्य्यं तत्सहितः जगत्कारणमित्यर्थः, निष्फलस्तद्भिन्नः, एकस्त्वन्तोऽद्वितीयः, अनेकः 'इन्द्रोमायाभिः पुरुरूप ईयते इत्यादि-

श्रुतेः' प्रपञ्चात्मकत्वेन बहुरूपतया प्रतीयमानः, अत्र प्रमेयत्वा प्रमेयत्वादीनां सामानाधिकरण्यं केनापि दर्शनकृता नोक्तमिति* न्यायविरोधः स च प्रकृतेऽलङ्काररूपः परमात्मनोऽचिन्त्यमहिमत्वं व्यञ्जयन् गुण एव॥ १८४॥

पञ्चानां पाण्डुपुत्त्राणां पत्नी पाञ्चालपुत्त्रिका।
सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः॥ १८५॥

आगमविरोधस्य गुणत्वं दर्शयति। पञ्चानामिति। पाञ्चालपुत्त्रिका द्रौपदी, अग्रणीः श्रेष्ठा, दैवो देवसम्बन्धी विधिर्विधानम् ईदृशः आगमापरतन्त्रः युधिष्ठिरादीनां धर्म्माद्यंशतया द्रौपद्याश्च पृथिव्यधिष्ठातृरूपतया देवत्वादिति भावः, अनेकस्याः पञ्चपतित्वं सत्यपि तस्मिन् साध्वीश्रेष्ठत्वञ्च श्रुत्या मन्वादिभिर्वा नोक्तमित्यागमविरोधः स च दैवविधानस्य शास्त्रानपेक्षितया वैलक्षण्यं व्यञ्जयन् गुण एव॥ १८५॥

शब्दार्थालङ्क्रियाश्चित्रमार्गाः सुकरदुष्कराः।
गुणा दोषाश्च काव्यानामिह संक्षिप्य दर्शिताः॥ १८६॥

इत्थं प्रतिज्ञातान् गुणादीन् निरूप्य ग्रन्थमिममुपसंहरति। शब्दार्थेति। शब्दार्थालङ्क्रियाः शब्दार्थोभयात्मककाव्यशोभाजनकाः स्वभावाख्यानाद्यलङ्काराः तेषां द्वयोरपि शब्दार्थयोः क्वचित् साक्षात् क्वचित् परम्परया वा शोभाजनकत्वात् पूर्व्वोक्तयुक्त्या शब्दार्थयास्तादात्म्याभ्युपगमाच्च। तथा सुकरदुष्कराः

केचित् सुकराः केचिद्दुष्कराश्च चित्रमार्गाः शब्दमात्रालङ्कारा यमकादयः, एषां शब्दमात्रस्यैव शोभाजनकत्वात् । गुणाः श्लेषादयः, दोषा अपार्थत्वादयः, चकारात् काव्यलक्षणतद्भेदतन्मार्गाश्च, संक्षिप्य दर्शिता इति सर्व्वेषां कार्त्स्न्येन भेदस्यादर्शितत्वादिति भावः । अत्र य एव निरूपितास्त एवोपसंहारवाक्ये दर्शितत्वेनोक्ताः न तु निरूपणक्रमेण तथात्वे गुणानां पश्चादुपादानं न स्यादिति बोध्यम् ॥ १८६ ॥

व्युत्पन्नबुद्धिरमुना विधिदर्शितेन
मार्गेण दोषगुणयोर्वशवर्त्तिनीभिः ।
वाग्भिः कृताभिसरणो मदिरेक्षणाभि
र्धन्यो युवेव रमते लभते च कीर्त्तिम ॥ १८७ ॥

इत्याचार्य्यदण्डिनः कृतौ काव्यादर्शे शब्दालङ्कारदोषविभागोनाम तृतीयः परिच्छेदः ।

॥ समाप्तश्चायं ग्रन्थः ॥

ननु संक्षिप्य दर्शिता इत्युक्तं तत्र संक्षेपेण दर्शनायां कथं ग्रन्थप्रयोजनसिद्धिरित्याशङ्क्योपपादयन् ग्रन्थं समापयति । व्युत्पन्नेति । अमुना निरुक्तेन विधीयन्ते निरूप्यन्ते एभिरिति विधयो लक्षणादयः तैर्दर्शितेन दोषगुणयोर्हेयोपादेयधर्म्मयोर्मार्गेणावस्थितिप्रकारेण परिज्ञातेनेति शेषः व्युत्पन्ना ग्रन्थप्रयोजनभूतव्युत्पत्तिमती बुद्धिर्यस्य सः, तथा अमुनैव मार्गेण कृताभिसरणः काव्यं कर्त्तुमवगन्तुं वा कृतोद्यमः कविर्बोद्धा वा

वशवर्त्तिनीभिः पुनःपुनरनुशीलनेनायत्ताभिर्वाग्भिः काव्यरूपाभीरमते निर्वृतिमान् भवति तथा कीर्त्तिञ्च लभते इत्यन्वयः एतेन निर्वृतिः कीर्त्तिश्चापि काव्यस्य प्रयोजनमिति पर्य्यवसाने प्रतिपादितम्, अत्र काकाक्षिन्यायात् मार्गेणेत्यस्य प्रथमान्तकर्तृविशेषणद्वयेनाप्यन्वयः, गुणपदञ्चालङ्कारोपलक्षकं तेषामपि काव्यशोभाजनकत्वेनोपादेयधर्म्मत्वात्। यद्वा व्युत्पन्नबुद्धिर्देशकालादिविषयपरिशीलनेन निपुणमतिः वाग्भिः स्वयमेवामुना मार्गेण कृतमभिसरणं यस्य तादृशः सन् कृतास्पदः सन्नित्यर्थः रमते कीर्त्तिञ्च लभते इत्यन्वयः, अत्रोपमिनोति मदिरेक्षणाभिर्धन्यः पुण्यवान् युवेवेति यथा वशवर्त्तिनीभिः प्रेमवशीकृताभिर्मदिरेक्षणाभिर्वराङ्गणाभिः विधिदर्शितेन विधिर्दैवं तेन दर्शितेन विद्युत्प्रकाशादिना प्रकाशितेन दोषो जनपरिज्ञानादिरूपः गुणस्तदभावः तयोर्मार्गेण अनेन मार्गेणाभिसरणेऽयं दोषः अनेन तु गुण इति दोषगुणौ विविच्य स्वानुकूलतया परिगृहीतेन वर्त्मनेत्यर्थः कृतमभिसरणमभिसारो यस्य तादृशो धन्यो युवा रमते वराङ्गणाप्रेमास्पदत्वकीर्त्तिञ्च लभते तथेत्यर्थः॥१८७॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्य्यविरचितायां मालिन्यप्रोञ्छनीसमाख्यायां काव्यादर्शटीकायां शब्दालङ्कारदोषविभागोनाम तृतीयः परिच्छेदः॥ ३॥



उद्दण्डैश्चण्डपृथ्वीपतिविजितमिदं भारतं वर्षमस्मिन्
कल्काता राजधानी धनिगुणिवणिजां वासभूर्भूविभूषा।
अस्यामस्यातिकाम्या समितिरमितधीवैभवैः का[illegible]त-
प्राच्याश्चर्य्यप्रमेयोद्धृतिपरमतिभिः सज्जनैः स[illegible]भूत्॥ १॥
आदेश एव तस्याः श्रममतिबहुलोऽपि मेऽजनयत्
व्याख्यानेऽस्मिन् शक्तिं, गरयति हि लघुं परिषद्[illegible]नाम्॥ २॥
क्व वयं मन्दमतयः क्व च प्राची वचोऽम्बुधिः।
मन्ये विलोडनादस्य विषमेव समुत्थितम्॥ ३॥
याचे ततः कविवरानवरापि यायाद्
दस्माकमीक्षणपथं विवृतिर्ममेयं।
नाक्षीलतं स्वपयदङ्गमनङ्गजेवा
संप्रार्थितेन गरलं सरसात्मना किम्॥ ४॥
उत्कर्षी कश्यपर्षेर्वनवनिजयिनोऽर्कान्वयेऽस्मिन्नितश्री
वंशो विद्यावतंसोऽवमथिकुलमितश्यामलं प्रादुरासीत्
एतस्मान्मध्यराढाविततगुणगणो ग्रामणीः सज्जनानां
सम्भूतो रामनारायणधरणिसुरः शाकराढानिवासी॥ ५॥
तस्यात्मजेन जगदुर्गमकाव्यमार्गयाथात्म्यसम्भ्रमणलब्धमहादरेण।
रोपद्विपाश्वशशभृद्विमिते शकाब्दे श्रीप्रेमचन्द्रकविना विवृतिः
कृतेयम्॥ ६॥
काठिन्यमालिन्यनिवारणेन सुदर्शमादर्शमसौ चकार।
पुरस्कृतेऽस्मिन् प्रतिबिम्बमाप्तान् पश्यन्तु भावान् सुधियः सुखेन
॥ ७॥

शकाब्दाः १७८५। इं १८६३॥